रस... गुरूकुल कांगड़ी ...

संख्या-श्लोकः संख्या-श्लोकः

१. १ व्याकरणमहाभाष्यम्=व्या.म.भा.
२. ,, रसरत्नसमुच्चयः र.र.स.
३. ,, योगसूत्रम्
४. ,, गीता
५. ,, घेरण्डसंहिता = घे सं.
६. ,, भागवतम् = भा.
७. २ अमरकोषः = अ.
८. ४ रसार्णवः = र. अ.
९. ,, रसहृदयम् = र. हृ.
१०. ,, चरकः = च.
११. ६ अयुर्वेदप्रकाशः-आ.वे.प्र.
१२. ,, रसेन्द्रचिन्तामणिः.र.इ.चि
१३. ,, आनन्दकन्दः = आ. कं.
१४. ,, रसेश्वरदर्शनम्-र.इ.द.
१५. ,, गोरक्षसंहिता=गो.र.सं.
१६. ६ रसरत्नदीपिका
१७. ,, एडवर्ड हेलसकृतम्
१८. १७ रसहृदयटीका=र.हृ.टी:
१९. १८ रसोपनिषत् = र. ...
२०. २१ रसरत्नाकरः=र. ...
२१. २२ शाङ्गधरः = शा. ...
२२. २४-२६ रसेन्द्रचूड़ामणि ... र. इ. चू.
२३ २४-२६ रसतरङ्गिणी=र. त
२४. ,, ,, रसकौमुदी = र. कौ.
२५. २८ रसपद्धतिः = र. प.
२६. ३० राजनिघण्टुः = रा. नि.
२७. ३० रससारः = र. सा.
२८. ३८ मणिप्रभाटीका-म.प्र.टी.
२९. ४५ शक्त्यवतारः = श. अ.
३०. ५१ भारतीयरसायनसारः = भा. र. सा.
३१. ५६-५७ हेमचन्द्रः = हे. च.
३२ ६१ वैद्यकशब्दसिन्धुः.वै.श.सि
३३. ६२ रसप्रकाशसुधाकरः.र.प्र.सु
३४. ६६ आत्रेयः
३५. ६८ शाङ्गधरगूढ़ार्थदीपिका, शा. ध. गू. दी.
३६. ७४ पी. सी. रायः
३७. कूपीपक्वरसनिर्माण विज्ञानम्
३८. ८६ रसार्णवग्लोसरी, र.अ.ग्लो
३९. ... ...व्यम्
... ...द्धतिः-द. प.
... ...लिका-
... र.सं.क.
४३. ,, लोहसर्वस्वम् ।।लो. स.

संख्या-श्लोकः

४४. १६७ वसवराजीयम्
४५. ,, योगरत्नाकरः=यो.र.आ.
४६. १९३ रसायनसारः=र. सार
४७. १९४ CHEME STRY By KUMAR
४८. २०१ रुद्रयामलः=रु. या.
४९. ,, शङ्करनारायण देवगिरे
५०. ,, सिद्धभेषजमणिमाला= सि. भे. म. मा.
५१. २१३ गदनिग्रहः=ग. नि.
५२. २२४सिद्धान्तनिदानम्=सि.नि.
५३. २३५ इन्डिजिनस ड्रग्स्
५४. ,, वाग्भटः=वा. भ.
५५. २३८ र.र.स. चिन्तामणिटीका
५६. २५० काश्यपसंहिता
५७. २५७-२५८ रसजलनिधिः=र.ज
५८ २६८ अथर्ववेदः=अ. वे.
५९ २९४ पारदयोगशास्त्रम्= पा. यो. शा.
६०. ३२२ कैय्यदेवनिघण्टुः= कै. दे. नि.
६१. ३५२ चक्रदत्तः=च. द.
६२ ३५९ काकचण्डीश्वरकल्पतन्त्रम्

संख्या-श्लोकः

६३. ३६३ बृहत्संहिता
६४. ,, महाभारतम्
६५. ,, हरिदत्तशास्त्रिणः
६६. ,, वैशेषिक दर्शनम्
६७. १ ज्व. हेमाद्रिः
६८. २१३ ज्व. प्रत्यक्षशारीरम्
६९. १३२ ,, भाव प्रकाशः=भा.प्र.
७०. अतिसारः विश्वकोषः
७१. ७६-७९ ग्र. ज्वरपरिभाषा
७२. गोपालकृतटीका
७३. ६६ ग्र. रुद्रः
७४. १३४ ,, मेदिनीकोषः
७५. १४७ ,, विश्वः
७६. ३-४ अजीर्णे रसेन्द्रकल्पद्रुमः
७७. ८७ ,, र. त. टिप्पणी
७८. २०-२१ पाण्डौ वृन्द टी. व्या. कुसुमावली
७९. ८ रक्तपित्तो कपिञ्जलाधिकरणन्यायः
८०. ७ ,, रसराजसुन्दरः
८१. २० ,, बालबोधिनी
८२. ५ यक्ष्मणि, आढमल्लः
८३. १४ ,, याज्ञवल्क्यः
८४. ,, ,, नारदस्मृतिः

संख्या-श्लोकः संख्या श्लोकः

८५. २७ उन्मादे प्रतिसंस्कृत- ८८. ५८ चिकित्सारत्नाभरणम्
निदानचिकित्सा=प्र.सं.नि.चि. ८६ १८ गुल्मेभैज्यसारामृतसंहिता
८६. ५० वातव्याधौ-असरटीका ६०. २७-३३ काश्यपसंहिता
सरला भूमिका
८७. ५४ शूले-योगतरङ्गिणी, यो.त.

रसेन्द्रसारसंग्रहस्य मूले समागताः।

१. १ अ० ४३ नागार्जुनः १५. ६ मूत्रकृच्छ्रे-चरकः
२. १ ८१ चन्द्रिका कारः १६. ६ पित्तरोगे-काशिराजः
३. १५१-१५३ ,, धन्वन्तरिः १७. १८ अर्शसि-चन्द्रमा
४. १६० ,, शङ्करः १८ ३२ ,, त्रिपुरान्तकः
५. १६७ ,, शम्भुः १६ ३२ मन्थानभैरवः
६. २३६ ,, चन्द्रनाथः २०. ७८ अजीर्णे-वसुः
७. ७६ ज्वरे भैरवः २१. ८५ यक्ष्मणि-श्री नन्दीनाथः
८ ३२-३३ ग्रहण्यां-गहनानन्दनाथः २२. ६ उरुस्तम्भे-ईशानः
६. ६० ,, चक्रपाणिः २३. १३ आमवाते-विष्णुः
१०. ६६ ,, शिवः २४. २८ शूले-हरः
११. १३० ,, गहननाथः २५. ५ गुल्मे-नित्यनाथः
१२. ८४ महादेवः २६. ४४ वातव्याधौ-चतुर्भखः
१३. अपस्मारे २७ १०५ प्लीहि-सुरमणिः
उन्मादे-महेशः १५५ महेश्वरः २८. ६६ अश्वी (अश्विनी-कुमारः)
१४. १२ ब्रह्मणा २६. ३८ अम्लपित्ते-अगस्त्यमुनिः

---

# टीकाया आदर्शः

## महागन्धकस्य अतिसारेश्लोक. २२

रसगन्धकयोः प्रत्येकं कर्षं गृहीत्वा मसृणां कज्जलीं विधाय तां सम्प्रदायात् तण्डुलोदकेन जलेन वा पङ्कवत् कृत्वा लौहपात्रे जल-शोषणं यावत् स्वेदयित्वा, मतान्तरे पर्पटीं विधाय ततो जातीफलादीनां प्रत्येकं कर्षं चूर्णं दत्त्वा जलेन मर्दयित्वा यथोक्तमाना वटी विधेया सर्वाङ्गसुन्दरस्य।

यदि विशिष्टगुणाधानस्येच्छा तदा गोलं विधाय मुक्ताशुक्ति-सम्पुटे संस्थाप्य कोमलकदलीपत्रैरावेष्ट्य बहिः सर्वतोघनपङ्के-नालिप्य च पुनः मृत्कर्पटेन वेष्टयित्वा करीषाग्निमध्ये (त्रिंशदारण्यकोपलैरिति सम्प्रदायः) पुटपाकेन साधयेत्।

यदा च गोलस्य बहिरारक्तता गन्धकस्यामोदः पाकगन्धश्च प्रतीयते पुटपाकद्रव्याणीषद्भृष्टानि न च स्वगन्धास्वादहीनानि स्युः तदा वह्नेराकृष्य सम्पुटं विभिद्य तदवस्थायामेव षड्रक्तिप्रमाणा वटी विधेया महागन्धकस्य।

अत्र केचन-गुणवर्धनाय पुटपाकानन्तरं प्रसारणीपत्ररसेन वटीं कुर्वन्ति तद्रसानुपानेनैव प्रवाहिकायां ददते। अन्ये सिन्धुवारदलमेलाबीजं च प्रत्येकं कर्षमात्रया जातीफलादिना सह योजयन्ति ज्वरे च सिन्धुवारदलरसमरिचानुपानेन ददते। तदन्ये कर्षचतुर्थांशमहिफेनंदत्त्वा रक्तिमानां वटीं कुर्वन्ति प्रवाहिकायां चमत्कारोतीत्थमीषद्भ्रौलैरण्डतैलहरीतक्याद्यन्यत-मानुपानेन.........।

# खनिजपरीक्षा

मर्दनम्—पारदगन्धयोःकज्जलीकरणे चाकचक्ययुतनिर्यासवत्संयोगशीलो गुणोदयो मर्दनजो भवति, एवमन्यत्रापि पदार्थे मर्दनातिशयेन गुणोदयो भवति, यथा—अल्पमर्दितो मकरध्वजो नातिगुणाय विशेषतो मर्दितश्च सद्यः फलति—इति नाविदितं परीक्षकाणाम्। अतएव 'मर्दनं गुणवर्धन' मित्युच्यते।

आस्वादः—जले विलयनशीलखनिजानांकश्चिदास्वादो भवति। केनापि प्रसिद्धास्वादेन तस्य तुलना भवति यथा—तुत्थमम्लम्, नवसादरः कटु; सैन्धवः क्षारास्वादः, सोरकः शीतः, स्फटिका कषाया, टङ्कणः सक्षारमधुरास्वादः। रौप्यं शीतं कषायाम्लमिति। र. र. स ५-२६। एवं—ताम्रं तिक्तकषायकं च मधुरं.... साम्ल मिति तत्रैव। ५-४८।

ज्वालाः— आवर्तमाने कनके पीता तारे सिता प्रभा।
शुल्वे नीलनिभा तीक्ष्णे कृष्णवर्णा सुरेश्वरि !॥
वङ्गे ज्वाला कपोताभा नागे मलिनधूमका।
शैले तु धूसरा देवि आयसे कपिलप्रभा॥
अयस्कान्ते धूम्रवर्णा सस्यके लोहिता भवेत्।
वज्रे नानाविधा ज्वाला खसत्वे पांडुरप्रभा॥

र. अ. ४-४६-५१।

एवं गोरक्षसंहिताया ( अमुद्रित ) मपि—

पीते पीता भवेज्ज्वाला सिते चैव सिता भवेत्। इत्यादिना ज्वालया धातुपरीक्षणमुक्तम् । प.४-११३ । एवं पातञ्जलेऽपि लौह शास्त्रे ज्वालया धातुपरीक्षणमस्ति। सुधाया रक्ता, स्वर्जिक्षारयुतोपधातूनां पीता, यवक्षारयुतोपधातूनामीषन्नीला, इत्यादि ज्ञेयम्। मया—'खर्परे विद्रुते ज्वाला भवेन्नीला सिता यदि' इति वाक्यमाश्रित्यैव बहोः कालादनिश्चितः खर्परो निर्णीतः।

विशुद्ध धातुपरीक्षणे—

नविस्फुलिङ्गो न च बुद्बुदश्च<br>
यदा न रेखा पटलं न शब्दः।<br>
मूषागतं रत्नसमं स्थिरञ्च<br>
तदा विशुद्धं प्रवदन्ति लोहम्। र. अ. ४-५२।

द्रावकाः—गुञ्जा टङ्कण मधु घृत गुड़ाः। र. अ. ५-४१। रसपद्धतौ श्लो. ५१ टी.। लौकिकास्तु-त्रिक्षारगन्धलवण....मूत्रवर्गाणां कूपिका यन्त्रेण द्रवं निष्कास्य-अत्र दाहजल (तेजाब) विधानमुक्तम्। रसप्रदीपे च—शङ्खद्रावकरस उक्तः। यत्र शङ्खकपर्दादयो द्रवन्ति। रुद्रयामलस्य धातुकल्पे दाहजल ( गन्धक का तेजाव ) विधानं दृश्यते-'ताम्रदाहजलैर्योगे जायते तुत्थकं शुभ' मित्युक्तम्।

आवरणम्—जलतैल सम्मिश्रणेतैलविन्दवो जलोपरि पृथगेव सन्तरन्ति, तत्रानुमीयते तैलविन्दूनां परितः किमप्यावरणमदृश्यमस्ति, तत्र तैले क्षारयोगन तदावरणं नश्यति, क्षारयुतं तैलं जलेन मिलति। एवं पित्तेऽपि तददृश्यावरणनाशिनी शक्ति-

रस्ति । अत एव कान्तलोहलक्षणे 'पात्रे यस्य प्रसरति जले तैल-बिन्दुर्न' इत्युक्तम् ।

वर्णः—धातूनां खनिजावस्थायामन्यविधो भवति वर्णः, पतिते च सत्वे तदन्यविधः । गैरिकोद्भवत्वेऽपि-निचितं श्याम-लाङ्गमिति वाजिरस्य, र. र. स. ५-८० । कान्तलोहलक्षणे—

एकद्वित्रिचतुष्पञ्च सर्वतोमुखमेव तत् ।
पीतं कृष्णं तथा रक्तं त्रिवर्णं स्यात्पृथक् पृथक् ॥
भ्रामयेल्लोहजातं यत्तत्कांतं भ्रामकं मतम् ।
चुम्बयेच्चुम्बकं कान्तं कर्षयेत्कर्षकं तथा ॥
साक्षाद्यद् द्रावयेल्लोहं तत्कान्तं द्रावकं भवेत् ।
तद्रोमकान्तं स्फुटिताद्यतो रोमोद्गमो भवेत् ॥
कनिष्ठं स्यादेकमुखं मध्यं द्वित्रमुखं भवेत् ।
चतुष्पञ्चमुखं श्रेष्ठमुत्तमं सर्वतोमुखम् । ५-८५-९० ।

वङ्गस्य —धवलं मृदुलं स्निग्धं द्रुतद्रावं सगौरवम् ।
निःशब्दंखुरवङ्गं स्यान्मिश्रकं श्यामशुभ्रकम् । ५-१५४ ।

सुवर्णस्य —...तेजःपीतम् ... । ५-५ । एवं—तच्चतुर्दश-वर्णाढ्यम । ५-७ । क्वचित्—वर्णैःषोडशभिर्युतम् । ५-६ । इति तत्रैव । लाजवर्दस्य नीलः । गन्धालयोः पीतः मनः शिलाया नारङ्गः । ताम्रस्य-सितकृष्णारुणच्छायमिति म्लेछताम्रस्य सुस्निग्धं मृदुलं शोणं घनघातक्षमं गुरु, इति नैपालताम्रस्य । ५-४५- ४६ ।

रङ्गरजतयोः शुक्लः शुल्कतरश्च
घनं स्वच्छं गुरु स्निग्धं दाहे छेदे सितं मृदु

शंखाभं मसृणं स्फोटरहितं रजतं शुभम् ।५-२६ इत्यपितत्रैव ।

काठिन्यम्—घनपदार्थानां काठिन्यन्नाम प्रधानो गुणः । सर्वेभ्यः कठिनपदार्थेभ्यो वज्रं कठिनतमम् । नातःपरंकाठिन्यं कस्याप्यस्ति-अतो वज्रस्य काठिन्यम्-१० परिगण्यते व्यवहाराय । काठिन्यपरीक्षा च-पदार्थानां परस्परं घर्षणेन, यो घृष्यते सोऽल्पकठिनः । यो घर्षति स तदपेक्षया कठिनः । सैन्धवे श्वेताञ्जने च नखाकर्षणेन रेखा जायते, वैक्रान्ते च छुरिकया । कुरुविन्दः पुष्परागं विकृन्तयति न च हीरकमिति—विकृन्तयति लौहानि तेन वैक्रान्तकः स्मृतः । र. अ. ६-१२६ । पुष्परागस्य हीरकस्य च परस्परंभेदो नवाङ्केन वर्ण्यतेऽतः कुरुविन्दस्य काठिन्यं नव भवति ।

भङ्गः—धातवोघनघातेनावश्यमेव विशिष्टक्रमेण विदीर्यन्ते । 'लोहाघातेऽप्यभङ्गात्मधारं कालायसं मतम्' । र. र. स. ५-८१ । केचन एकत स्तदन्ये-उभयत स्ततोऽन्ये च तिसृषु दिक्षु, विदारण-दिगपि पृथक् पृथगेव विशिष्टप्रकारा भवति, केचन सरलतया विदीर्यन्ते, यथाऽभ्रपत्राणि, विदीर्णभागश्च कस्यचिन्मृदुश्चाक-चक्ययुतः । कस्यचित्कठिनः, क्वचिद्विदीर्णं न दृश्यते, तदन्यत्र स्पष्टं लक्ष्यते क्वचिद्विदीर्णमुच्चावचम् ।

तद्रोमकान्तंस्फुटिताद्यतो रोमोद्गमो भवेत् । र. र. स. ५-८६ । रोमकान्ते विदीर्णे रोमोद्गमो भवति ।

रौप्यं घनं स्वच्छं गुरु स्निग्धं दाहे छेदे सितं मृदु ।
शङ्खाभं मसृणं स्फोटरहितं रजतं शुभम् ॥

त्याज्यरौप्यञ्च—

दाहे रक्तं च पीतं च कृष्णं रूक्षं स्फुटं लघु।
स्थूलाङ्गं कर्कशाङ्गं च रजतं त्याज्यमष्टधा ॥

तीक्ष्णलोहभेद-खरलक्षणे—

परुषं पोगरोन्मुक्तं भङ्गे पारदवच्छविः।
नमने भंगुरं यत्तत्खरलोहमुदाहृतम् ॥ ५-७६।

पोगरोऽलकवत्कुटिलरेखा। 'छेदने चातिपरुषमिति' हृन्नालस्य। र. र. स. ५-७८।

धातूनां विदारणादपि परीक्षा भवति—कणरूपस्थितेर्विदारणस्य च परस्परमस्तिसम्बन्धः। यशदचपलादीनांस्फटिकमयभङ्गो भवति, कस्यचित्कणरूपः, तदन्येषांरेखारूपः, ततोन्येषां कौशिकरूपः, रजतस्य शङ्खाभः।

गन्धः—केषांचिद्गन्धेनापि परीक्षणं भवति यथा-शिलाजतु गोमूत्रगन्धि। शिलाजतुखनिजो घनेन ताड़ितो घनमुखेऽपि तस्य गन्धः प्रतीयते। लौहेऽपि कश्चिद्विशिष्टो गन्धोऽस्ति। सीसके पित्तले च पूतिगन्धः। रङ्गरजतयोर्भेदश्च रजते न गन्धः रङ्गे गन्धोऽस्ति। एवं गौरीपाषाणखनिजे घनेन ताडिते रसोनगन्ध उदेति।

द्रुतिः—केचन खनिजा उष्णीकृतास्त्वरितं द्रवन्ते, ततोऽन्ये ऽधिकतापं सहन्ते। एवं द्रवणतरतमकालेन खनिजपरीक्षा भवति, मुण्डलौहं द्रुतद्रावम् ५-७१। द्रुतद्रावम् ५-१५४ वङ्गस्य।

द्रुतद्रावं ५-१७१ नागस्य। विशिष्टगुरुत्वं द्रवणाङ्काश्च सुवर्ण-प्रकरणतो ज्ञेयाः।

स्पर्शः—रौप्यं शीतम्। र. र. स. ५-२८।

कोकिलाग्नौपरीक्षा—प्रलम्बकाष्ठकोकिलस्यैकस्मिन्मुखे खातं विधाय तत्र परीक्षणीयद्रव्यचूर्णं निधाय नलिकया ज्वाला देया। ततः केषांचिद्द्रव्याणां स्वतः सत्वं पतति, केचन प्राणवायुना मिलन्ति ततोऽन्ये उड्डीयन्ते, कुत्राचित्परिचययोग्यो गन्धो निरेति। एवं गन्धकयुक्तखनिजे गन्धकज्वलनवद्गन्धो निरेति, गौरीपाषाणखनिजतो लशुनगन्धः समायाति, केषांचित्सत्वं पतति परं तत्सत्वं त्वरितं प्राणवायुसंयुतं कोकिलोपरि-लग्नं भवति, यथा यशदखनिजस्य सत्वमुष्णं पीतवर्णं तदेव शीतं शुक्लं भवति। कस्यचिद्गुलिका प्राणवायुयुतोपधातुश्च सहैव दृश्येते यथा—सीसकस्य पीतःस्तरो गुलिका च भवति। चपलस्य स्तरः पीतः सत्वं च नारङ्गवर्णं भवति। सुवर्णरजत ताम्राणां च खनिजाद्घनघातसहं सत्वं पतति नात्र सत्वस्तरो दृश्यते।

स्वर्जिकायोगपरीक्षा—येषां सत्वं केवलाग्निना न पतति तैः सह स्वर्जिकामिश्रणं कृत्वा नलिकाज्वालाग्नौ सत्वं तेषां पतति। यथा-वङ्गखनिजाद्विशेषपरिश्रमेण सत्वं पतति।

गन्धस्वर्जिका—लवणानि स्वर्जिकया सह कोकिलाग्नौ ध्मातानि गन्धस्वर्जिका भवति सा च जलेन घृष्टा रजतपत्रे कृष्णं चिन्हं करोति।

स्वर्जिसोरकपरीक्षा—राजपट्टखनिजस्य सोरकक्षारयोगेन-धमनात् प्रथमं हरिद्वर्णस्तरः समुदेति सुराक्षारे प्राणवायोराधिक्यात् ।

काचनलिकाग्नौ परीक्षा—परीक्षणीयखनिजं काचनलिकायामापूर्य नलिकाज्वालयोष्णीकरणात्खनिजे जलं चे त्तन्नलिकोर्ध्व-भागे वसति, गन्धसोमलयोगश्चेत्तयोः परीक्षणयोग्यस्तरो वसति । एवं खनिजे पारदसन्देहे, ईषद् स्वर्जिकोपयोगः, सोमल-संशये कोकिलचूर्णयोगः । अत्र खनिजगन्धः स्पष्टः प्रतीयते ।

सौभाग्यपरीक्षाः—सितस्वर्णसूत्राणां टङ्कणस्थापनयोग्यं जालं विधाय तत्र च टङ्कणं निधायाग्नौ तपनात्स्वच्छा पारदर्शिका मणिरिव गुलिका भवति सा च परीक्षणीयशुद्धधातुखनिजपिहितोष्णीकृता विशिष्टं वर्णं ददाति, यथा ताम्रस्य मसीकरण-ज्वालायां नीला, सत्वपातनज्वालायां रक्ता ।

भारपरीक्षाः—परस्परं भारतुलनया लोहानां परीक्षा भवति । यथा-लोहस्यभारः ७.७ । सुवर्णस्य १६.४ । परस्परं मिश्रिताश्चे-द्धातवो जलतुलया तेषां माननिश्चयो भवति, परीक्षा चैषा तन्त्रा-न्तरेभ्यो ज्ञेया ।

सोदय्यंनियमस्तु—नागो वङ्गः श्लो. १०. इति— पारददोषेषु व्याख्यातः ।

लोहाः—पृथिव्यां स्वत एवोत्पद्यन्ते, तदा ते प्रायो स्फटिक ( कण ) रूपा भवन्ति । यथा-सुवर्ण,रजत, सितस्वर्णानि, तत्रैषां कणानां नियमित आकारो भवति, षट्फलकोऽष्टफलको वा ।

यशदचपलादीनां षट्कोणः। त्वरितद्रवणशीलधातूनां कणा द्रुताः शीतीकृताः परस्परं मिलन्ति, यथा सीसकवङ्गादेः। विस्तरस्त्वाकरेभ्यो ज्ञेयः।

लोहन्नामप्राणवायुसंयोगेनाऽम्लत्वनाशनसमर्थस्वभावं मूल द्रव्यमेवमपारदर्शकत्वविद्युत्तापवहत्वे सति उच्चत्वविशिष्ट गुरुत्ववत्वचाकचक्ययुततत्वं चेति।

प्रतिसंस्कृत निदानस्य तृतीयभागे विषमज्वरनिदानं चिकित्सा च विशेषतः पुराण विषमज्वरस्य क्रमिक चिकित्सा स्वानुभूता नातिचिराय प्रकाशमेष्यति। तथा—

गोरक्षसंहिताऽपि प्रकाशमेष्यति।

# रसेन्द्रसारसंग्रहः ।

## प्रथमोऽध्यायः ।

रसेन्द्रमिव निःशेष-जराव्याधिविनाशनम् ।
प्रणमामि गुरुं भक्त्या शङ्करं योगसाधनम् ॥ १ ॥

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि अध्येतारश्च सिद्धार्था यथा स्युरिति भ्वादिसूत्रे व्याकरण महाभाष्योक्ते रसेन्द्रसारसंग्रहं चिकीर्षुर्ग्रन्थकृदादौ मङ्गलं निबध्नाति—

रसेन्द्रमिति—रस-आस्वादनस्नेहनयोः । चुरादिः । रस्यत इति रसः । 'रसनात्सर्वधातूनां रस इत्यभिधीयते' रसरत्न समुच्चयः अ० १. श्लोक ७७ । रसःपारदः । इदि-परमैश्वर्ये । भ्वादिः । इन्दतीति-इन्द्रः । रसानामिन्द्रो रसेन्द्रस्तमिव । निःशेषं = शेष रहितं यथास्यात्तथा । जराव्याधिविनाशनं = जरा च व्याधिश्च जराव्याधी, जरैव व्याधिर्जराव्याधिर्वा । जीर्यत अनयेति जरा, विविधा आधयो ऽस्माद् व्याधिः—उपसर्गे घोः

कि: ३।३।६२। तस्य जराव्याधे रोगस्य विनाशनं दूरीकरणम् हठ योगादिना—तथा च-घेरण्डसंहितायाम्—

'खेचरी मुद्रया न च रोगो जरामृत्युर्देवदेहः स जायते।' रसायनादिभिर्वा । योगसाधनमिति—योगश्चित्तवृत्तिनिरोधः । योगा मृत्युञ्जयादयो रसयोगाश्च 'योगः कर्मसु कौशलमिति-भगवद् गीता। कर्मसु चिकित्साकर्मसु कौशलं=पाटवं वा तेषां साधनं साध्यते अनेनेति साध्नोतेर्भावकर्मकरणादौ ल्युटि-अनादेशे च साधनम्। साधनमुपायदर्शकं निवर्तनं च। शङ्कर-मिति—शं शुभं करोतीति शङ्करस्तं शङ्करंशिवम्। 'विद्याकामस्तु गिरिश' मिति भागवतोक्तेः। गृणात्युपदिशतीति गुरुः। तं गुरुमा-चार्यम्। प्रणमामि नमस्करोमि। नतिः स्वावधिकोत्कर्षप्रकारक ज्ञानानुकूलव्यापाररूपा ॥१॥

भाषा—रसशास्त्र के आदि प्रवर्त्तक श्री शिव जी को नमस्कार रूप शिष्टाचार प्राप्त मङ्गलाचरण करते हैं। जैसे पारा वृद्धावस्था रूप रोग को दूर करता है, या वृद्धावस्था और रोगों का नाश करता है इस ही प्रकार योग ( चित्तवृत्ति निरोध ) को सिद्ध करने वाले या योग रसों के योग ( मृत्युञ्जयादि ) के साधन कल्याण करने वाले शिव जी को तथा अपने गुरु को भी प्रेम पूर्वक नमस्कार करता हूँ ॥ १ ॥

नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
श्रील-गोपालकृष्णेन क्रियते रससंग्रहः ॥ २ ॥

शङ्करं प्रणम्य गुरुं प्रणमति—नत्वेति-गुरोः पदद्वन्द्वं=पद-

युगलं यद्यपि—'स्त्री पुंसोर्मिथुनं द्वन्द्व' मित्यमराद् द्वन्द्व शब्दो-मिथुनेऽर्थे दृश्यते, तथाप्यत्र गुरुपदशब्दसाहचर्य्याद्युगलेऽर्थे-एव लक्ष्यते। अनेकशो=बहूनि तन्त्राणि=शास्त्राणि दृष्ट्वा ऽवलोक्य श्रियं लातीति श्रीलः। आतो ऽनुपसर्गेकः (३-२-३) स चासौ गोपालकृष्णश्चेति तेन रससंग्रहः,=रसानां=पारदयोगानां संग्रहः क्रियते। अनेकशास्तन्त्राणि दृष्ट्वा रससंग्रहः क्रियते—अनेन निबध्यमान ग्रन्थे स्वकपोलकल्पनानिरासः कृतः॥ २॥

भाषा--गुरु के चरणों में प्रणाम कर तथा अनेक शास्त्रों को देख मैं गोपाल कृष्ण रसों का संग्रह करता हूँ॥ २॥

**सिद्धयोगाश्च ये केचित् कृतिसाध्या भवन्ति हि।**
**एकीकृत्य तु ते सर्वे लिख्यन्ते यत्नतो मया॥ ३॥**

सिद्धयोगा इति—हि=निश्चयेन ये केचित कृतिसाध्याः=निर्मातुं शक्याः सिद्धानां=प्रसिद्धवैद्यानां, योगाः=प्रयोगाः, सिद्धाः=प्रसिद्ध। वा योगाः; झटिति निश्चितगुणकरत्वेन, ते सर्वे यत्नतः; एकीकृत्य=संगृह्य मया लिख्यन्ते, कृतिसाध्याः सिद्धयोगाः इति पदद्वयेन रससंग्रह इति पूर्वोक्तपदस्य पुनरुक्तिनिरासः॥३॥

भाषा--निश्चित गुण कर जो योग बनाये भी जा सकते हैं, उन सब को यत्न से एकत्र कर मैं यहां लिखता हूँ॥ ३॥

तत्र रसप्राधान्यमाह—

**अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः।**
**क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः॥ ४॥**

प्रायः सर्वेषां काष्ठौषधीनां सर्वत्र दुर्लभत्वात, कटुतिक्तास्वाद-

वत्वात् , मात्राधिक्यात् ,सुकुमारवृद्धबालवनितादीनामरुचिकरत्वात् , बहुकालमविकृताऽनवस्थानाच्च श्लोकत्रयेण रसप्रयोगाणां सर्वौषधेभ्यः श्रेष्ठतां विवृण्वन्नाह्-अल्पमात्रेति–अल्पया मात्रया, उपयोगो व्यवहारो यस्य तद्भावस्तत्वं तस्मात् । अरुचेरप्रसङ्गत इति स्वादहीनत्वादल्पमानत्वादरुचेरप्रसङ्गो-ऽनवसरः । क्षिप्रमौषधान्तरापेक्षया त्वरितम्—आरोग्यदायित्वात्—रुज् हिंसायाम् , रुज्यते, अनेन रोगः—'रोग व्याधिगदामयाः' इत्यमरः । न रोगो ऽरोगः। अरोगस्य भावः कर्म वा, आरोग्यम् । तद्ददातीति तच्छीलमारोग्यदायी तस्य भाव-स्तस्मात् समूलव्याधिघातकत्वा दित्यर्थः।

'अचिराज्जायते देवि शरीर मजरामर मिति रसार्णवोक्तेः ।' औषधेभ्यः—'वैद्यो व्याधिं हरेद्येन, तद्द्रव्यं प्रोक्तमौषधम्'। रसः पारदः। काष्ठौषध्यो नागे नागो वङ्गे ऽथ वङ्गमपि शुल्वे शुल्वं तारे तारं कनके कनकं च लीयते सूते। इति रसहृदयोक्तेः ( अ० १. श्लोक ४१. ) सर्वौषधीनां रसे लीनत्वाभिधानात् । रसनात्सर्वधातूनां रस इत्युक्तेश्च ॥ ४ ॥

भाषा--छोटी मात्रा में व्यवहार तथा स्वाद हीन होने से, अरुचि कर न होनें जल्दी रोग को नाश कर होने से अन्य औषधों की अपेक्षा पारा उत्तम है ॥ ४ ॥

साध्येषु भेषजं सर्वमीरितं तत्ववेदिना ।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ॥५॥

कारणान्तरमाह—साध्येष्विति—तत्ववेदिना व्याधेः साध्यासाध्यनिदानज्ञानवता । साध्येषु साधयितुं शक्येषु रोगेष्विति

शेषः । सर्वं भेषजमीरितं निर्दिष्टम् । 'साधनं नत्वसाध्यानां व्याधीनामुपदिश्यत' इत्युक्तेः । रसश्च—

'भक्षणात्परमेशानि ! हन्ति तापत्रयं रसः' इति रसार्णवोक्तेः। असाध्येष्वपि दृष्टारिष्टेष्वपि दातव्यो ऽतो रसः श्रेष्ठ उच्यते ॥५॥

भाषा—निदानज्ञ साध्य रोगों में ही सब औषधों का प्रयोग उचित समझते हैं पारद के योग असाध्य रोगों में भी दिये जाते हैं अतएव पारा सब से उत्तम है ॥ ५ ॥

हतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः ।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥६॥

अन्यदपि । हत इति रस इत्यनुवर्त्तते हतो मारितो जर व्याधिं=जरामकालवलीपलित खालित्यरूपामेव व्याधिरोगं हन्ति-। तथा हि—अल्पे वयसि पलितं केशपतनं, श्लथत्वं कृमिव्याप्तत्वं वा दन्तानामानाहः, नातिश्रमे क्लान्तता, क्लीवता, शुक्रपतनं, स्त्रीणांच प्रथमतुर्दर्शनविलम्बश्चेत्यादीनि लक्षणानि भवन्ति जराया श्चुल्लिकाग्रन्थिरसस्याल्पस्रवणात । मकरध्वज सेवनाच्च भवति तत् स्रवणमिति निवर्त्तन्ते तानि । उक्तंच रसार्णवे—

'अचिराज्जायते देवि ! शरीरमजरामरम् ।
मनसश्च समाधानं रसयोगादवाप्यते' ।१-२१।

मूर्छितः=मर्दनादिष्ट भैषज्यै र्नष्टपिष्टत्वकारकम् तन्मूर्च्छनम्, कज्जलाभो यदा सूतोविहाय घनचापलम् मूर्छितस्तु तदा ज्ञेयो नाना वर्णोऽपि च क्वचिदिति चायुर्वेदप्रकाशः।३१ २।

नानावर्णो भवेत्सूतो विहाय घनचापलम् ।
लक्षणं दृश्यते यस्य मूर्च्छितं तं वदन्ति हि ॥

इति रसेश्वर दर्शनम् ॥

अव्यभिचरितव्याधिघातकत्वं मूर्च्छनेति रसेन्द्रचिन्तामणिः।२-१। सूक्ष्मदर्शकयन्त्रेणापि पारदकणानामदृश्यत्वमिति, अन्ये । व्याधिघातकः=व्याधीनां घातको हन्ता, बद्धः='जारयेत्सर्वरत्नानि बद्धः खेचरतां नयेत्' । र.अ.११।१५१ 'कोट्यायुर्जीवितं तस्य खेचरत्वं च लभ्यते'। आनन्दकन्दः २३-४७४। खेचरत्वाणिमाद्यन्तु येन बद्धस्तु सूतकः । गोरक्षसंहिता १-५१। खेचरतां=चरतीति चरः पचाद्यच् । खे, आकाशे चरः, हलदन्तादिति सप्तम्या अलुक् । तस्य भावस्तत्त्वं ताम् । धत्ते=करोति, अतः सूतादन्यः कृपाकरः=दयाकरः, कः ! न कोप्यस्तीत्यर्थः। पारदस्य विशेष महिमा तु-गोरक्ष संहिताप्रथम पटले रसरत्नसमुच्चय प्रथमाध्याये च द्रष्टव्यः ।

रसो वै सः रसं ह्येवाऽयं लब्ध्वानन्दो भवतीति. र. इ. द. । अनेन रसस्येश्वरत्वं दर्शितम् ॥ ६ ॥

भाषा—पारद भस्म वृद्धावस्था रूप व्याधि को दूर करता है । मूर्च्छित (पर्पटी) पारद रोग को नाश करता है । बद्ध पारद की गोली मुख में रखने से आकाशचारी होता है । अतः पारे से अधिक गुणकर कौन औषध है ॥६॥

अथ रसपर्य्यायमाह

**रसेन्द्रः पारदः सूतः सूतराजश्च सूतकः ।**
**शिवतेजो रसः सप्त नामान्येवं रसस्य तु ॥ ७ ॥**

शास्त्रे व्यवहारार्थं श्लोकद्वयेन रसस्य पर्यायानाह-रसेन्द्र इति। रसेन्द्रो रसाना मिन्द्रः, पारदः = रोगपङ्काब्धिमग्नानां पारदानात्। सूतः = देहलोहमयीं सिद्धिं सूते इति सूतः ॥७॥

पारे के सात नाम हैं—रसेन्द्र, पारद, सूत, सूतराज, सूतक, शिवतेज और रस ॥ ७ ॥

मतान्तरम्—

**शिवबीजं रसः सूतः पारदश्च रसेन्द्रकः।**
**एतानि रसनामानि तथाऽन्यानि यथा शिवे ॥८॥**

तथा ऽन्यानि यथा शिव इति-ये शब्दाः शिवे महादेवे वर्त्तन्ते ते पारदेऽपि बोध्या इत्यर्थः। यथा महेशः—इत्यादिः। सम्प्रति रसः = चीन, स्पेन-अमेरिकातःसमायाति। स्पेनदेशे गम्भीर कूपेभ्योऽस्य निष्पत्तिर्भवति। जलापेक्षया पारदस्य घनता १३½। अतएवास्य विशिष्ट गुरुत्वम् १३।५६।३५७° तापमात्रायामुत्पतति ॥ ॥ ८ ॥

भा० शिवबीज, रस,सूत, पारद, रसेन्द्रक; ये नाम पारे के हैं, तथा जितने नाम शिव के हैं वे सब पारे के भी वाचक हैं ॥८॥

अथ रसलक्षणम्—

**अन्तः सुनीलो बहिरुज्ज्वलो यो मध्याह्नसूर्यप्रतिमप्रकाशः। शस्तोऽथ धूम्रः परिपाण्डुरश्च चित्रो न योज्यो रसकर्मसिद्धौ ॥ ९ ॥**

रसस्य* परीक्षणमाह = रसरत्नप्रदीपिकायाः—रसकामधेनौ -अन्तरिति-अन्तर्मध्ये सुनीलः=शोभननीलवर्णः। बहि = र्बाह्ये, उज्वलो रजत इव श्वेतश्चाकचक्यवान्। अयं सर्व लोहेषु एकाकी द्रवरूपो गन्धास्वादहीनश्च ।३५७° तापमात्रया विरूपो धूलिकावदुड्डीयते, मुक्तवाते च स्थितः न याति विकृतिं प्रवाते तप्तश्च रक्तवर्णो भवति, अत्युष्णतायां तद्रक्तवर्णं नश्यति, हरिद्वायुना, गन्धकेन, विष्णुपदामृतेन चास्य विशिष्टा प्रीतिः। पत्रे चालितश्च न तत्र लगति न वा विकरोति। ३६ सेन्टिग्रेडतापे शीतलीकृतो घनवर्द्धनीयःकर्तन योग्यः सूत्रनिर्माणयोग्यश्च कठिनो भवति। मध्याह्नसूर्यप्रतिमप्रकाशः = मध्याह्न सूर्यस्य प्रतिमा उपमानं प्रकाशः, उज्ज्वलता यस्य सः, एतल्लक्षणलक्षितः पारदः शस्तः शोधनादावित्यर्थः। अथ इति शुद्धपारद लक्षणानन्तरं धूम्रः कृष्णमिश्रलोहितः परिपाण्डुरः = परि सर्वतः पाण्डुरः पीत सम्वलितशुक्लः। चात् चाकचक्य रहितः पत्रेचालितश्चतत्ररेखां करोति, इत्यादि ज्ञेयम्। चित्रः=नानावर्ण युतोऽनेक धातुसंसर्गादित्यर्थः ॥ ६ ॥

भा० जो अन्दर से सुन्दर नीली आभा वाला और बाहर से उज्ज्वल हो, दोपहर के सूर्य के समान दीप्तियुक्त हो, वह पारा रसकर्म की सिद्धि में उत्तम माना गया है परन्तु जो पारा धुंआ के से रंग वाला वा सर्वतः पीलापन लिये श्वेत रंग का वा चितकबरे रंग का हो उसे रसकर्म में कभी न लेना चाहिये॥ ६ ॥

---

* श्रूयते—Edward Halse कृतं पारद खनिज विषये गवेषणायुतं पुस्तक मस्तीति।

अथ रसदोषानाह—

**नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः ।**
**असह्याग्निर्महादोषा निसर्गात्पारदे स्थिताः ॥१०॥**

रसस्य दोषानाह-नागइति नागः सीसकः । निसर्गाः स्वाभाविकाः अत्रायंभावः—विशिष्ट भूगर्भ क्रियया खनिजा एकत्र समुद्भवन्ति, यथा-यत्रसुवर्णं समुद्भवति तत्र नियमेन सित स्वर्णं रजतं च । यत्र नागः तत्र रजतं, यत्र ताम्रं तत्र गन्धः, यत्र सूतः तत्र गन्ध नाग वङ्ग चपलादयः, एवं सुवर्णं सितस्वर्ण* रजतानाम्, रजतनागयोश्च परस्परमेकखनि प्रभवत्वान्नैसर्गिको भ्रातृभावः ॥ १० ॥

सीसा, वंग, मल, अग्निगुण, चञ्चलता, विष, गिरि, असह्याग्नि ये आठ महादोष पारे में स्वाभाविक होते हैं ॥ १० ॥

**व्रणं कुष्ठं तथा जाड्यं दाहं वीर्यस्य नाशनम् ।**
**मरणं जडतां स्फोटं कुर्वन्त्येते क्रमान्नृणाम् ॥ ११ ॥**

अशोधित नागादि सम्पर्कदूषित पारद प्रयोगे दोषानाह-व्रणमिति—जाड्यमिति जल् अपवारणे चुरादिः । जलयतीति जलः पचाद्यच् । डलयो श्चैकत्वस्मरणाज्जडइति मोहादिष्टानिष्ट ज्ञानरहितो जडइति कथ्यते तस्य भावः कर्म वा जाड्यम् । वीर्यस्य नाशनमनियतवीर्यच्युतिः । नाग वङ्गादि द्वित्रेषु मिलितेषु व्रणादयोऽपि तथैव सम्भवेयुः । अत्र विशेषस्तु—आनन्दकन्द २ उल्लासे ४२ श्लोकतो ज्ञेयः ॥११॥

---

* प्लाटिनम् ।

यदि अशुद्ध पारा खाया जाय तो पारे में जो सीसा मिला हुआ है उस दोष से शरीर में व्रण हो जाते हैं, वंग-दोष से कुष्ठ, मल-दोष से जड़ता, अग्नि-दोष से दाह, चञ्चलता-दोष से वीर्य-नाश, विष-दोष से मृत्यु, गिरि-दोष से जड़ता, असह्याग्नि-दोष से फोड़े आदि रोग होते हैं ।।११।।

**तस्माद्रसस्य संशुद्धिं विदध्याद्भिषजां वरः ।**
**शुद्धोऽयममृतः साक्षाद्दोषयुक्तो रसो विषम् ।। १२ ।।**

**दोषहीनो यदा सूतस्तदा मृत्युज्वरापहः ।**
**शुद्धोऽयममृतः साक्षाद् दोषयुक्तो रसो विषम् ।। १३ ।।**

तस्मादिति—अशुद्धपारदसेवनजनितव्रणादिदोषनिवृत्यर्थं रसस्य शुद्धिःकार्येत्यर्थः। भिषजाम्वरः = रसशोधनेनिपुणः । अयं-रसः शुद्धःनागवङ्गादिदोषहीनः साक्षादमृतइति—

'जरारुजं तथा मृत्युं जयेन्नैवात्र संशयः' गोरक्षसंहिता प. १ श्लो० ११० ।

अचिराज्जायते देवि शरीरमजरामरम् । मनसश्च समाधानं रसयोगादवाप्यते । र. अ.प.१-२१.।

इत्यादिविशेषस्त्वत्र गोरक्षसंहिता प्रथम पटल, रसार्णव प्रथम पटलादिभ्यो ज्ञेयः ।

दोषयुक्तः=नागादि दोषयुतपर्पट्यादिसप्तकञ्चुकयुतश्च, विषं साक्षाद्विषमित्यर्थः ।।१२-१३।।

अतएव पारे की अच्छीप्रकार शुद्धि करना सुवैद्य का कर्त्तव्य

है। शुद्ध पारा साक्षात् अमृत ही है और यदि अशुद्ध हो तो वही विष के समान है ॥ १२ ॥

पारा जब दोषों से रहित होता है तब वह मृत्यु और रोगों को दूर करता है। शुद्ध साक्षात् अमृत है और दोषयुक्त विष है ॥ १३ ॥

अथ रसशोधनम्—

अथातः संप्रवक्ष्यामि पारदस्य विशोधनम् ।
रसो ग्राह्यः सुनक्षत्रे पलानां शतमात्रकम् ॥
पञ्चाशत् पञ्चविंशद्वा दश पञ्चैकमेव वा ।
पलाद्धीनो न कर्त्तव्यो रससंस्कार उत्तमः ॥ १४ ॥

मतान्तरम्—

शतं पञ्चाशतं वापि पञ्चविंशद्दशैव च ।
पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च ॥ १५ ॥
कर्षान्न्यूनो न कर्त्तव्यो रससंस्कार उत्तमः ।
प्रयोगेषु च सर्वेषु यथालाभं प्रकल्पयेत् ॥ १६ ॥

रसशोधने-दीक्षादिविधा न न्तु- आनन्दकन्दतृतीयोल्लासतो ज्ञेयम। सुनक्षत्र इति पुण्ये तिथौ मुहूर्त्ते च लग्ने सौम्य ग्रहे क्षिते स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः। इत्यादिः र. अ. प. २ श्लो० ४८ तो ज्ञेयम्। पलानां शतमात्रकमिति—इतोऽधिकमपि सत्यावश्यके ग्राह्यमेव। कर्षान्न्यून इति ततो न्यूनस्य संस्कारकरणे

अल्पावशिष्टस्य सूतस्य न कार्यकारिता स्यात् । यथालाभं प्रयोजनानुरूपम् ।। १४-१६ ।।

अब पारे की शोधन-विधि कहते हैं—शुभ नक्षत्र में सौ पल, पचास पल, पच्चीस पल, दस पल वा पांच पल पारा ले । अथवा एक पल ही ले । पल से कम पारे का शोधन करना उत्तम नहीं होता।। १४ ।।

सौ पल, पचास पल, पच्चीस पल, दश पल पांच, पल, एक पल, आधा पल वा एक कर्ष । एक कर्ष से कम पारे का संस्कार करना उत्तम नहीं । औषधप्रयोगों में जितना पारा लिखा हो उतना शुद्ध पारा डाले ।। १५-१६ ।।

शुभेऽह्नि विष्णुं परिचिन्त्य कुर्यात् सम्यक् कुमारीवटुकार्च्चनञ्च । सुलौहपाषाणसमुद्भवेऽस्मिन् दृढे च वेदाङ्गुलिगर्भमात्रे ।। १७ ।।

सुतप्तखल्ले निजमन्त्रयुक्तां विधाय रक्षां स्थिरसारबुद्धिः । अनन्यचित्तः शिवभक्तियुक्तःसमाचरेत् कर्म रसस्य तज्ज्ञः १८

शुभऽह्नीति—सुलौहपाषाण समुद्भव इति शोभन लौहजे शोभन पाषणजे चेत्यर्थः । ताम्रजं कान्तजंवापि खल्वन्तु स्वर्ण लेखितम् । आ. कन्दः ४-१० ।

खल्वयोग्या शिला नीला श्यामा स्निग्धा दृढ़ा गुरुः । षोडषांगुलिकोत्सेधा नवाङ्गलिर्कविस्तरा । उत्सेधेन नवांगुलः खलुकला तुल्यांगुला यामवान् । विस्तरेण दशाङ्गुलोऽथ मुनिभि-

निम्नस्तथैवाङ्गुलैः । पाल्यां द्व्यङ्गुल विस्तरश्च मसृणोऽतीवार्ध चन्द्रोपमो घर्षो द्वादशकाङ्गुलश्चतद्यं खल्वो मतो मर्दने ।

र० हृ० टी० २-४

निजमन्त्रयुक्तामिति अघोरमन्त्रयुक्ताम् । स्थिरसार बुद्धिरिति–अज्ञानाद्वा निरारम्भात तथा चित्तविपर्ययात् । अश्रद्दधानात् शास्त्रार्थे दारिद्र्यादप्रतिश्रयात ।

औषधानामलाभाच्च दैवतानां च विघ्नतः।....असहायाद-सङ्गतात्। सन्तोषादप्यविश्वासात इन्द्रियाणां प्रसङ्गतः ।

रसं रसायनं मन्त्रं........न सिद्धेत्कारणैरेभिर्यदन्यच्च क्रिया-न्तरम् । रसोपनिषत १६ अ० २८५-२८६ । इति रसशोधनं स्थिरबुद्धिना विधेयमिति भावः ॥ १७-१८ ॥

शुभ दिन में प्रातःकाल परमात्मा का चिन्तन कर कुमारी और बालक की पूजा कर उत्तम लौह के या पत्थर के बने अन्दर से चार अंगुल गहरे, दृढ़, तपे हुए खरल में मन्त्र के सहित रक्षा कर स्थिर एवं उत्तम बुद्धि वाला विद्वान् वैद्य शिव-परमात्मा में भक्ति रखता हुआ एकाग्रमन हो पारे के कर्म आरम्भ करे ॥ १७–१८ ॥

तप्तखल्वलक्षणम्—

अजाशकृत् तुषाग्निञ्च भूगर्त्ते त्रितयं क्षिपेत् ।
तस्योपरि स्थितं खल्वं तप्तखल्वमिति स्मृतम् ॥१९॥

तप्तखल्व लक्षणे—अजाशकृत् , तुषा–धान्यादितुषा, अग्नि-श्चेति त्रयं, भूगर्त्ते भूमौ निर्मिते खाते (र०इ०चि०अ०३-८६)॥१९॥

## तप्तखल्वयन्त्रम्

बकरी की मींगनें, तुष और अग्नि इन तीनों को पृथ्वी में छोटा गढ़ा खरल के अनुसार खोद कर डाल दे। आग लग जाने पर उस पर खरल रख दे। इसे ही तप्तखल्ल कहते हैं ॥१९॥

अथ (अघोर) रक्षामन्त्रः—

**अघोरेभ्योऽथ घोरेभ्यो घोराघोरतरेभ्यश्च ।**
**सर्वतः सर्व सर्वेभ्यो नमस्ते रुद्ररूपिभ्यः ॥२०॥**

यद्यपि विहायापि रक्षामन्त्रं पारदगुणाः प्रत्यक्षीभवन्त्येव, तथापि—अग्नौकपालान्यधिश्रित्याभिमन्त्रयेत भृगूणामङ्गिरसांघर्मस्य तपसा तप्यध्वमिति अन्तरेणापि मन्त्रमग्निर्दहनकर्माकपालानि सन्तापयति। तत्र च नियमः क्रियते-एवं क्रियमाणमभ्युदयकारि भवतीति ( महाभाष्य प्रथमाह्निकम् )। एवमघोरमन्त्रेणाभिमन्त्रणं गुणप्रकर्षाय विशेषतः स्यादित्यभिप्रायेणाह—अघोरेभ्य इति ॥ २० ॥

इस मन्त्र का जप तथा चिन्तन कर पारा शोधे। यह रक्षामन्त्र है ॥ २० ॥

### अथ रसनिगडः—

**स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजञ्च गुग्गुलुः ।**
**सैन्धवं द्विगुणं मर्द्यं निगडोऽयं महोत्तमः ॥ २१ ॥**

रसनिगडमाह स्नुहीति—स्नुही-थोहर इति, अर्कः=आंक इति, एताभ्यां सम्भवं क्षीरं=दुग्धं, ब्रह्मबीजानि=पलाशबीजानि ( ढांक के बीज ) गुग्गुलुः, सैन्धवं=लाहौरी नमक इति पञ्चानामपि मिलितानां रसापेक्षया द्वैगुण्यं रसे प्रक्षिप्य तप्तखल्वे मर्द्यं=घर्षणीयमिति पूर्वे टीकाकृतः । सैन्धवं द्विगुणं द्विभागं, अर्क क्षीरादीनां प्रत्येकमेकोभागः सर्वस्मात्पारद षोडशांशमादाय तप्तखल्वे मर्दनीयम् । भिषग्विमर्दयेच्चूर्णैं र्मिलितैः षोडशांशतः ( र० इ० चि० ३–६ ) इति नियमादितिकेचित् ।

अयंमहोत्तमो महत्सु मान्येषु निगडेषूत्तमो निगडः सूत बन्धनं नाम ।

अन्दुकी निगडोऽस्त्री स्यादङ्कुशोऽस्त्री । सृणिःस्त्रियाम् ( अमरः )

अत्र मूलन्तु—गुग्गुलुं ब्रह्मबीजानि तैस्तुल्यं चैव सैन्धवम् । स्नुह्यर्कपयसामर्घं निगडोऽयं महोत्तमः । इति रसरत्नाकरः । ॥ ७–१० ॥ ॥ २१ ॥

गूगल ढांक के बीज १-१ भाग, सैंधा २ भाग इनको सैंड और आंक के दूध से मर्दन करे, यह उत्तम निगड=रस-बन्धन है ॥ २१ ॥

अथ साधारणशुद्धिः—

**षोडशांशैर्भिषक् चूर्णैरेकत्र मर्द्दयेद्रसम् ।**
**प्रत्येकं प्रत्यहं दत्वा सप्तवारं विमर्दयेत् ॥ २२ ॥**

रसशोधनाय कियन्मानं द्रव्यं देयमिति परिभाषामाह षोडशांशैरिति-रसशोधनद्रव्याणां सोर्णैरित्यादीनां षोडशांशैरसापेक्षया कलाभागैः प्रत्येकंद्रव्यं च प्रत्यहं नूतनं दत्वा एवं सप्तवारं विधानतः तत्र तत्र प्रोक्तप्रकारेण मर्दयेत् । तथा च—

रसस्य षोडशांशेन द्रव्यं युञ्ज्यात्पृथक् पृथक् ।
द्रव्येष्वनुक्त मानेषु मतं मानमिदं बुधैः । आ.प्र.अ.१.श्लो.४७ ।
सर्वं सूतकलांशं च तप्तखल्वे रसं क्षिपेदिति । आ.कं. ४·२६ ।
शा.ध.रे.तु–'ततः क्षिप्त्वा रसं खल्वे रसादर्धञ्च सैन्धवम् ।'
एवम्—एतैरससमै स्तद्वत्सूतो मर्द्य स्तुषाम्बुना । अत्र सैन्धवस्यार्धभागः । राजीरसोनादीनाञ्च रससमानतोक्ता ॥ २२ ॥

जिस प्रमाण पारद का शोधन करना हो उसका १६ वां भाग शोधन द्रव्य चूर्ण के १–१ को प्रतिदिन डालकर ७ दिन मर्दन करे । प्रतिदिन उष्ण कांजी से धोवे ॥ २२ ॥

विशेषशुद्धिमाह—

**सोर्णैर्निशेष्टकाधूम–जम्बीराम्बुभिरादिनम् ।**
**मर्दितः काञ्जिकैर्धौतो नागदोषं रसस्त्यजेत् ॥ २३ ॥**

नागाद्यष्टदोष-पर्पट्यादिसप्तकञ्चुकनिवारणार्थमाह-सोर्णैरिति-ऊर्णा=मेषादिलोम तेषांच भस्म ग्राह्यम् । दग्धोर्णा इति

( र.र.११-१२ ) दर्शनात् । निशा=पीता ( हरिद्रा ) इष्टका= पक्केष्टका तस्याः पांशुचूर्णम् । ईंट इति मृत्तिकानिर्मितगृहभित्ति निर्माणोपकरणम । धूमं=गृहधूमम् । जम्बीराम्बु†=तदाख्य निम्बुस्वरसः । एतैश्चूर्णादिभिर्मिलितैः शोध्यमानरसस्य षोडशांशमानैः । 'मिलितैः षोडशांशत' इत्युक्तेः।शा.ध.रे. तु-'एतैरससमैस्तद्वदिति' रससमानतोक्ता । आदिनं-दिनमेकंमर्य्यादीकृत्य मर्दितः पुनस्तप्तकाञ्जिकैर्मृत्पात्रे धौतः=क्षालितो रसो नागदोषं सीसक संसर्गजं दोषं व्रणादिकरं त्यजेत् । शा.ध.टी. गूढार्थदीपिकायान्तु —तक्रेण काञ्जिकेनाथशुक्तेनोष्णोदकेनवा । इति तक्रादिना क्षालनमुक्तम् ।।२३।।

ऊन जली हुई, हल्दी, ईंट का चूर्ण, रसोई घर का धुंआ, जम्बीरी नींबू का रस; इनसे पारे को मिलाकर दिनभर मर्दन कर काञ्जी से धो दें तो पारे का नागदोष छूट जाता है ।।२३।।

विशालाङ्कोठचूर्णेन वङ्गदोषं विमुञ्चति ।
राजवृक्षो मलं हन्ति चित्रको वह्निदूषणम् ।।२४।।
चाञ्चल्यं* कृष्णधुस्तूरं त्रिफला विषनाशिनी ।
कटुत्रयं गिरिं हन्ति असह्याग्निं त्रिकण्टकः ।।२५।।

---

† जम्बीराद्यम्लेनसहमर्दनात्सीसकादयोधातवस्त्वत्रद्रवन्ति प्रक्षालिताश्चकाञ्जिकेनापगच्छन्ति नच पारदस्य लेशोऽपि विक्रियतेऽतः पारदशुद्धिर्भवति ।

* ओजोनाख्यवाते Gass न संसर्गात्पारदचाञ्चल्यं सर्वथा नश्यति पारदश्च लग्नो भवति ।

प्रतिदोषं कलांशेन तत्तच्चूर्णं सकन्यकम् ।
उद्धृत्योष्णारनालेन मृत्पात्रे क्षालयेत् सुधीः ।
एवं संशोधितः सूतः सप्तकञ्चुकवर्जितः ॥२६॥

विशाला इन्द्रायन इति तस्याःमूलम् । अङ्कोटः = अङ्कोल इति ख्यातःतस्य त्वग् ग्राह्या । राजवृक्षः = अमलतास इति तस्य फलमज्जेति पूर्वे टीकाकृतः।'राजवृक्षस्य मूलेन मर्दयेत्सह कन्यया' इति आ.वे.प्र.१-५७ । तत्र राजवृक्षमूलस्य त्वक् सूतषोडशांशा ग्राह्या। चित्रकः प्रसिद्धः । कृष्णधुस्तूरत्रिफले तथैव । कटुत्रयं = शुण्ठी मरिच पिप्पल्यः । त्रिकण्टको = गोक्षुरकः । प्रतिदोषं = नागाद्यष्टप्रत्येकं दोषम् । कलांशेन = षोडशांशेन मानापेक्षया ९को भाग औषधस्य रसस्य षोडशभागा इत्यर्थः। तत्तच्चूर्णं = तेषां तेषां पृथगष्ट दोषहराणां वस्त्रगालितं चूर्णं ज्ञेयम् । सकन्यकं = घृतकुमारी स्वरसयुतं तन्मानंच यथोपयुक्तम् । र.इ.चि.मणौ तु–कन्योपयोगः क्वचिदपेक्षितो न,सर्वत्रेति तत एव ज्ञेयम् । ३-१०-१३ । अत्र-प्रतिदोषम् , आर्दिनम्, तत्तच्चूर्णम्, सकन्यकम्, उष्णारनालेन मृत्पात्रेक्षालनमेते वाक्यांशा अष्टस्वपि दोषेषु सम्बध्यन्ते । एषा च शुद्धिरातपे तप्तखल्वे वा भवति । त्रिदिनंमर्दयेत्सूतमातपे निक्षिपेद् दृढमिति रसकौमुदी ।

तप्तखल्वप्रकारस्तु—'कृत्वा खल्वाकृतिं चुल्लीमङ्गारैः परिपूरिताम् । तस्यां निवेशितं खल्वं पार्श्वे भस्त्रिकया धमेत् । रसेन मर्दिता पिष्टिःक्षारैरम्लैश्च संयुता । प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशयः॥

कृतःकान्तायसा सोऽयं भवेत्कोटिगुणोत्तरः।' ( रसेन्द्रचूड़ामणि-५.१०-११ ॥ )

उत्थापनाऽवशिष्टन्तु चूर्णं पातनयन्त्रके।धृत्वोर्ध्वभाण्डे संलग्नं संहरेत्पारदं भिषक् । र.इ.चि.३-१६-प्रकरणसारश्चानन्दकन्द २३ उल्लास १४ श्लोकतः २० श्लोकपर्य्यन्तादनूदितो ज्ञेयः।

धातवो रससंश्लिष्टा यदा विष्णुपदामृतम्
गृह्णन्ति हि तदा तेषां कश्चिद् भागोऽवशीर्यते
ततश्चूर्णत्वमापन्ना रसमाच्छादयन्ति ते
तेनावरण साम्येन धातवः सूतसङ्गताः
कञ्चुकाख्यां भजन्तीति प्राच्यपाश्चात्यसम्मतिः* ॥ र.त.त.५. श्लो.११-१२। युगपत्सप्त कञ्चुका हरणांच—

कुमारिकाचित्रकरक्तसर्षपैः
कृतैःकषायैं बृंहतीत्रिमिश्रितैः ।
फलत्रिकेणापि विमर्दितो रसो
दिनत्रयं सप्तमलैर्विमुच्यते ।

( आ-प्र-अ-१.श्लो.६२. ) ॥२४-२६॥

इन्द्रायन और अङ्कोठ के चूर्ण से पारा घोटें तो वंगदोष छूट

---

* Impure mercury, when shaken with air yields a black powder, caused by the oxidation of the metallic impurities, and the film of the oxideincloses a small globule of the liquid metal (chemistry by H.E. Rosccoe and cschor-lemmer F.R.S.)

जाता है। अमलतास के मूल के चूर्ण से पारा मर्दन करें तो मल दोष नाश होता है। चीते के चूर्ण से घोटें तो पारे का वह्नि-दोष दूर होता है॥ २४॥

काले धतूरे के रस से घोटें तो पारे का चाञ्चल्यदोष दूर होता है। हरड़, बहेड़ा, आंवला-इनके चूर्ण से घोटें तो पारे का विष दूर होता है। सौंठ मिर्च और पीपल के चूर्ण से घोटें तो पारे का गिरि दोष दूर होता है। गोखरू के चूर्ण से घोटें तो असह्याग्नि दोष दूर होता है॥ २५॥

प्रत्येक दोष को दूर करने के लिए पारा एक भाग हो तो औषधों का चूर्ण पारे का सोलहवां भाग होना चाहिये, उसमें घीकुमार का रस डालकर घोटा जाता है। दिनभर मर्दन करने के पश्चात मिट्टी के पात्र में पारे को डालकर गरम कांजी से धो डालें। कम से कम तीन बार ऐसे ही करना चाहिए। इस प्रकार से शोधित पारा सातों कञ्चुकों से रहित हो जाता है।॥ २६॥

श्रीखण्डं देवकाष्ठञ्च काकजङ्घाजयाद्रवैः।
कर्कोटीमूषलीकन्या-द्रवं दत्त्वा विमर्दयेत्।
दिनैकं पातयेत् पश्चात् तं शुद्धं विनियोजयेत् ॥२७॥

श्रीखण्डमिति—रसइत्यनुवर्त्तते। श्रीखण्डं = श्वेतचन्दनम्, देव-काष्ठं = देवदारु, काकजंघा = गुञ्जा रसकामधेनौ काकतुण्डी जया-द्रवैरिति एतत्पद्यपर्य्याये काकतुण्डी पदस्य गुञ्जार्थकत्वात्, जया = जयन्ती, कर्कोटी = वांझ ककोड़ा इति, मुशली = तालमूली, कन्या

=घृतकुमारी। मिलितानां द्रव्याणां रसापेक्षया षोडशांशं दत्वा-एकं दिनं मर्दयेत्। ततः पातयेत्=ऊर्ध्वं पातयेदित्यर्थः। रसशोधन मतान्तरेषु सति विशेषविधिनिषेधाभावे तप्तखल्वे मर्दनं, शोधनद्रव्य चूर्णं रसापेक्षया षोडशांशं देयम्। मृत्पात्रे उष्णकाञ्जिकैः क्षालनं च सर्वत्रकर्त्तव्यम्।

पारदशोधनस्य सरल प्रकारः—

रसेश्वरं समसुधा रजसा मर्दयेत् त्र्यहम्
ततो द्विगुणवस्त्रान्तर्गालितं खल्वके न्यसेत्
रसोनं निस्तुषं तुल्यं तदर्धं लवणं हरेत्
तत्कल्के मर्दयेत्सूतं यावदायाति कृष्णताम्
कृष्णं कल्कं परित्यज्य तथा प्रक्षाल्य युक्तितः
एव मेकेन वारेण रसेन्द्रः शुद्धिमाप्नुयात्।

(र.त.त.५.श्लो.२७.२६)॥२७॥

श्वेतचन्दन का चूर्ण, देवदारु का चूर्ण, काकजङ्घा का रस, जयन्ती का रस, बांझककोड़ा का रस, मूसली का रस, घीकुमार का रस; इन्हें पारे में डालकर एकदिन घोटें। पश्चात् ऊर्ध्वपातनयंत्र से ऊर्ध्वपातन करें। इसप्रकार से शुद्ध पारे को प्रयुक्त करें॥२७॥

कुमार्य्या च निशाचूर्णैर्दिनं सूतं विमर्दयेत्।
पातयेत् पातनायन्त्रे सम्यक् शुद्धो भवेद्रसः॥ २८॥

कुमार्या चेति—पातयेदूर्ध्वं पातयेत्। तद्यन्त्र प्रकारश्च रसपद्धतौ—

कृत्वा मृन्मयभाण्डसम्पुटमधः प्रक्षिप्य भाण्डोदरे

तुर्यांशार्ककणैर्मनाक्सकरकैः संमर्द्य पिण्डीकृतम् ।
अन्यस्मिन् रचितोर्ध्ववारिणि मृदा संरुद्धसन्धौ सुधीः
पक्त्वा त्रिप्रहरं समेन शुचिना भाण्डे तमूर्ध्वं नयेत् ।६।
॥ २८ ॥

भाषा—घीकुआर का रस और हल्दी का चूर्ण इन दोनों से पारे को एक दिन मर्दन करे फिर पातना यंत्र से पातन करे तो पारा ठीक शुद्ध हो जाता है ॥ २८ ॥

मतान्तरम्—

रसस्य द्वादशांशेन गन्धं दत्त्वा विमर्दयेत् ।
जम्बीरोत्थैर्द्रवैर्यामं पाच्य पातनयन्त्रके ।
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं विशुद्धये ॥ २९ ॥

रसस्येति–रसस्य=सूतस्य, द्वादशांशेन-रसस्य द्वादशभागाःशुद्ध-गन्धस्यैको भागः, रसषोडशांशं जम्बीररसं दत्त्वा, यामं=प्रहर-मेकं विमर्दयेत् । ततः पातनयन्त्रके ऊर्ध्वपातनयन्त्रे पाच्यम । एवं पूर्वोक्त प्रकारेण पुनारसद्वादशांशंगन्धं कलांशं जम्बीररसं च दत्त्वा विमृद्य पाच्यमित्थं सप्तवारं कुर्यात्, रसः शुद्धो भवेत ॥ २९ ॥

भाषा—पारा एक भाग, शुद्ध गन्धक बारहवां भाग देकर मर्दन करें, पुनः जम्बीरी नीबू के रस से एक प्रहर घोटें । पश्चात ऊर्ध्वपातन करें । फिर ऊपर के पात्र से पारे को निकाल कर पूर्ववत पारद से बारहवां भाग गन्धक मिला जम्बीरी नीबू के

रस से १ प्रहर घोटे इस प्रकार सात बार मर्दन और सात बार ऊर्ध्वपातन करने से पारा शुद्ध होजाता है ॥ २६ ॥

मतान्तरम्—

जयन्त्या वर्द्धमानस्य चार्द्रकस्य रसेन च ।
वायस्याश्चानुपूर्व्येवं मर्दनं रसशोधनम् ॥ ३० ॥
एषां प्रत्येकशस्तावत् मर्दयेत् स्वरसेन च ।
यावच्च शुष्कतां याति सप्तवारं विचक्षणः ॥ ३१ ॥
उद्धृत्योष्णारनालेन मृद्भाण्डे क्षालयेत् सुधीः ।
सर्वदोषविनिर्मुक्तः सप्त कञ्चुकवर्जितः ।
जायते शुद्धसूतोऽयं युज्यते सर्वकर्मसु ॥ ३२ ॥

जयन्त्या इति—जयन्त्या = जयायाः, वर्धमानस्य—ऐरण्डस्य, वायस्याः वायसी शब्दो हि 'ज्योतिष्मत्यां, काकतुण्ड्यां काकमाच्यां तथैव च वायसी काकजंघायां काक्यां चैव तु पञ्चधा' इति (रा० नि०) पञ्चार्थके वर्त्तते । अत्र तु काकमाची रसेनैव निर्मलत्वमवाप्नुयात् इति रससारात् (५-११) काकमाची-मको इति ग्राह्या । आनुपूर्व्या—पूर्वपूर्वमनतिक्रम्य इत्यानुपूर्वी तया मर्दनं रसस्य शोधनं तदित्थं—विचक्षणः—रसशोधनशकुलो यथामानं रसमादाय तस्य कलांशं जयन्ती स्वरसं दत्वा तप्तखल्वे रसो यावच्छुष्कतां याति तावन्मर्दयेत् । एवं सप्तवारं जयन्ती रसेन मर्दनम् तत उष्णारनालेन मृद्भाण्डे क्षालनम् ।

औषधस्यौषधस्यान्ते क्षालयेत्काञ्जिकेन तु ( र. सा. ५.१२. ) इत्युक्तेः । प्रतिवारक्षालनमपि न दोषाय । रसक्षालनकाञ्जिकन्तु घटे प्रत्येकवारं संरक्षेत । शुष्के च काञ्जिके पातनयन्त्रके तत्पातनीयम् । इत्थं पारदस्य सूक्ष्मकणानामपि क्षतिर्नभवति । एवं वर्धमानादिभिरपि सप्तवारं कुर्यात् । सर्वदोष विनिर्मुक्तः = नागादि-दोष रहितः । सप्तकञ्चुकवर्जितः = पर्पट्यादिसप्तकञ्चुकहीनः । सर्व कर्मसु रसनिर्माणकार्येषु न वादे युज्यते ॥ ३०–३२ ॥

भाषा—पहले जयन्ती के पत्तों के रस से, फिर एरण्ड के पत्तों के रस से, पुनः अदरक के रस से, पश्चात् मकोय के स्वरस से क्रमशः मर्दन करने से पारा शुद्ध हो जाता है । पारे को पूर्वोक्त द्रव्यों में से प्रत्येक के पारद के १६ वें भाग स्वरस से तब तक घोटे जब तक कि स्वरस सूख जाय । इस प्रकार सात वार एक २ के रस से घोटना चाहिये । पश्चात् प्रतिवार इस पारे को मिट्टी के पात्र में डाल कर गरम कांजी से धोवे । इस प्रकार वह सब दोषों से रहित होकर और सात कञ्चुकों से छूटकर शुद्ध हो जाता है । इसे सब कर्म्मों में प्रयुक्त कर सकते हैं ॥ ३०–३२ ॥

मतान्तरम्—

**निशेष्टकाधूमरजोऽम्लपिष्टो विकंचुकः स्याद्धि ततश्च सोर्णः ।**
**वरारनालानलकन्यकाभिः सत्र्यूषणाभिमृ दितस्तु सूतः ॥३३॥**

निशेति—निशा = हरिद्रा, इष्टका = इष्टकापांशुः, धूम-रजः = गोपानसीधूमरजः, अम्लं = जम्बीरादि । एतैः षोडशांशैः-

स्तप्तखल्वे, पिष्टो=घृष्टो रस=उष्णारनालेन मृद्भाण्डे क्षालितः ततः सोर्णा=ऊर्णा भस्मना युतो वरा=त्रिफला आरनालः=काञ्जिकः, कन्यका=घृतकुमारी, सत्र्यूषणाभिः त्र्यूषणं=त्रिकटु तेन सहिताभिरूर्णाभस्मादिमिलितं रस षोडशांशं देयम। मृदितः सूतः। एकं दिनमिति ज्ञेयम्। ततः पूर्ववत्प्रक्षालनम्। विकञ्चुको =नागादिदोषहीनः पर्पट्यादिकञ्चुक रहितश्च स्यात्॥ ३३॥

भाषा—हल्दी का चूर्ण, ईंट का चूर्ण, रसोई का धुंआं तथा नींबू आदि किसी अम्लरस से मर्दन कर कांजी से धोने के पश्चात् ऊन का भस्म त्रिफला का चूर्ण, कांजी, चीते का चूर्ण घीकुमार का रस, त्रिकुटा का चूर्ण, पारद के १६ वें भाग इन सब द्रव्यों से पारे को मर्दन करे तो पारा शुद्ध और कञ्चुक-रहित हो जाता है॥ ३३॥

मतान्तरम्—

दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः।
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम्।
काकमाचीरसैः सार्द्धं दिनमेकन्तु मर्दयेत्॥ ३४॥

दिनैकमिति—सूतं तप्तखल्वे कुमारीसम्भवद्रवैः=सूतषोडशांशघृतकुमारीस्वरसेन दिनैकं=एकं दिनं मर्दयेत् ततो मृद्भाण्डे, उष्ण काञ्जिकेन क्षालयेत्। एवं चित्रकक्काथेन, काकमाची रसेन च मर्दनेन क्षालनेन च शुद्धो भवति॥ ३४॥

भाषा—पारे को एक दिन घीकुमार के रस से घोटे, एक

दिन चीते के क्वाथ से घोटे, एक दिन मकोय के स्वरस से घोटे। इस से पारा शुद्ध हो जाता है। पारद का मर्दन तप्तखल्व में ही करना। प्रतिवार उष्णकाञ्जिक से धोना यह विधि सर्वत्र समझे ॥ ३४ ॥

मतान्तरम्

रसोनस्वरसैः सूतो नागवल्लीदलोत्थितैः ।
त्रिफलायास्तथा क्वाथै रसो मर्द्यः प्रयत्नतः ॥३५॥

ततस्तेभ्यः पृथक् कृत्वा सूतं प्रक्षाल्य काञ्जिकैः ।
सर्वदोषविनिर्मुक्तं योजयेत् रसकर्मसु ॥ ३६ ॥

रसोनस्वरसैरिति—सूतषोडशांशैरेकं दिनं मर्दयित्वा ततः काञ्जिकेन प्रक्षालनं पूर्ववत्। एवं नागवल्ली=ताम्बूलं तस्य दलं पर्णम् तदुत्थितैः तत् संक्षुद्य वस्त्रनिष्पीडितैः स्वरसैः। क्वाथैरिति त्रिफलैव सम्बध्यते। प्रयत्नतः=तप्तखल्वादौ मर्दनादियत्नेन। केचित्तु-तेभ्य इति बहुवचननिर्देशात् रसोनस्वरसादिभिर्मिलितै मर्दनमन्ते च एकदैव प्रक्षालनमित्याहुः॥ ३५-३६ ॥

भाषा—पारे को षोडशांश लहसन के रस से, पान के स्वरस से और फिर त्रिफला के क्वाथ से यत्नपूर्वक घोटे। प्रत्येक द्रव से मर्दन के पश्चात् उष्ण कांजी से धोकर पारे को पृथक् करे। इस प्रकार सब दोषों से छूटकर शुद्ध हो जाता है। इसे रसकर्म में प्रयुक्त करे॥ ३५-३६ ॥

अथोद्ध्र्वपातनम्—

भागास्त्रयो रसस्यार्क चूर्णस्यैकोऽथनिम्बुकैः ।
एतत्सम्मर्दयेत्तावद्यावदायाति पिण्डताम् ॥३७॥
तत्पिण्डं तल भाण्डस्थमूर्ध्वभाण्डे जलं क्षिपेत् ।
कृत्वाऽऽलवालं केनाऽपि देयमार्द्रं हिप्लोतकम् ।
सम्मुद्रयाग्निमधस्तस्य चतुर्य्याम प्रबोधयेत् ।
युक्त्योर्ध्वभाण्डसंलग्नं गृहीया त्पारदं ततः ॥
ऊर्ध्वपातनमित्युक्तं भिषग्भिः सूतशोधने ॥३८॥

ऊर्ध्व पात्तनम् ।

भागा इति—रसस्य=पारदस्य त्रयो भागाः, अर्कचूर्णस्य शुद्धताम्रचूर्णस्यैको भागोऽथ-एतद्द्वयं निम्बुकैः=निम्बुकरसैर्याव-त्पिण्डतां=पिण्डस्वरूपमायाति तावत्सम्मर्दयेत रसस्य ताम्रस्य च निम्बुरसेन यावत् पिष्टी भवति तावदित्यर्थः ॥ ३७ ॥

तत्पिण्डं = तद्रसपिण्डं पातनापरपर्य्यायं विद्याधरयन्त्रं स्थाली-द्वयेन निर्माय तच्चेत्थम्—

ससूतभाण्डवदनमन्यद्गिलति भाण्डकम् ।

तथा सन्धिर्द्वयोः कार्यः पातनात्रययन्त्रके । र. इ. चि, ३. २५।

तलभाण्डस्थमधोभाण्डान्तः स्थापयित्वा सम्मुद्रय = सन्धि-रोधं विधाय तस्य विद्याधरयन्त्रस्याऽधः रसपिण्डस्थालिका वह्निःस्तले चतुर्यामं = प्रहरचतुष्टयमग्निप्रबोधयेत् = प्रज्वालयेत् । ऊर्ध्वभाण्डे = ऊर्ध्वभाण्डस्योपरितले केनापि माषचूर्णेन मूल-स्थान मृत्स्नया, अन्यया वा चिक्कणमृत्तिकया, आलवालमासमन्ता-ज्जलस्य लवमालातीतिआलवालमावापंकृत्वा तत्र जलं क्षिपेत् सति सम्भवे हिमजलं देयमुष्णं सद्धेयं पुनः शीतं देयम् । एवं पुनः पुनः कुर्यात । आलवालकरणासम्भवे, आर्द्रप्लोतकं वा = त्रिगुणित वस्त्रखण्डेन देयम् । तदपि पुनः पुनः शोतलं देयम् । स्वाङ्गशीते सति ततो युक्त्या सन्धिरोधमपाकृत्य-ऊर्ध्वभाण्डसंलग्नमूर्ध्वभा-ण्डस्याधःस्तले लेपितखटिकया सह मिलितं पारदं प्रोञ्छ्य (यन्त्र रचनासमये ऊर्ध्वभाडोदरं खटिकाघनद्रवेण विलेपनीयं येन तल्लग्नः पारदः समस्त एव वस्त्रपूतो निर्गच्छेत) पारदंवस्त्रपूतं कृत्वा गृह्णीयात् । सूतस्य = पारदस्य शोधने भिषग्भि = वैद्यैरित्यूर्ध्वपातन = मूर्ध्वमुड्डयनमुक्तम् । यत्र पातनादौ चतुर्यामाग्नेरविछिन्नमुक्तिस्त-त्राद्ध प्रस्थमितं द्रव्यं बोध्यमिति रहस्यमिति । मणि. प्रभा. टी. ।

तत्पिडं तलभाण्डस्थं सम्मुद्रय तस्याधश्चतुर्याममग्नि प्रबोधयेत् । ऊर्ध्वभाण्डे केनापि आलवालं कृत्वा जलं क्षिपेत् । आर्द्र लोतकं वा

देयम् , ततो युक्त्योर्ध्वभाण्डसंलग्नं पारदं गृह्णीयात्-इत्यन्वयः।
॥ ३८ ॥

भाषा—पारा ३ भाग ताम्र चूर्ण १ भाग इनको खूब घोटे फिर जम्बीरी नीबू का रसडाल गोला बनने तक घोटे अब उक्त गोले को नीचे की हंडिया के भीतरके तले में रख उसके मुखसे मेल खाने वाली दूसरी हंडिया को उसके मुख से मिलाकर बाहर से दोनों के मुख को डोरी से कसकर बाहर से पक्की कपड़ मिट्टी करदे। सूखने पर चूल्हे पर चढ़ावे ऊपर के वर्त्तन के बाहरी तले में उड़द के आटे से आल बाल ( पानी रुकने के लिये घेरा ) बना इसमें ठंडा जल भरदे। गरम होनेपर जलको बदलता रहे। यदि आधासेर पारा उड़ाना हो तो ४ पहर आंच दे। स्वाङ्गशीत होने पर ऊपर की हंडिया के भीतर के तले से पारा पोंछले। यह अच्छा होता है कि ऊपर की हंडिया के भीतर कपड़ मिट्टी करने के पूर्व सेलखड़ी के चूर्ण को पानी में घोलकर लेप करदे। ( इन श्लोकों का पाठ खण्ड होने से अब तक के व्याख्याकारों ने कुछ का कुछ अर्थ किया है ) ठंडे जलके बदले कपड़े को भिगोकर भी हंडिया के ऊपर रख सकते हैं ॥३७-३८॥

अथाधःपातनम्—

नवनीताह्वयं गन्धं घृष्ट्वा जम्भाम्भसा दिनम्।
वानरीशिग्रुशिखिभिः सैन्धवासुरिसंयुतैः ॥३९॥
नष्टपिष्टं रसं कृत्वा लेपयेदूर्ध्वभाण्डके।

ऊर्ध्वभाण्डोदरं लिप्त्वाऽधोभाण्डं जलसंयुतम्॥४०॥
सन्धिलेपं द्वयोः कृत्वा तद् यन्त्रं भुवि पूरयेत।
उपरिष्टात् पुटे दत्ते जले पतति पारदः।
अधःपातनमित्युक्तं सिद्धाद्यैः सूतकर्मणि॥४१॥

**अधः पातनयन्त्र।**

अधः पातनमाह-नवनीताह्वयमिति—नवनीतं=हैयङ्गवीनं गन्धकश्च, अत्र सूतप्रकरणात् नवनीतशब्देन गन्धको ग्राह्यः, नवनीतमिति-आह्वयो=नामधेयं यस्य सः नवनीताह्वयः तम्-····आह्वयः, आख्याह्वे अभिधानं चेत्यमरः। यद्यपि गन्धकत्वेन त्रिविधोऽपि गन्धकएकविध एव, तथापि तत्तत्खनिसम्भवद्रव्य मिश्रणादनेकत्वेन नवनीताह्वयस्य = अमलसारस्यनिर्मलत्वात् ग्रहणम्। नवनीताह्वयमत्र-नवनीताभ्रकमितिपाठकल्पने धान्याभ्रकंदत्वा मर्दनन्तु पृथगेव न वानर्यादिभिरिति ज्ञेयम्। सूतं=

पारदं, जम्भाम्भसा=जम्बीरनिम्बूकफलरसेन, गन्धकं पारदं च समान-मानमादाय दिनमेकंदिनं घृष्ट्वा=मर्दयित्वा तदनु वानर्यादिभिर्मिलितं रसषोडशांशैर्नष्टपिष्टं यावन्मर्दनम्। नष्टपिष्टमिति नष्टं च तत्पिष्टं नष्टपिष्टम्, णश् अदर्शने दिवादि रित्यस्मात्क्ते नष्टमिति रूपम्। पिष्लृ सञ्चूर्णने रुधादि रित्यस्मात्क्ते पिष्टमिति रूपम्।

स्वरूपस्य विनाशेन पिष्टतापादनं हियत्।
विद्वद्भिर्निर्जितः सूतो नष्टपिष्टः स उच्यते ॥र.इ.चू.४-८४॥

सूक्ष्मदर्शकयन्त्रेण पारदकणानामदर्शनमितियावत्। रसं =पारदं कृत्वा मर्दनेनेति शेषः। ऊर्ध्वभाण्डके=अधः पातन यन्त्रोर्ध्वभाण्डस्यान्तस्तले लेपयेत्। तदेवाह—ऊर्ध्वभाण्डोदरं लिप्त्वेति। अधोभाण्डं जलसंयुतं=आकण्ठं जलापूरितं कृत्वा-ऊर्ध्वभाण्डस्य मुखमधो भाण्डमुखे प्रवेश्य द्वयोः सन्धि लेपं कृत्वा भूमौ-आगलमधोभाण्डप्रवेशयोग्यं खातं विधाय तत्र भुवि कृते खाते यन्त्रं सन्धि लेपं यावत् पूरयेत्।

उपरिष्टात्-ऊर्ध्वभाण्डबहिस्तले, पुटे दत्ते, इति पुटं चात्र कौक्कुटं यथायथं रसमात्रापेक्षया वा विंशतिवनोत्पलैरधिकैर्वा निवातस्थले शनैः शनैर्देयमितिगुरु सम्प्रदायः। आ.प्र.अ.१.७७। रसपद्धति टीका च १०। पारदोजले पतति। इदं सिद्धाद्यैः सिद्धाग्र-मुखैः सूतकर्मणि सूतक्रियायामधःपातनमिति-उक्तं=कथितम्। बानरी=आत्मगुप्ता, शिग्रुः=सौंजना इति, शिखि=श्चित्रकः, अपामार्गश्च व्यवहारस्तु चित्रकेण, रसपद्धतिटीकायां बह्निश्चित्रक

इति व्याख्यानात् । श्लो. १०, सैंधवं सिन्धुनदीसविधपर्वतोद्भवं लवणं लाहौरी नमक इति । आसुरिः = श्वेतसर्षपः । रसमारकगणे, 'श्वेतसर्षपोऽसनकः' इतिदर्शनात् ( अत्रैव-श्लो. १०० ) कृदिकारादक्तिनःइति रात्रिः । रात्री । इति वत् ह्रस्वान्तोऽपिआसुरिशब्दः । ॥ ३९—४१ ॥

आमलासार गन्धक को जम्वीरी नीबू के रस से एक दिन मर्दन करे । यह गन्धक, कौंच, सुहांजना की जड़, चित्रकमूल सेंधानमक तथा राई; इन सव को पारद का १६ वां भाग ले मर्दन करे । जब पारा नष्टपिष्ट हो जाय तब इसे ऊपर के पात्र के अन्दर लीप दे, तथा नीचे के पात्र में जल भर दे । दोनों पात्रों के मुख की सन्धि पर लेप करके नीचे के पात्र को तथा ऊपर के पात्र को सन्धि से पर्याप्त ऊपर तक भूमि में गाड़ दे । ऊपर के पात्र के चारों ओर उपले लगाकर पुट दे । पारा निकल कर जल में जा गिरता है । रसकर्म में सिद्ध सम्प्रदाय ने इस विधि से पारे का अध:पातन करने को कहा है ।

पारद को किसी द्रव्य के साथ इतना घोटना कि वह उसमें सूक्ष्मतया मिल जाय और उसकी चमक दिखाई न दे यह नष्टपिष्ट कहाता है ॥ ३९–४१ ॥

घटे रस विनिक्षिप्य सजलं घटमन्यकम् ।
तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत् सुधीः॥४२॥

रसाधो ज्वालयेदग्निं यावत् सूतः जलं विशेत् ।
तिर्य्यक्पातनमित्युक्तं सिद्धैर्नागार्जुनादिभिः॥४३॥

तिर्य्यक्पातन यन्त्रम्॥

तिर्यक्पातनमाह—घट इति—धान्याभ्रकं रसं तुल्यं मर्दयेदारनालकैः।
नष्टपिष्टेन तत्पात्यं तिर्यग्यन्त्रे दृढाग्निना-

इत्युक्तरीत्या नष्टपिष्टं रसं विधाय घटे घटाभ्यन्तरे तं विनिक्षिप्य स्थापयित्वा सजलान्यघटमुखे तद्रसघटमाकण्ठं प्रवेश्य द्वयोः सन्धिरोधं कुर्यात्। सजलं जलेन सहितम् । अन्यकं स्वार्थेकः । द्वितीयं घटम् । द्वयोः पारदपिष्टियुतजलयुतघटयोर्मुखं तिर्यक् सजलघटं रसघटापेक्षया ईषन्नतंकृत्वा सुधी=रससंस्कार निपुणः तन्मुखं=तयोर्घटयोर्मुखं रोधयेत्॥४२॥ रसाधो=नष्टपिष्टरसपूरितघटाधः, अग्निं ज्वालयेत् तावदिति ज्ञेयम् यावत्सूतो जलं=सजलघटाभ्यन्तरं विशेदुड्डीय गच्छेत्। यावत्सजलघटमुष्णं भवति तावत्पारदोड्डयनं ज्ञेयं मन्दोष्णतायां च स्वाङ्गशीतं कुर्यात् ।

सिद्धैः=रसकर्मणि सिद्धहस्तै नागार्जुनादिभि=नागार्जुन प्रमुखैरिति तिर्यक्पातन मुक्तम्। अन्यत्र तिर्यक्पातनयन्त्र-लक्षणं यथा—

क्षिपेद्रसं घटे दीर्घे नताधोनालसंयुते।
तन्नालं निक्षिपेदन्यत्कुम्भकुद्यन्तरे खलु॥
तत्र रुद्धे मृदा सम्यग्वदने घटयोरधः
अधस्ताद्रसकुम्भस्य ज्वालयेत्तीव्रपात्रकम्॥

( दृढाग्निना इति.र.र.आ.११-२६. )

इतरस्मिन्घटे तोयं प्रक्षिपेत्स्वादुशीतलम्।
तिर्यक्पातनमेतद्धि वार्तिकैरभिधीयते। र.इ.चू.५-२१-२३.।

यद्वा— भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत।
कांस्यपात्रद्वयं कृत्वा संपुटं जलगर्भितम्॥
नलिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत।
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः॥
अग्निना तापितो नालात्तोये तस्मिन् पतत्यधः।
यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि॥
जायते रससंधानं द्रे (डे) कीयन्त्रमिति स्मृतम्।

इति.र.प.टी.११.।

मूले पातनात्रयं रसेन्द्रचिन्तामणेरुद्धृतम् ३-२२-३१।
मिश्रितौ चेन्नागवङ्गौ रसे विक्रयहेतुना।
ताभ्यां स्यात कृत्रिमो दोषस्तन्मुक्तिः पातनत्रयात्॥

र.इ.चि.३-३२.।

इति पातनत्रयान्नाग वङ्ग दोषमुक्तिर्भवति ॥ ४३ ॥

एक घड़े में पारा डाल दूसरे घड़े में जल भर दोनों घड़ों के मुखों को तिरछा कर परस्पर जोड़ दे और अच्छी प्रकार सन्धिबन्ध कर दे। पश्चात् जिस घड़े में पारा डाला है उसके नीचे तबतक अग्नि जलावे जबतक सारा पारा उड़कर जल के पात्र में चला न जावे। अनन्तर उसे निकाल ले। इसे नागार्जुन आदि सिद्धों ने तिर्य्यक्पातन कहा है ॥ ४२-४३ ॥

अथ बोधनम्—

**एवं कदर्थितः सूतः षण्ढत्वमधिगच्छति ।**
**तन्मुक्तयेऽस्य क्रियते बोधनं कथ्यते हि तत् ॥४४॥**

अथ रोधनापरपर्यायं सूतशक्त्युत्कर्षाय बोधनसंस्कार माह-एवमिति-एवं पूर्वोक्तप्रकारेण पातनत्रयात् कदर्थितः। सूतः= पारदः, षण्ढत्वं=नपुंसकत्वमधिगच्छति प्राप्नोति।

क्वचित्-'शक्त्युत्कर्षाय बोध्योसौ' इत्युच्यते। तन्मुक्तये षण्ढत्वापाकरणाय-अस्य=सूतस्य बोधनं=षण्ढत्वनिरसनं क्रियते तद्धि कथ्यते ॥ ४४ ॥

इन मर्दन पातन आदि से कदर्थित पारा नपुंसक हो जाता है। इस दोष को दूर करने के लिये पारे का बोधन संस्कार किया जाता है ॥ ४४ ॥

**विश्वामित्रकपाले वा काचकूप्यामथापि वा ।**
**सूते जलं विनिक्षिप्य तत्र तन्मज्जनावधि ॥ ४५ ॥**

पूरयेत् त्रिदिनं भूम्यां गजहस्तप्रमाणतः।
अनेन सूतराजोऽयं षण्ढभावं विमुञ्चति ॥ ४६ ॥

तदेवाह—विश्वामित्रकपाल इति—विश्वामित्रकपाले = नारिकेलखर्परे, अथापीति-पादभूषणार्थम्। काचकूप्यामित्युपलक्षणं मृत्तिकाकाष्ठपात्रादीनाम्, सूतं कृत्वा तत्र सूते तन्मज्जनावधि = सूतनिमज्जनंयावत् जलं विनिक्षिप्य = दत्वा तन्मुखरोधनं कृत्वा गजहस्तप्रमाणतः–'साधारणनरांगुल्या त्रिंशदंगुलिको गज' इत्युक्तेः, त्रिंशदंगुलिमानं भूम्यां गर्त्तं विधाय तत्र त्रिदिनं पूरयेत् गर्तमुखरोधश्च करणीयः। त्रिदिवसानन्तरं ततो गृहीत्वा प्रक्षाल्य संरक्षयेत्। अनेन प्रकारेण-अयं = सूतराजः षण्ढभावं विमुञ्चति। सूते जलमत्र सृष्ट्यम्बुज मिति पाठान्तरे—गोजाविनरनारीणां मूत्रं शुक्रं च शोणितम्। सृष्ट्यम्बुजं समाख्यातं षण्ढदोषविनाशकम् इति–रसहृदयटीकायां शक्त्यवतारः। २-६। इत्यर्थो ज्ञेयः। रसहृदयेऽपि-सृष्ट्यम्बुजंर्निरोधादित्येवोक्तम्। गजहस्तेत्यत्र राजहस्तेति पाठान्तरे स एवार्थः।

सूते जलमित्यभिप्रायकं—जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम्। स्थितिरास्थापनी कुम्भे, याऽसौ रोधनमुच्यते। इति-क्वचित्पठ्यते। लवणेनाम्लपिष्टेन, हण्डिकान्तर्गतं रसम्। अच्छाद्याम्लजलं, किञ्चित्क्षिप्त्वाश्रावेणरोधयेत। (अत्र शरावपर्यायः श्रावशब्दोऽप्यस्ति) ऊर्ध्वं लघुपुटं देयं लब्धश्वासो भवेद्रसः।
र. इ. चि. ३-३५।

अन्यत्र–एवं कदर्थितः सूतः षण्ढभावं प्रयाति हि। बह्वौषधिकषायेण स्वेदितः सबलो भवेत्। सर्पाक्षीचिञ्चिकावन्ध्याभृङ्गाब्दैः स्वेदितो बली। निरस्तषण्ढभावोऽसौ जायते हि रसोत्तमः॥४५-४६॥

भाषा—नारियल की नरेली या काचकूपी में पारा रखकर उसमें इतना जल डाले कि पारा डूब जाय। इस पात्र को फिर भूमि में तीस अंगुल नीचे गाड़ दे, तीन दिन तक ऐसा ही रखे। इससे पारा नपुंसकत्व को छोड़ देता है॥ ४५-४६॥

अथ हिंगुलाकृष्टो रसः—

अथवा हिंगुलात् सूतं ग्राहयेत् तन्निगद्यते।
जम्बीरनिम्बुनीरेण मर्दितो हिंगुलो दिनम्॥ ४७॥
ऊर्द्ध्वपातनयन्त्रेण ग्राह्यः स्यान्निर्मलो रसः।
कञ्चुकैर्नागवङ्गाद्यैर्निर्मुक्तो रसकर्म्मणि।
विना कर्माष्टकेनैव सूतोऽयं सर्वकर्म्मकृत्॥ ४८॥

• सूतसंस्काराः—र. र. आ. उपदेश. १. श्लो. ८.३६। एवं। आ. प्र. १-३७-१०५। र. इ. चि. ३-१०-४६। आ. कं. ४. उ. १६ ६५। र. अ. १०. प. ३८ श्लोकतः वर्णिताः सन्ति।

अथ सर्वकर्मसु—पारदशोधनस्य सुगमप्रकारमाह–अथवेति–हिंगुलात पारदस्य प्रधानखनिजात्। कृत्रिममपि भवति हिंगुलम्, रसगन्धकसम्भूत इत्युक्तेः। अधुनातु-रूमीति नामकं शोभनं भवति। र.र.आ.१६-४१-४५ प्रकरणे द्रष्टव्यम्। जंबीरनिंबुनीरेण = जम्बीरनीरेण-निम्बुनीरेण चेत्यर्थः। दिनं दिनमभिव्याप्य, मर्दितः, तत

ऊर्ध्वपातनयन्त्रेण निर्मलो रसोग्राह्यः। कञ्चुकैः पर्पट्यादिभिः, नागवङ्गाद्य राद्यशब्दात्खन्युद्भवसर्वदोषैर्निर्मुक्तः, कर्माष्टकेन विना स्वेदनाद्यष्टकर्मरहित एव। विनायोगे तृतीया। सर्वकर्मकृत् सर्व-कर्मसु व्यवहारयोग्यो भवति। एतस्मादाहृतः सूतो, जीर्णगन्ध-समो गुणैः। र. र. स. ३-१४१। अयमेवाभिप्रायः—पारिभद्र-रसैरित्यादिना ५४-५५ श्लोकाभ्यामुक्तः ॥ ४७-४८ ॥

भाषा—शिंगरफ़ से पारा निकाले। उसकी विधि यों है कि हिंगुल को जम्बीरी के रस से दिनभर मर्दन करे। फिर नीचे के पात्र में इस हिंगुल को रख ऊर्ध्वपातनयन्त्र की विधि से आग देकर ऊपर के पात्र में लगे हुए निर्मल पारे को निकाल ले। इस प्रकार से शुद्ध पारा नाग वंग आदि दोषों तथा सात कञ्चुकों से रहित हो जाता है। अष्टकर्म के विना भी पारा रसकर्मों के योग्य होता है।

ऊर्ध्वपातनयन्त्र द्वारा पारद को ले लेने के पश्चात् उसे त्रिगुण वा चतुर्गुण वस्त्र से छान लेना चाहिए और उष्णकांजिक से धोना चाहिए। अथवा किसी अम्ल वा नमक के साथ दो दिन घोटकर जल से धोले फिर वस्त्र से छान ले।

॥ ४७—४८ ॥

अष्टकर्म यथा—

स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापने तथा।<br>
पातनं बोधनं चैव नियामनमतः परम् ॥ ४९ ॥<br>
दीपनञ्चेति संस्काराः सूतस्याष्टौ प्रकीर्त्तिताः ॥ ५० ॥

स्वेदनमित्यादिः—सार्धश्लोकः केषुचित्पुस्तकेषु दृश्यते, स च टीकाकृद्भिर्व्याख्यातोऽपि प्रक्षिप्तः प्रतिभाति। हिंगुलाकृष्टरसविध्योमध्यपतितत्वात। स्वेदनंत्वत्रनोक्तं मूले। रसयोगेषुविशेषफलप्राप्तये—सूतप्रमाणं सिकताख्ययन्त्रे दत्वा बलिमृद्घटितेऽल्पभाण्डे तैलाविशेषेऽत्र रसं निदध्यान्मग्नार्धकायं प्रविलोक्य भूयः। आषड्गुणं गन्धकमल्पमल्पं क्षिपेदसौ जीर्णबलिर्बलीस्यात। रसेषु सर्वेषुनियोजितोऽयमसंशयं हन्ति गदं जवेन। र. इ. चि. ८-२१-२२। अनया रीत्या षड्गुणं गन्धजारणं विधेयम् ॥ ४९-५० ॥

स्वेदन, मर्दन, मूर्च्छन, उत्थापन, पातन, बोधन, नियामन, दीपन, ये आठ संस्कार पारे के होते हैं। विना क्रम होने से श्लोक प्रक्षिप्त मालूम होते हैं।

मतान्तरम्—

दरदं तण्डुलस्थूलं कृत्वा मृत्पात्रके त्रिदिनम्।
भाव्यं जम्बीररसैश्चाङ्गेर्या वा रसैर्बहुधा ॥ ५१ ॥

ततश्च जम्बीरवारिणा चांगेर्या रसेन परिप्लुतम्।
कृत्वा स्थालीमध्ये निधाय तदुपरि कठिनीघृष्टम् ॥५२॥

उत्तानं चारु शरावं तत्र त्रिशद्वारं जलं देयम्।
उष्णं हेयं तथैव तदूर्ध्वपातनेन निर्म्मलः शिवजः॥५३॥

हिंगुलाद्रसाकर्षणे प्रकारान्तरमाह—दरदमिति-दरददेशोद्भवत्वात् दरद इति, स च सिन्धूद्गमप्रदेशः। सङ्गपो नदी मध्य

प्रदेशो वा इति भारतीयरसायनशास्त्रं गणेशदेसाई-कृतम् । 'पतितो दरदे देशे' इति र. र. स. १. ८६ । दरदं=हिंगुलं तंडुल-स्थूलं=तण्डुलाकृति विधाय, मृत्पात्रके=शरावादौ कृत्वा, जम्बीर-रसश्चाङ्गेर्या वा रसैस्त्रिदिनं भाव्यम् । चाङ्गेरी=चुक्रिका=दन्त-शोधिनी=चौपतिया=चलमोड़ी इति लोके, तत्र चाङ्गेरीरसेन बहुधा अनेकवारं भावना ॥ ५१ ॥ ततो दिनं भावनानन्तरम्, स्थालीमध्ये कृत्वा जम्बीरवारिणा चाङ्गेरीरसेन वा परिप्लुतं=निमज्जनावधि तण्डुलस्थूलं दरदमिति शेषः । तदुपरि—स्थाल्युपरि, कठिनीघृष्टं, अधस्तले कठिनीपङ्कलिप्तम् । उत्थितपारदकणानां शरावतलछिद्रेषु प्रवेशनिरोधार्थमिदम् । चारु=मसृणाधस्तलं स्थालीमुखरोधनयोग्यं च उत्तानं शरावं निधाय यथोक्तविधिना सन्धिरोधं विधाय चुल्यां संस्थाप्य ज्वाला देया । शरावोपरि शीतलं जलं देयमुष्णं सद्धे यमपनेयम् । तथैव त्रिंशद्वारं जलं देयम् । एवमूर्ध्वपातनेन-शिवजः=सूतो निर्मलो जीर्णगन्ध-समो भवति ॥५२—५३ ॥

भाषा—हिंगुल के चावलों के समान कण बना कर उसको मिट्टी के पात्र में तीन दिन तक जम्बीरी नीबू के रस या चांगेरी के रस से भली प्रकार भावनायें दे । इसके बाद जम्बीरी नीबू या चांगेरी के रस से (शिंगरफ के डूबने लायक ) हंडिया के तले में हिंगुल को डुबा दे । हंडिया के मुख में उत्तान शराव का ढक्कन दे पर ढकने से पूर्व शराव के नीचे के तले को, सेलखड़ी को पानी में पीसकर लेप दे ! फिर सन्धिरोध कर चूल्हे पर चढ़ावे । सराव

में ३० वार शीतल जल दे। गरम होने पर बदलता रहे। इस प्रकार ऊर्ध्वपातन से पारा शुद्ध हो जाता है ॥ ५१-५२-५३॥

मतान्तरम्—

पारिभद्ररसैः पेष्यं हिंगुलं याममात्रकम्।
जम्बीराणां रसैर्वाऽथ पचेत् पातनयन्त्रके ॥ ५४॥
तं सूतं योजयेद् योगे सप्तकञ्चुकवर्जितम्।
संशुद्धिमन्तरेणापि शुद्धोऽयं रसकर्म्मणि ॥ ५५॥

पुनर्मतान्तरे—पारिभद्ररसैरिति पातनयन्त्रम्-४७-४८ श्लोकयोर्व्याख्यातम्। पारिभद्रो=निम्बः तत्पत्ररसैस्त्वक्क्वाथेन वा याममात्रकं प्रहरमानम्। पातन=मूर्ध्वपातनम्॥ ५४-५५॥

भाषा-हिंगुल को नीम के रस से अथवा जम्बीरी नीबू के रस से एक पहर पीसे। फिर पातनयन्त्र में उड़ाले। ऊपर के पात्र में शुद्ध पारा मिलेगा। यह पारा सातों कञ्चुकों से रहित होगा। यह बिना अन्य संस्कारों के भी रसकर्म में शुद्ध माना गया है। ॥ ५४-५५॥

अथ मूर्च्छनम्—

गन्धकेन रसं प्राज्ञः सुदृढं मर्दयेद् भिषक्।
कज्जलाभो यदा सूतो विहाय घनचापलम् ॥ ५६॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो रसकोविदैः।
असौ रोगचयं हन्यादनुपानस्य योगतः ॥ ५७॥

रसस्य मूर्च्छनमाह—गन्धकेनेति—प्राज्ञो गुरुसमक्ष एव कृत-

पारदं क्रियो भिषक्, गन्धकेन सहार्थे तृतीया। रसं = सूतं, समान-मानं सुदृढं यथास्यात्तथा मर्दयेत, यदा सूतः घनचापलं = घनं सान्द्रं 'घनः सान्द्रे दृढे दार्ढ्ये इत्यमरटीकायां हेमचन्द्रः' मूर्तौ घनः ३-३-७७ इति हन्तेरप्घनादेशश्च। घनत्वमत्र [ि]तु जलापेक्षया ज्ञेयम्, चापलं = चाञ्चल्यम्, विहाय कज्जलाभः = कज्जलमञ्जनं तद्वदाभा कान्तिर्यस्य सः कज्जलाभो मसृणचिक्कणचाकचक्य-युतकृष्णवर्णः सूक्ष्मदर्शकयन्त्रेणाप्यदृश्यकण इत्यर्थः। तथा च—

धातुभिर्गन्धकाद्यैश्च, निर्द्रवैर्मर्दितो रसः।

सुश्लक्ष्णः कज्जलाभासः, कज्जलीत्यभिधीयते। र. इ. चू. ४-६।

दृश्यते तदाऽसौ रसकोविदैः = रसपण्डितैः, मूर्च्छितो = मूर्च्छा सञ्जाताऽस्य मूर्च्छितः। तारकादित्वादितच्। असौ अनुपानस्य योगतस्तत्तद्रोगहरानुपानयोगात्, रोगचयं = रोगसंङ्घं हन्यात्। विशेषस्त्वत्र—रसतरङ्गिण्याम्-त. ६-११२ १२८ श्लो. तो ज्ञेयः।

॥ ५६-५७ ॥

भाषा—पारद को आंवलासार गन्धक के साथ खूब मर्दन करे। इससे पारा अपनी घनता और चपलता को छोड़कर कज्जल के समान काला चूर्ण हो जायगा। इसे रसशास्त्र के ज्ञाता मूर्च्छित पारद कहते हैं। कज्जली या मूर्च्छित पारा पृथक् २ अनुपानों से रोगसमूह को नाश करता है ॥ ५६—५७ ॥

अथ मारणम्—

द्विपलं शुद्धसूतस्य सूतार्द्धं गन्धकं तथा।
कन्यानीरेण सम्मर्द्य दिनमेकं निरन्तरम्।

**रुद्ध्वा तद्भूधरे यन्त्रे दिनैकं मारयेत् पुटे ॥ ५८ ॥**

द्विपलमित्यादिरसमारणे—कज्जलीं विधाय कन्यानीरेण= कुमारीस्वरसेन निरन्तरमनवच्छिन्नमेकं दिनं सम्मर्द्य मूषायां रुद्ध्वा मुखरोधनं च विधाय। वालुकागूढसर्वाङ्गां गर्त्ते मूषां रसान्विताम्। दीप्तोपलैः संवृणुयाद्यन्त्रं तद्भूधराह्वयम्। र. र. स. ६. ४१। उक्तरूपे भूधरे यन्त्रे रसादिद्रव्यपाकानांमारणज्ञापनं पुटमितिपुटपाकवद् दिनैकं=एकं दिनं मारयेत ॥ ५८ ॥

भाषा—शुद्ध पारा दो पल, शुद्ध गन्धक १ पल, दोनों को कज्जली बना कर घीकुमार के रस से एक दिन निरन्तर मर्दन कर सम्पुट में बन्द करे और सूख जाने पर भूधरयन्त्र में १ दिन की पुट देकर मारण करे ॥ ५८ ॥

मतान्तरम्—

**भुजगवल्लीनीरेण मर्दयेत् पारदं दृढम्।**
**कर्कोटीकन्दमृण्मूषासम्पुटस्थं पुटेद्गजे।**
**भस्म तद्योगवाहि स्यात् सर्वकर्मसु योजयेत् ॥५९॥**

मतान्तरे—भुजङ्गवल्ली=पर्णपत्रम्, पानइति, तस्या नीरेण= रसेन पारदं दृढं कणाऽदर्शनावधि मर्दयेत्। ततः कर्कोटीकन्दः= बांझककोड़ा इति तत्कन्दमध्ये गर्त्त विधाय तत्र सूतं दत्वा कर्कोटीकन्दगर्भितः इति। शा. ध. १२. ४१। तत् सम्पुटस्थं=शरावसम्पुटाभ्यन्तरे कृत्वा गजे=गजपुटे। राजहस्तप्रमाणेन चतुरस्रं च निम्नकम्। पूर्णं चोपलसाठीभिः कण्ठावध्यथनिक्षिपेत्। विन्यसेत्

कुमुदीं तत्र पुटनद्रव्यपूरिताम्। पूर्वाच्छगणतोर्द्धानि गिरिण्डानि विनिक्षिपेत्। एतद्गजपुटं प्रोक्तं महागुणविधायकम्। र. र. स. १०. ५६-५८।

उपलसाठी गिरिण्डशब्दौ—अरण्योपलवाचकौ, पूर्वाच्छगणतोर्धानि महापुटप्रोक्तसार्धसहस्रवनोपलार्धानि सार्धं सप्तशतानीति यावत्। तत्र पञ्चशतानि कुमुद्या अधः, सार्धद्विशतानि कुमुद्युपरीति बोध्यम्। इत्युक्तलक्षणे पुटेत्। तद्भस्मयोगवाही=योगमनुपानविशेषं वहति तच्छील इति योगवाही (ताच्छील्ये णिनिः) सर्वकर्मसु बाह्याभ्यन्तरकार्येषु योजयेत्॥ ५६॥

भाषा—शुद्ध पारे को पान के पत्तों के रस से भली प्रकार मर्दन करे और बांझककोड़े के कन्द में छिद्र कर उस में इस पारे को भरे। फिर शरावसम्पुट में रख गजपुट में भस्म करे। यह भस्म योगवाही है। इसे सब कार्यों में प्रयुक्त करे॥ ५६॥

मतान्तरम्—

श्वेतांकोठजटानीरैर्मर्द्यः सूतो दिनत्रयम्।
पुटेत्तु चान्धमूषायां सूतो भस्मत्वमाप्नुयात्॥६०॥

पुनर्मतान्तरे—श्वेताङ्कोटः (ढेरा इति) तज्जटानीरैः=श्वेतदीर्घकीलमूलरसेन क्वाथेन वा सूतो दिनत्रयं मर्द्यः। ततोऽन्धमूषायामत्रैवानुपदं—द्वौभागावित्यादिना ८६-८८ श्लोकैः प्रोक्तायां वज्रमूषापरपर्य्यायाम्।

अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा । पिधानकसमायुक्ता किञ्चिदुन्नतमस्तका ॥ पत्रलेपे तथा रङ्गे वृन्दमेलापके तथा । सैव छिद्रान्विता मध्ये-गम्भीरा सारणोचिता । र. अ. । ६० ।

भाषा—श्वेत अङ्कोल की जड़ के रस से शुद्ध पारे को तीन दिन मर्दन करे । फिर अन्धमूषा में भरकर पुट दे तो पारा भस्म हो जाता है ॥ ६० ॥

देवदाली हंसपदी यमचिञ्चा पुनर्नवा ।
एभिः सूतो विघृष्टव्या पुटनात् म्रियते ध्रुवम् ॥६१॥

[ इति भस्म ]

देवदालीति—पुनः प्रकारान्तरेण— देवदाली = जीमूतकः कडुवीविन्दाल इति, हंसपदी गोधापदी (हंसराजः) यमचिञ्चा= अत्यम्लचिञ्चायामिति वै.श.सि., पुनर्नवा=प्रसिद्धा । विघृष्टव्यो मर्दनीयस्ततः पुटनम् ॥ ६१ ॥

भाषा—बंदालडोडा, हंसराज, यमचिञ्चा और पुनर्नवा, इन सब के साथ पारे को मर्दन कर पुट दें तो भी पारा अवश्य मर जाता है ॥ ६१ ॥

(यह पारे की भस्म हुई)

अथ रससिन्दूरम्—

भागो रसस्य त्रय एव भागा
गन्धस्य माषः पवनाशनस्य ।

सम्मर्द्य गाढं सकलं सुभाण्डे

तां कज्जलीं काचकृते निदध्यात् ॥ ६२ ॥

संवेष्ट्य मृत्कर्पटकैर्घटीं तां

मुखे सुचूर्णां गुटिकाञ्च दत्वा।

क्रमाग्निना त्रीणि दिनानि पक्त्वा

तां वालुकायन्त्रगतां ततः स्यात् ॥

बन्धूकपुष्पारुणमीशजस्य

भस्म प्रयोज्यं सकलामयेषु।

निजानुपानैर्मरणं जराञ्च

हन्त्यस्य वल्लः क्रमसेवनेन ॥ ६४ ॥

रस सिन्दूरः

अन्तर्धूमविधिना सर्वरोगहरं सिद्धं रससिन्दूरमाह—भाग इति–रसस्य=शुद्धसूतस्य भाग=एकोभागः, गन्धस्य त्रयोभागाः, एव शब्दो न्यूनातिरिक्तभागपरिहारार्थः। पवनाशनस्य=नागस्य माषोऽष्टौ रक्तिकाः 'गन्धस्यभागो नवसादरस्य' इति मुख्यः पाठः। भागशब्दस्तु कर्षत्रयवाची इति वृद्धाः। केचन पवनाशनशब्देन सीसकं व्याचक्षते, तत्तु धातुवाद उपयुज्यत इति ज्ञेयम्। आ० प्र० १–३५६। रसकामधेनौ तु अत्र सर्वत्र पादांशो नवसार इत्यु-। सम्प्रदायाद्गद्याणत्रयस्य माषो नवसार इति।........'अर्ध-पलं शुद्धरसं कर्षत्रितयं विशुद्धगन्धस्य। सीसं माषमितं स्यात्'

इति । अन्तर्धूमे नवसारयोगे कदाचित्सत्रालुकायन्त्रकूपिका-स्फोटभयं भवति, तत्र सावधानता । रसप्रकाशसुधाकरे तु-रस-माणिक्यरसे, नागयोगात्सकलरोगविघातककामुकत्वकरादिगुणाः दृश्यन्ते । ३-२०. २२ ।

नागदानपक्षे—लोहपात्रे नागं द्रवीकृत्य तेन सह पारदं विमर्दयेत् । ततो गन्धं दत्त्वाऽवतार्य सकलं=त्रयमेव गाढं यथास्यात्तथा सम्मर्द्य मसृणं चाकचक्ययुतनिश्चांसवत्खल्वमुसललग्नं यावदित्यर्थः । ततः तां कज्जलीं काचकृते सुभाण्डे (आतशी शीशी बोतल इति वा ) 'पादांशे कज्जलीपूर्णा' इति नयेन, अन्तर्धूमे पादांशादपि न्यूनां निदध्यात्=पूरयेत ॥ ६२ ॥

तदनु तां घटीं=काचकूपीं 'द्वयो घंटः' इति. अ० । मृत्कर्पटैः=सुचिक्कणमृल्लिप्तसप्तकर्पटैः संवेष्ट्य=परितो वेष्टयित्वा । संरुध्येति तु-अपपाठः । मुखे=काचकूपीमुखे, गुटिकां=कूपीमुखप्रवे-

वालुकायन्त्रं लवणयन्त्रञ्च ॥

शार्हां खटिकेष्टकाबालुकाप्रचुरांचक्कणमृदाद्यन्यतमनिर्मितां दत्त्वा सचूर्णां=गुडसुधाचूर्णेन बहिः त्रिश्चतुर्वा लिप्तामित्यर्थः। ततस्तां काचघटीं वालुकायन्त्रगतां 'सच्छिद्रायां मृदस्थाल्यां कूपिकां तां निवेशयेदित्युक्तेः' छिद्रं च कनिष्ठाङ्गुलिमूलप्रवेशार्हं ज्ञेयम्। अथ स्थालीछिद्रोपर्यभ्रपत्रं दत्त्वा तदुपरि कूपिकां निधाय कूपिकागलपर्यन्तं वालुकाभिः पूरयेत्। इदमेव वालुकायन्त्रं नाम। अतः परं क्रमाग्निना=प्रथमदिने मन्दाग्निना, द्वितीयदिने मध्याग्निना, तृतीयदिने खराग्निना पाकं कृत्वा स्वाङ्गशीतं कूपिकागले लग्नं बन्धूकपुष्पारुणं=जपाकुसुमसङ्काशमीशजस्य=सूतस्य सकलामयेषु=सर्वरोगेषु, निजानुपानैः=स्तत्तद्रोगहरानुपानैर्भस्म प्रयोज्यम्। क्रमसेवनेन=पथ्यक्रमसेवनेन, अस्य वल्लः=द्विगुञ्जः। परीक्षकास्तु* अर्धरक्तिकामात्रामाहुः। मरणं जरां च हन्ति।

---

* Approximate one grain. Further, the administration of small doses of mercury to rabbits, dogs and men causes an increase in the number of redblood corpuscles while the body gains in weight and the general nutrition is improved. Larger doses, however, have been found to act in the reverse way by causing a diminution in the amount of haemoglobin, in the number of corpuscles and in the weight.

Page. 421. Indigenous Drugs, By Chopra.

अस्यानुपानानि—

वाते सक्षौद्रपिप्पल्यपि च कफरुजि त्र्यूषणं साग्निचूर्णम्
पित्ते सैलं सितेन्दुर्व्रणवति तुवरा गुग्गुलुश्चारुशुद्धः।
चातुर्जातेन पुष्टौ हरनयनफला शाल्मली पुष्पवृन्तम्
किंवा कान्तालताटाभरणमपि रसे स्यादनूपानमेतत् ॥

। आ. प्र. १-३५७ ।

प्रमेहकरिकेशरीप्रबलशूलकालानलो।
भगन्दरहरः परं खलु महाज्वरेभाङ्कुशः॥
समस्तगदतस्करः सकलशोषसंशोषको।
रसोऽतुलविलासदो विजयते हि सिन्दूरकः॥
गुल्मप्लीहहरो रतिप्रियकरो यक्ष्मेभपञ्चाननः।
पाण्डुस्थौल्यविधूननो व्रणहरो रौद्याग्निमांद्यापहः॥
कुष्ठव्याधिनिषूदनो रतिकलाप्रौढाङ्गनारञ्जनः।
कान्तामस्तकभूषणो रसपतिर्भूयात्सदा श्रेयसे॥

अपि च—नियमयति रसेशः पञ्चवातान्नितान्तम्
प्रसरति धमनीनां स्वक्रिया वातसाम्ये।
द्रढयति भृशमादौ जालकं नाड़िकानाम्
रमयति च ततोऽसौ मानसं सेवकानाम्॥
बहिर्गमनशीला ये स्वेदविण्मूत्रमारुताः
निरायासं विनिर्यान्ति रसस्यास्य निषेवणात्॥
पित्तं निःसारयत्येष न रेचयति कर्हिचित्।
न च पित्ताशयं कोष्ठं विक्षोभयति भक्षितः॥

स्फीततां दन्तवेष्टानां मुखपाकं क्षतादिकम् ।
लालास्रावं प्रदाहञ्च न सूते चिरसेवितः ॥
विकारानीदृशानन्यान् दारुणान् पारदोत्थितान् ।
न जातु प्रकरोत्येष रसः सिन्दूरसंज्ञकः ॥

पुनश्च--ज्ञातपुष्पतुलसीदलद्रवैः शृङ्गवेरजरसेन वा सदा ।
नागिनीस्वरसकेन वा भिषक् योजयेद्रसमिमं नवज्वरे ॥
छिन्नोद्भवापर्पटधान्यकानां क्वाथेन तुर्यांशसमाहितेन ।
कान्तालालाटाभरणं रसेशं जीर्णज्वरे वैद्यवरः प्रदद्यात् ॥

वाजीकरणे तु—शाल्मलीमूलचूर्णेन विदार्यादिगणेन वा ।
प्रयुक्तो रससिन्दूरो वाजीकरण उत्तमः ॥
भस्मना गगनस्येह काञ्चनेन मृतेन वा ।
उभाभ्यामेव वा युक्तो धातुवृद्धिकरो मतः ॥
जातीफलं देवपुष्पं कर्पूरञ्चाहिफेनकम् ।
एषां चूर्णेन सहितो स्वप्नमेहहरोमतः ॥ र. त. अ. ६ ।

द्वित्राङ्गुलं विकशिते गर्भाशयमुखे दुग्धेन प्रयुक्तो रससिन्दूरो वृहद्वातचिन्तामणिवत् सद्यः प्रसवं करोति। कणाचूर्णमधुना प्रत्यहं द्विः प्रयुक्तस्त्रिभिर्दिनैः प्रतिश्यायं समूलकासं कसति। रससिन्दूरस्य विशेषानुपानानि तु तत्तद्रोगहराणि ज्ञेयानि। काचकृतेत्यत्र काचघटे, गुटिकामत्र खटिकामिति पाठान्तरे।

एकगुणगन्धजारिते षड्गुणगन्धजारिते वा रससिन्दूरे हि नियमतः पारदषष्ठांश एव गन्धो भवति न न्यूनातिरिक्त इति डा० प्रफुल्लचन्द्र रायः (History of Hinbu Chemistry)

एवं पारदगन्धकयोर्निश्चितमात्रया नियतसम्बन्धेन रूपगुणेन च रासायनिकविधिना सम्भवति रससिन्दूरोरस कर्पूरश्च ॥ ६३—६४ ॥

भाषा—अब पारे का अन्तर्धूम भस्म (रससिन्दूर) कहते हैं। शु० पारद १ भा०, शु० गन्धक ३ भा०, नौसादर २ मासा, कज्जली बना नौसादर मिला घोट ७ कपड़ मट्टी की हुई आतशी शीशी में (बोतल से भी कार्य सिद्ध होता ही है) भर शीशी के चतुर्थांश भाग, अर्थात् शीशी ३ हिस्सा खाली रहे एक हिस्से में भी कुछ कम भाग में कज्जली भरदे हांडी के ठीक मध्यतल में कनिष्ठाङ्गुलि मूल प्रवेश योग्य छिद्र बना हांडी के बाहर भी ३-४ कपड़ मट्टी कर सुखा ले। हांडी के भीतर छिद्र के ऊपर अभ्रक का १ पत्र रख इसके ऊपर शीशी को रख हांडी में शीशी के गले तक बालू भरदे, अब शीशी के मुख में समाने लायक खड़िया, ईंट या रेत वाली मिट्टी का डाट बना रख दे इसको गुड़ चूना पानी से कपड़े को भिगा २-३ बार सब तरफ लपेट दे अर्थात मुख भली प्रकार बन्द हो जाय। अब चूल्हे में रख प्रथम दिन मन्द, २ दिन मध्य, ३ दिन तीक्ष्ण आंच दे। स्वाङ्गशीत होने पर शीशी के गले में लगा जपाकुसुम ( गुड़हल ) के समान लाल पारद भस्म ( रससिन्दूर ) निकाल अनुपान भेद से सब रोगों में दे। यह बुढ़ापा आर मृत्यु को भी रोकता है। पवनाशन शब्द का अथ सीसा भी होता है सीसा डालना हो तो सीसे को लोहे के पात्र में पिघला कर पारा मिला घोट

गन्धक डाल कज्जली बना ले। नौसादर डालना आयुर्वेद प्रकाश का मत है। पर नौसादर की भाफ से मय चूल्हे के बालुकायन्त्र के फटने का भय रहता है सावधान हो अन्तर्धूम बनावे। मात्रा ½ से १ रत्ती तक ॥ ६४ ॥

मतान्तरम्—

पलमात्रं रसं शुद्धं तावन्मात्रन्तु गन्धकम्।
विधिवत् कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारिभिः ॥ ६५ ॥
भावनात्रितयं दत्त्वा स्थालीमध्ये निधापयेत्।
विरच्य कवचीयन्त्रं वालुकाभिः प्रपूरयेत् ॥ ६६ ॥
दद्यात् तदनु मन्दाग्निं भिषग् यामचतुष्टयम्।
जायते रससिन्दूरं तरुणादित्यसन्निभम्।
अनुपानविशेषेण करोति विविधान् गुणान् ॥ ६७ ॥

बहिर्धूमविधिना रससिन्दूरकरणमाह पलमात्रमिति—रसं=सूतं तावन्मात्रन्त्विति—समानमानस्योपलक्षणं नपलमानस्य नियमः। न्यग्रोधाङ्कुरवारिभिः=न्यग्रुणद्धीति न्यग्रोधो=वटः तस्य अंकुरा अभिनवोद्भिदो जटास्तद्वारिभी रसैः क्वाथेन वा भावनात्रितयं त्रिवारंभावयित्वा-द्रवेण यावता सर्वं प्लुतं भवति तावद्भावनावारि देयम्। स्थालीमध्ये=हण्डिकायां सच्छिद्रायामित्यपि ज्ञेयम्। कवचीयन्त्रम्-नातिह्रस्वां काचकूपीं न चातिमहतीं दृढां।

वाससा कर्दमाक्तेन परिवृत्य समन्ततः। संलिप्य मृदुमृत्स्नाभिः शोषयेद्भानुरश्मिना। निधाय भेषजं तत्र मुखमाच्छादयेत्ततः। कठिन्या दृढया वापि पचेद्यन्त्रे विधानतः। कवचीयन्त्रमेतद्धि रसादिपचने मतम्। (वै. श. सि. आत्रेयः) इति लक्षितं विरच्य तत्र निधापयेत्=स्थापयेत् तद्वालुकाभिः कवचीयन्त्रस्य आगलं स्थालीं प्रपूरयेत्। वालुकादानप्रयोजनन्तु सर्वतः समानतापप्राप्त्यर्थं सहसोष्णतानिवारणाय च। तदनु मन्दाग्निं यामक्रमेण मन्दमध्यखरमग्निं यामचतुष्टयं=प्रहरचतुष्टयं दद्यात्। तरुणादित्येत्यत्र तरुणारुणेति पाठान्तरम्, तत्सन्निभं=सदृशम्॥६५–६७॥

भाषा—शुद्ध पारा १ पल, शुद्ध गन्धक १ पल दोनों की कज्जली बना बड़ के अंकुरों के स्वरस से तीन भावनायें दे। फिर एक काचकूपी के चतुर्थांश में भरे। इस काचकूपी पर पूर्व ही कपड़मिट्टी कर रखनी चाहिये। इस कवचीयन्त्र को एक बड़ी हांडी में रख बालु से भर दे। नीचे ४ पहर तक मन्द मध्य तीव्र अग्नि दे। इस से तरुण सूर्य के समान लाल रंग का रससिन्दूर बनता है। इसे विशेष अनुपानों से दें तो विविध गुण करता है।

जब गन्धक का धूम निकलना बन्द हो जाता है तब मिट्टी के डाट से शीशी का मुख बन्द कर दिया जाता है इस समय कुछ देर तक मन्द आँच देने के बाद तीक्ष्णाग्नि दे॥ ६६–६७॥

मतान्तरम्—

पृथक् समं समं कृत्वा पारदं गन्धकं तथा ।
नरसारं धूमसारं स्फटिकं यासमात्रकम् ॥ ६८ ॥
निम्बूरसेन सम्मर्द्य काचकूप्यां निवेशयेत् ।
मुखे पाषाणखटिकां मुद्रां दत्वा प्रलेपयेत् ॥ ६९ ॥
सप्तभिर्मृत्तिकावस्त्रैः पृथक् संशोष्य वेष्टयेत् ।
सच्छिद्रायां मृदः स्थाल्यां कूपिकां तां निवेशयेत् ॥७०॥
पूरयेत् सिकतापूरैरागलं मतिमान् भिषक् ।
निवेश्य चुल्यां दहनं मन्दं मध्यं खरं क्रमात् ॥७१॥
प्रज्वाल्य द्वादशं यामं स्वाङ्गशीतं समुद्धरेत् ।
स्फोटयित्वा तु मुक्ताभमूर्ध्वलग्नं बलिं त्यजेत् ।
अधःस्थं रससिन्दूरं सर्वरोगेषु योजयेत् ॥ ७२ ॥

नरसारादियोगेन विशेषगुणप्रदं रससिन्दूरमाह—पृथगिति—नरसारं=नौसादर इति, धूमसारं=गृहधूमम्, स्फटिकं=रक्तस्फटिकाम्। 'तोरी गुर्जरदेशोद्भवा स्फटिका या रक्तवर्णा भवति' इति. शा.ध. गूढार्थदीपिकायामुक्तेः। रक्तवर्णा स्फटिका हि लोहयोगाद्रसस्य गुणाधिक्यकरी भवति। पृथक् समं समं=सर्वं समानमानम्, नरसारश्चात्र-एकभागापेक्षया चतुर्थांशो ज्ञेयः। गैरिक तुवरीत्यादि—आयुर्वेदप्रकाशीययोगे 'नवसादरम्…… पारदाच्चतुर्थांशमिति शेषः' इति दर्शनात् १-३६२–३६६। निम्बु-

रसेन याममात्रकं=यामं सम्मर्द्य काचकूप्यां निवेशयेत। मुखे= काचकूपीमुखे पाषाणखटिकामिति कूपीगलप्रवेशार्हां खटीनिर्मित कवलिकां दत्त्वा ( समये कार्यार्थमनेके कवलिकाः कार्याः। ताश्च इष्टकादिभिरपि कार्याः ) मुद्रामिति–इत्थमत्र प्रक्रिया—प्रथमं कवलिकामप्रदायैव चतुर्यामं मन्दवह्निं दद्यात्, वारम्वारं प्रतप्तरक्तवर्णलोहशलाकया च कूपीमुखे नरसारं गन्धकं च दाहयेत। अन्यथा–कदाचिन्नरसारेण कूपिकामुखे रुद्धे सचुल्लिकावालुकाकवचीयन्त्रस्य विध्वंसो महान्विस्फोटश्च भवत्यसावधानतायाम।

अतएव—पाके रुद्धं मुखं कूप्या नरसारेण जायते।
ततः शलाकया कुर्यात्कूपिकानाशशान्तये॥
इत्युक्तम्। आ० प्र० १-३५२।

यदा च सावधानतया—आकूपीतलमीषदुष्णशलाकयाऽन्वेषिते गन्धस्य पिच्छिलः पङ्कः प्रतीयते, तदा न जीर्णो गन्धइति ज्ञेयम। जीर्णे च गन्धे पारदचूर्णं खरं प्रतीयते, शलाकालग्नं द्रव्यं घृष्टं सद्रक्तं भवति। तदनु कञ्चित्कालमग्निं मन्दतरं कृत्वा मुद्रां दत्त्वा गुडसुधाचूर्णयुतकर्पटेन समन्ततः प्रलेपयेत त्रिश्चतुर्वा। ततो मुद्राशोषणं यावत् मन्दमेवाग्निं दद्यात्। सप्तभिर्मृत्तिका वस्त्रैरिति= सप्तमृत्कर्पटैर्यथा-एकवारं मृत्तिकावस्त्रैः परिवेष्ट्य शोषयित्वा च पुनर्वेष्टयेत्। एवं सप्तवारं कुर्यात। सच्छिद्रायां=तले कनिष्ठाङ्गुलिमूलप्रवेशयोग्यच्छिद्रायाम। मृदस्तीव्राग्निसहनयोग्यमृदः, स्थाल्यां=स्थालीछिद्रे तां कूपिकां निवेशयेत्। तत आगलं =कूपिकागलदेशं यवत सिकतापूरैर्वालुकाभिः पूरयेत्

ततश्चुल्यां निवेश्य दहनं देयम्। ऊर्ध्वलग्नं=कूपिकोर्ध्वभागे लग्नम्, अधस्थं=कूपिकानाल एव वलेरधस्थम्। पात्राधस्तु न रससिन्दूरं सम्भवति। यदि च कूपिकानालमङ्गुलमानमेव स्यात् तत्र च गुटिकाप्रवेशाद्गलाधः सिन्दूरं तिष्ठति तदा हस्तस्पर्शनादेव मुक्ताफलानीव कणाः सिन्दूरस्य भवन्ति, कूपिकागले यावदूर्ध्वलग्नं भवति तावदेव कठिनं भवति। कुशलास्तु गुटिकामदत्त्वैव सम्पादयन्ति। तथाहि—३६५° शतांशोत्तापे पारदमुड्डीयते ततो न्यूनतापे च नोड्डीयते। अतः ३६५° शतांशतो न्यूनतापः कूपिकामुखे सम्पादनीयस्तत्रैव पारदः कठिनीभवतीति रहस्यम्।

सरलसिन्दूरविधिः—यदि त्वरितं रससिन्दूरनिर्माणस्यावश्यकता तत्र तदानीमेव लघुकूपिकां त्रिभिर्मृत्तिकावस्त्रैरावेष्ट्याऽग्नितापे शोषयित्वा तत्र कज्जलीमापूर्य केवलामेव कूपिकां (न बालुकायन्त्रे) कोकिलाग्नौ निधाय सावधानतया समन्तत आगलं कूपीं ज्वलद्भिः कोकिलैः पूरयेत्। गलदेशादुपरि च यथा–३६५°। शतांशतो न्यूनएव तापो यथास्यात्तथा प्रयतनीयम्। शलाकयाऽन्वेषिते दग्धे च गन्धे कूपीमुखे गुटिका देया न वा यथाकौशलम्। इत्थं घटिकाद्वयेनैव सम्पद्यते रससिन्दूरम्। गुणमपि करोत्येव। गन्धेन सहाधिककालपक्वस्तु विशेषगुणाय कल्पते।

अथ मल्लसिन्दूर प्रकारः—

नवकर्षमितः सूतो रसचन्द्रश्च तत्समः।
चतुःकर्षमितो मल्लः सार्धपञ्चाक्षसम्मितः॥
गन्धकश्चेति तत्सर्वं काचकूप्यां निधापयेत्।
क्रम वृद्धाग्निना सम्यग्वालुकायन्त्रगं पचेत्॥

वह्निं षोडशयामञ्च दत्त्वा शीतं समुद्धरेत् ।
रसोऽयं मल्लसिन्दूरः सर्ववातविकारनुत् ।
युक्तानुपानतो हन्यात् सन्निपातादिकान् गदान् ॥

रसायनसंग्रहे कूपीपक्वरसनिर्माणविज्ञानात्, पृ. २६६. । रसचन्द्रो=रसकर्पूरः । एवं तालसिन्दूर, शिलासिन्दूर, विषसिन्दूरादयो विशेषाः रसायनसारतो ज्ञेयाः । विसूचिकात्रिदोषव्याधीन दूरीकर्त्तुमतुलप्रभावाः । मधुमेहे—मल्लसिन्दूरस्य ½ र. स्वर्जिकाक्षारस्य द्विरक्ति रित्येका मात्रा प्रातः सायं निम्बूकरसजललवणानुपानेन दत्तैकेनैव दिनेन पिपासामुखशोषादीनुपद्रवानपाकरोति । मध्याह्ने चोदुम्वरफलस्वरसेन त्रिफलया वा चन्द्रप्रभावटी बद्धकोष्ठाय देया । आरोटकमन्तरेण हिङ्गुलगन्धकाभ्यां पिष्टाभ्यामपि रससिन्दूरः सम्पाद्यः । र. इ. चि. २-१४। आरोटकः=शुद्धसूतः । रसचन्द्रविहीनोऽपि मल्लसिन्दूरो भवति ॥ ६८-७२ ॥

बहिर्धूमविधि से रससिन्दूर बनाना ।

भाषा—शुद्ध पारा १ भाग, शुद्ध गन्धक १ भाग, नवसादर १ भाग, रसोई घर का धुवां १ भाग, फिटकरी १ भाग । कज्जली में शेष द्रव्य मिला भली प्रकार मर्दन करे । अनन्तर नीबू का रस डाल १ पहर मर्दन करे पश्चात् इसे एक काचकूपी में भर दे और कूपी के मुख पर खड़िया का डाट लगा सन्धिस्थान बन्द कर दे । इस कूपी पर सात वार कपड़मिट्टी कर धूप में सुखा ले । फिर मध्य में छिद्र वाली मिट्टी की हांडी में इस कूपी को रख दे और हांडी में इतना रेता भरे कि काचकूपी के

गले तक आ जाय। अब इस हांडी को चूल्हे पर रखकर, मन्द, मध्य और तीव्र आंच क्रमशः दे। इस प्रकार १२ पहर आंच देकर स्वाङ्गशीतल होने पर कूपी को बाहर निकाले। इस कूपी को तोड़े और कूपी के गले में लगी हुई श्वेतवर्ण की गन्धक को फेंकदे। गन्धक से नीचे कूपी के स्कन्ध देश में रससिन्दूर लगता है उसे लेकर सब रोगो में प्रयुक्त करे॥ ६८-७२॥

अथ रसकर्पूरः—

टङ्कणं मधु लाक्षा च ऊर्णा गुञ्जायुतो रसः।
मर्दितो भृङ्गजद्रावैर्दिनं सम्पुटमागतः।
ध्मातो भस्मत्वमाप्नोति शुद्धकर्पूरसन्निभः॥ ७३॥

अथ सूतस्य हरितवायु ( CHLORINE ) योगमाह—टङ्कणमिति-टङ्कणं सोहागा इति, मधु=क्षौद्रम्, लाक्षा बदरीपिप्पलवृक्षादिषु कीटनिर्मितद्रव्यविशेषो जलधौ प्रवालवत्। ऊर्णा भस्म ग्राह्यम्, गुञ्जा=श्वेतरक्तकृष्ण भेदेनत्रिविधा-अत्र तु श्वेता ग्राह्या, सर्वसमानमानो रसः। भृङ्गजद्रावैः कृष्णभृङ्गराजरसेन, दिनं मर्दितो दृढं=पारदकणविलयनं यावदित्यर्थः। भृङ्गजद्रावैरत्र भूगजद्रावैरिति पाठो भूनागशब्दवाचीति र. यो. सा.। ततः सम्पुटे कृत्वा ध्मातः=पुटितः। ध्मा शब्दाग्निसंयोगयोरित्यस्मात्, 'आदिकर्मणि क्तः'। शुद्धकर्पूरसन्निभं=शुद्धो मलिनताहीनो यः कर्पूरः तत्सन्निभं=सदृश मतएव रसकर्पूर इत्युच्यते। भस्मत्वमाप्नोति। अत्रानुक्तमपि भल्लातकं ददति वृद्धाः पारदतुल्यम्। र.इ.चि. २.३२।

भल्लातककल्पविधिना भल्लातकघृतक्षीराद्यनुपानेन फिरङ्गे तथाऽन्येषु रक्तविकृतिजरोगेषु चमत्करोति सर्वविधोऽपि रसकर्पूरः। गुरुमार्गेण संसेव्यः फिरङ्गान्तकरो रसः। गोधूमचूर्णमध्यस्थं कृत्वा शोथं न विन्दति। दन्तस्पर्शो यथा न स्यात्तथातमम्भसा गिलेत इति. र. यो. सा. [अधिकः पाठः] ॥ ७३ ॥

भाषा—सुहागा, शहद, कच्ची लाख, ऊन, रत्तियां प्रत्येक द्रव्य एक भाग ले, पारा १ भाग ले। सब को पीस भांगरे के रस में एक दिन मर्दन करे, फिर अन्धमूषा में बन्दकर धौंकनी से धौंके तो पारा भस्म हो जाता है और शुद्ध कपूर के समान पारदभस्म मिलता है अतएव इसका नाम रसकपूर है ॥ ७३ ॥

मतान्तरम्—

पिष्टं पांशुपटुप्रगाढममलं वज्र्यम्बुणा नैकशः।
सूतं धातुगतं खटीकवलितं तत्सम्पुटे रोधयेत्॥
अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढम्।
घस्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः॥७४॥

तद्वल्लद्वितयं लवङ्गसहितं प्रातः प्रभुक्तं नृणा-
मूर्ध्वं रेचयति द्वियाममसकृत् पेयं जलं शीतलम्।
एतद्धन्ति च वत्सराधिकविषं षाण्मासिकं मासिकं
शैलोत्थं गरलं मृगेन्द्रकुटिलोद्भूतञ्च तात्कालिकम्॥७५॥

( रसकर्पूरमिति रसमञ्जरीकारः श्वेतभस्मेति चन्द्रिकाकारः )

मतान्तरेण रसकर्पूरविधानमाह—पिष्टमिति–अमलं सूतं पांशुपटुप्रगाढं धातुयुतं खटीकवलितं वज्र्यम्बुणा नैकशः पिष्टं तं सम्पुटे रोधयेत, लवणस्य-अन्तस्थं तस्य च तले घस्रं दृढं वह्निं प्रज्वाल्येत्यन्वयः। अमलं=निर्मलं शुद्धमित्यर्थः, सूतं=पारदम्, देहलोहमयीं सिद्धिं सूते सूतस्ततःस्मृतः' र. र. स. १-७८। पांशुपटुप्रगाढ़ं=पांशू रेणुः, 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना' इति-अ.। पांशुजं पटुः 'पांशुपटुः' पटुर्दक्षे च....छत्रालवणयोरपि इति, अ. टी. मेदनी। पटुशब्दो लवणवाचकः, खारीलवणमिति आ. प्र०। तत्प्रगाढं=दृढयुतमित्यर्थः। धातुयुतं=गैरिकयुक्तम्। 'धातुर्मन शिलाद्यद्रेर्गैरिकन्तु विशेषत' इति. अ.। खटीकवलितं=खटी=कठिनी–श्वेतोऽत्र खटिका प्रोक्तः। र. र. स. ३-१३। तया कवलितं 'ग्रासस्तु कवलार्थकम्' इति. अ.। कवलंसञ्जातमस्येति कवलितम्, तारकादेराकृतिगणत्वादितच्। खटिकाभागयुतमित्यर्थः। तथाहि-पांशुलवणगैरिकखटिकानां प्रत्येकं समानमानं सर्वसमं पारदमेकीकृत्य वज्र्यम्बुणा=वज्री=स्नुही तदम्बुना=दुग्धेन रसेन वा, नैकशो=बहुवारं पिष्टं=मर्दितं नष्टपिष्टीकृतमित्यर्थः। तं पिष्टसमुदायं सम्पुटे=शरावसम्पुटे कृत्वेति शेषः। रोधयेत=सन्धिरोधं कुर्यात। तदनु तं सम्पुटं लवणस्य=लवणयन्त्रस्य, बालुकायन्त्रे बालुकास्थानेलवणदानेन लवणयन्त्रं भवति। अन्तस्थं=लवणस्य मध्यस्थितमुपर्यधो लवणदानेन सम्पुटं मध्ये कुर्यात्। तस्य=लवणयन्त्रस्य तले, घस्रं=दिनम्। अत्यन्तयोगे द्वितीया। दृढं वह्निं प्रज्वाल्य—अथ स्वाङ्गशीतकरणा-

नन्तरं शनैः सम्पुटमुद्घाट्य–इन्दुकुन्दधवलं=इन्दुश्चन्द्रः कुन्दं माध्यं तद्वद्धवलं=श्वेत मुपरिस्थं सम्पुटोर्ध्वशरावान्तर्लग्नं भस्म शनैर्ग्राह्यम्। तदिति तस्यार्थेऽव्ययपदम्। वल्लत्रितयं=रक्तिकाचतुष्टयं लवङ्गसहितं=लवङ्गकृतसम्पुटगर्भितं प्रातः प्रभुक्तं=सेवितं सत् त्रियामं=यामत्रयं यावदसकृदनेकवारम्, ऊर्ध्वं रेचयति=वमनं करोति, शीतलं जलं पेयमिति-असकृत्पदमत्रापि योजनीयम्। एतेनामाशयगतं विषं बहिरायाति। आमाशयादधः प्राप्तं च रेचनेन। वत्सराधिकविषं=वत्सरातीतम्, षाण्मासिकं=षण्मासभवं मासिकं=मासभवम्, शैलोत्थं=पर्वतप्रभवं सोमल हरितालमनःशिलादि, गरलं=कृत्रिमं विषम, मृगेन्द्रकुटिलोद्भूतं='सिहश्मश्रुभक्षणजनित' मिति. आ. प्र.। तात्कालिकं=तत्कालजातम्। अयं योगः संस्कृतटीकाकृद्भिस्तत्तद्देशभाषाकृद्भिश्चाऽन्यथैव व्याख्यातः। पी. सी. राय महोदयेन हिन्दू कमिस्ट्री इतिहासेऽपि तथैव व्याख्यातः। एवं कुलकर्णिना-र. र. स. भाषायाम्। रसकर्पूरस्य यः कोऽपि योगो द्विरक्तिमात्रया पञ्चरक्तिस्वर्जिक्षारेण सायं प्रयुक्तः प्रातर्द्विस्त्रिर्वा मलं पातयति। यकृच्छोधनं च करोति। प्रायः सर्वत्र रेचनयोगे प्रचरति। प्रबलवमने विशेषतो विषमज्वरोद्भूते रक्तिकाषोडषांशमस्य रक्तिकाचतुर्थांश स्वर्जिक्षारेण संयोज्य (क. $\frac{1}{16}$ र.। स्व. $\frac{1}{4}$ र.) शीतलजलेन हिमजलेन वा अर्धघटिकया पुनः पुनः सेवितो महोपकारं करोति। अत्र हिमाचूषणमपि सततं करणीयम्। एवं हिक्कायामपि ताम्रभस्मवत्–हरीतकी प्रयोगवच्च। रसकर्पूरस्योर्ध्वपातनयोगेषु सोमलः

तालादियोगे कुष्ठफिरङ्गव्रणरोगादिहरगुणोदयो भवति विशेषेण, 'तालमिश्रश्च कुष्ठहरो विशेषेण' र. इ. चि. ९. २७. । नैकश इत्यत्र चैकश इति, धातुयुतमत्र धातुगर्तमिति, तल इत्यत्र जल- इति, दृढमत्र हठादिति, घस्रमत्र शुभ्रमिति, द्वितयमत्र त्रितयमिति, द्वियाममित्यत्र त्रियाममिति, वत्सराधिकमत्र वत्सरावधीति- पाठान्तराणि ॥

रसपुष्पं पित्तहरं मूत्रलं व्रणदोषहृत् ।
परं विरेचनकरं तथा भूतविषापहम् ॥

स्वस्थीकरणमत्यन्तं जलीयांशविशोषणम् ।
पित्ताशयं तु विक्षोभ्य मलपित्तापसारकम् ॥

कृमीन् विषूचिकोद्भूतान् हिक्काञ्चैव फिरङ्गकम् ।
जलोदरादिकान् रोगान् नाशयत्यविलम्बितम् ॥

मात्रा— गुञ्जार्धतः समारभ्य सार्धगुञ्जाद्वयोन्मिता ।
रसपुष्पस्य मात्रा स्यान्मात्राविन्मतसम्मता ।

रेचनाय मता मात्रा सार्धगुञ्जाद्वयोन्मिता ।
गुञ्जाष्टमांशप्रमिता मात्रा हिक्कामये हिता ॥

फिरङ्गरोगाय मता गुञ्जापादांशसंमिता ।
इयमेव मता मात्रा शिशूना तु विरेचने ॥

चन्दनादिवटी—

रक्तचन्दनमथोषणं सिता कुङ्कुमं रससुमं लवङ्गकम् ।
तोलकैकमितमेव वै पृथक् स्वाददीत रसतन्त्रकोविदः ॥

रक्तिकैककर्मिता वटी कृता प्रत्यहं तु नवनीतयोजिता।
चन्दनादिवटिकेयमुत्तमा हन्ति दुर्जयफिरङ्गजां व्यथाम् ॥

अत्रास्माकमनुभवः —

अस्या वटिकायाः—

उशव्वचोपचीनीभ्यां क्वाथो माक्षिकसाक्षिकः ।
सन्धिवातं विशेषेण निःशेषयति शेषतः ॥

इति सिद्धभेषजमणिमालोक्तानुपानेन सेवनात् नातिचिरात्फिरङ्गजो महती व्यथायुतोऽस्थि शोथो निवृत्तः। नचात्र पारदविकृतिजोपद्रवा दृष्टाः ॥ ७४-७५ ॥

भाषा—पांशु लवण, पारा, गेरू, सेलखड़ी सब समान भाग ले थूहर के दूध से अनेक वार घोट पिष्टी बना-सराव सम्पुट में रख एक हडिया में आधे तक नमक डाल उसमें सम्पुट रख इसके ऊपर गले तक नमक भरदे। इस लवण यन्त्र के नीचे एक दिन भर खूब जोर की आंचदे। स्वाङ्ग शीत होने पर धीरे से सम्पुट खोल ऊपर के सराव के तले में लगी हुई चन्द्रमा और कुन्द के फूल के समान सफेद पारदभस्म धीरे २ निकाल कर शीशी में भर ले। इसकी २ वल्ल मात्रा ( ४ रत्ती ) लौंग के चूर्ण के भीतर डाल कर प्रातः निगल ले इससे कुछ देर बाद दोपहर तक कै होती रहती हैं। इसके ऊपर ठंडा पानी पीना चाहिये। यह भस्म एक वर्ष से ऊपर तक। ६ माह, १ मास शैलोत्थ (संखिया तालादि) गरल कृत्रिम विष शेर की मूंछ का विष और अन्य तात्कालिक विषों को दूर करता है॥ ७४-७५ ॥

सर्वाङ्गसुन्दरो रसः—

मर्दयेद्रसगन्धौ च हस्तिशुण्डीद्रवैर्दृढम् ।
भूधात्रिकारसैश्चापि पर्य्यन्तं दिनसप्ततः ॥ ७६ ॥
विघृष्य वालुकायन्त्रे मूषायां सन्निवेशयेत् ।
दिनमेकं ददेदग्निं मन्दं मन्दं निशावधि ॥ ७७ ॥
एवं निष्पाद्यते पीतः शीतः सूतस्तु गृह्यते ।
पर्णखण्डेन तद्गुञ्जां भक्षयेत् सततं हिताम् ॥७८ ॥
क्षुद्बोधं कुरुतेऽपूर्व्वमुदराणि विनाशयेत् ।
ज्वराणां नाशनः श्रेष्ठस्तद्वत् श्रीसुखकारकः ॥ ७९ ॥
हृदयोत्साहजननः सुरूपतनयप्रदः ।
बलप्रदः सदा देहे जरानाशनतत्परः ॥ ८० ॥
अङ्गभङ्गादिकं दोषं सर्वं नाशयति क्षणात् ।
एतस्मान्नापरः सूतो रसात् सर्वाङ्गसुन्दरात् ॥ ८१ ॥

( पीतभस्मेति चन्द्रिकाकारः )

सर्वाङ्गसुन्दररसे—हस्तिशुण्डी=स्वनामख्याता, भूधात्री= भूम्यामलकी, एतयो रसेन समभागसूतगन्धयोः कज्जलीं दिनसप्ततः=सप्तदिनं द्वाभ्यामपि पृथक् सप्तदिनं विघृष्य=मर्दयित्वा मूषायां सन्निवेश्य वालुकायन्त्रे निशावधि=रात्रिपर्य्यन्तं मन्दमन्दमेकं दिनमग्निं ददेत् । गुञ्जामात्रया उदराणि=प्रायोयकृद्विकारजानि विनाशयेत ॥ ७६-८१ ॥

भाषा=शुद्ध पारा तथा शुद्ध गन्धक समभाग ले। इनकी कज्जली बना हाथीसुंडी के रस से सात दिन तक मर्दन करे, फिर भूम्यामलकी के रस से सात दिन तक मर्दन करे। इसे मूषा में डाल वालुकायन्त्र में ४ प्रहर मन्द मन्द अग्नि से पाक करे। स्वांगशीतल होने पर पारे की पीले रंग की भस्म मिलेगी। इसको एक रत्ती पान में रख खावे तो परम हितकारी है। यह खूब भूख लगाती है, उदर रोगों का नाश करती है, ज्वरों को दूर करती है, लावण्य और सुख देती है, हृदय में उत्साह भरती है, सुन्दर रूप वाला पुत्र देती है, सदा देह में बल भरती है तथा बुढ़ापे को दूर रखती है। अङ्गभङ्गादि सब दोषों का क्षण भर में नाश करती है। इस सर्वाङ्गसुन्दर रस से बढ़कर और कोई पारदभस्म नहीं। इसका नाम चन्द्रिकाकार "पीतभस्म" कहते हैं॥ ७६-८१॥

अथ कृष्णभस्म—

धान्याभ्रकं रसं तुल्यं मर्दयेन्मारकद्रवैः।
दिनैकं तेन कल्केन वस्त्रं लिप्त्वा तु वर्त्तिकाम्॥ ८२॥
विलिप्य तैलैर्वर्तिं तामेरण्डात्थैः पुनः पुनः।
तदाज्यभाण्डे प्रज्वाल्य गृह्णीयात् पतितश्च यत्॥ ८३॥
कृष्णभस्म भवेत् तच्च पुनर्मर्द्यं नियामकैः।
दिनैकं पाचयेद्यन्त्रे कन्दुकाख्ये न संशयः॥
मृतः सूतो भवेत् सद्यः तत्तद्रोगेषु योजयेत्॥ ८४॥

रसस्य कृष्णभस्मकरणप्रकारमाह—धान्याभ्रकमिति–धान्याभ्रकम 'अत्रैव–१४७-१४८ श्लोकाभ्यां वक्ष्यमाणम्' धान्याभ्रकं रसं च तुल्यं=समानमानं मारकद्रवैः=घनवचादिभिः (६४-१०१) अष्टादशाऽन्यूनैः दिनैकं मर्दयेत् तेन कल्केन वस्त्रं लिप्त्वा वर्त्तिकां विधाय शोषयित्वा तां वर्त्तिमैरण्डोत्थैस्तैलैः पुनः पुन विलिप्याऽर्द्रीकृत्य प्रज्वाल्याऽज्यभाण्डे=चिक्कणभाण्डस्योपलक्षणमेतत । पतितं गृह्णीयात् तच्च कृष्णभस्म पुनर्नियामकैः=सर्पाक्षादिभिः (८६–९३) पुनर्मद्यम । ततः कन्दुकाख्ये–यथा—

स्थूलस्थाल्यां जलं क्षिप्त्वा, वासो बद्ध्वा मुखे दृढम ।
तत्र स्वेद्यं विनिक्षिप्य, तन्मुखं प्रपिधाय च ॥
अधस्ताज्ज्वालयेदग्निं यन्त्रं तत्कन्दुकाभिधम् ॥
॥ र० र० स० ९– ७७ ॥

पातयेत्=स्वेदयेदित्यर्थो ज्ञेयः ॥ ८२–८४ ॥

भाषा—शुद्ध धान्याभ्रक और शुद्ध पारे को समभाग लेकर मारक द्रव्यों से एक दिन मर्दन करे। फिर इस कल्क को कपड़े पर लीपकर उसकी बत्ती बनावे। बत्ती को एरण्ड के तेल से पुनः पुनः भिगाकर जलावें। उस जलती हुई बत्ती से जो बूंदें घृतभावित पात्र में गिरें उन्हें एकत्रित करले। यह पारे की कृष्णभस्म होगी। इसे फिर नियामक वर्ग की औषधियों से एक दिन मर्दन कर कन्दुक यन्त्र में एक दिन पकावे। इस प्रकार से पारे की भस्म हो जाती है इस में कुछ संशय नहीं है। इसे भिन्न २ रोगों में प्रयुक्त करे। मात्रा एक रत्ती ॥ ८२–८४ ॥

अथ सूतभस्म—

श्वेतं पीतं तथा रक्तं कृष्णञ्चेति चतुर्विधम् ।
लक्षणं भस्मसूतानां श्रेष्ठं स्यादुत्तरोत्तरम् ॥ ८५ ॥

श्वेतमिति—उत्तरोत्तरं श्वेतापेक्षया पीतं पीतापेक्षया रक्तं रक्तापेक्षया कृष्णं श्रेष्ठ=मुत्तमं ज्ञेयम् ॥ ८५ ॥

भाषा—श्वेत, पीली, लाल तथा काली इन चार वर्णों की पारे की भस्में होती हैं । इनमें श्वेत से पीत, पीत से रक्त, रक्त से कृष्ण आगे २ गुणवाली होती है ॥ ८५ ॥

अथ वज्रमूषाकरणम्—

द्वौ भागौ तुषदग्धस्य चैकावल्मीकमृत्तिका ।
लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥ ८६ ॥
नरकेशसमं पञ्च छागीक्षीरेण पेषयेत् ।
याममात्रं दृढं पश्चात् तेन मूषां प्रकल्पयेत् ॥ ८७ ॥
शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्निरोधयेत् ।
वज्रमूषेयमाख्याता सम्यक् पारदसाधिका ॥ ८८ ॥

वज्रमूषामाह द्वाविति—तुषदग्धस्य=दग्धश्चासौ तुषस्तुषदग्धः, मयूरव्यंसकादित्वत्समासः । यावदाकृष्णतां दग्धस्य, वल्मीकस्य=श्वेतपिपीलिकासञ्चितस्य मृत्तिका=प्रशस्ता मृत । लौहकिट्टस्य=लौहमलस्य । आधुनिकास्तु यत्र मूषानिर्माणार्थं किट्ट शब्दो लौह-किट्टशब्दो वा प्रयुज्यते तत्र कृष्णसीसः, मूषामृत, तुषमसी,

कृष्णामृत , पदवाच्यो ग्रफाइट (Graphite) ग्राह्यो लौहकिट्टापेक्षया तस्यात्यग्निसहत्वात्तस्यैव तुषमसी नाम्ना प्राचां व्यवहारादित्याहुः । श्वेतपाषाणः=खटिका तस्य भागो दीयतेऽस्मिन्निति भागिकम् । भागाद्यच्च । ५. १. ४६ । इति चाट्टन् । तस्यैको भागः। नरकेशाः=मनुष्यशिरोरुहाः, समं=तुल्यम् । इति पञ्च छागीक्षीरेण=अजाक्षीरेण, याममात्रं=प्रहरमानं दृढं पेषयेत, पश्चात=तदनु तेन मूषां प्रकल्पयेत , शोषयित्वा तत्र च रसं सूतं क्षिप्त्वा =दत्त्वा तत्कल्कैः=पूर्वोक्तकल्कैरेव सन्निरोधयेत्=सन्धिबन्धनं कुर्यात । अत्र विशेषस्तुरसकामधेनु-उपकरणपाद यन्त्राधिकाराज्ज्ञेयः ॥ ८६–८८ ॥

भाषा—जले हुए तुष दो भाग, बमई की मिट्टी १ भाग लोहे का कीट १ भाग, खड़िया १ भाग, पुरुष के बाल १ भाग सब को बकरी के दूध में एक पहर तक दृढ़ता से पीस मूषा बना ले । तथा सुखाकर इस में पारा भर दे और इसी मूषाकल्क से उस मूषा को बन्द करदे । यह वज्रमूषा कहाती है । इस में पारा भली प्रकार सिद्ध हो जाता है ॥ ८६–८८ ॥

अथ नियामकगणः—

सर्पाक्षी वन्ध्य(न)कर्कोटी (ट्यौ)कञ्चुकी यमचिञ्चिका ।
शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा ॥ ८९ ॥
मण्डूकपर्णी(मूषापर्णी)मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी ।
अनन्ता काकजङ्घा च काकमाची च (क)पोतिका ॥९०॥

विष्णुक्रान्ता सहचरा सहदेवी (वा) महाबला ।
बला नागबला मूर्वा चक्रमर्दकरञ्जकौ ।
पाठा(आ)तामलकी नीली जालिनी पद्मचारिणी ॥६१॥
घण्टा(त्रिकण्ट)विघण्टा गोजिह्वा कोकिलाक्षो वनध्वनिः ।
आखुपर्णी क्षीरिणी च त्रिपुटो मेषशृङ्गिका ॥ ६२ ॥
तिन्तिडी क्षीरिणी रास्ना मेषशृङ्गी च कुक्कुटी ।
कृष्णवर्णा च तुलसी सिंही च (का)गिरिकर्णिका ।
एता नियामकौषध्यः पुष्पमूलद(फ)लान्विताः ॥६३॥

नियामकगणं रसार्णवादुद्धरति (प. ५. श्लो. २)—सर्पाक्षी-त्यादिना—सर्पाक्षी = गन्धनाकुली, वन्यककोंटी = बांझककोड़ा इतिख्याता, कञ्चुकी = चणकक्षुपः, क्षीरकञ्चुकी = क्षीरीशवृक्षः र. अ. ग्लौसरी, यमचिञ्चिका = अत्यम्लिका ( इमली ), शतावरी = बहुपुत्री, मण्डूकपर्णी = ब्रह्ममाण्डूकी, मत्स्याक्षी = हिलमोचिका ( मछेछी ), शिखण्डिनी = गुञ्जा, अनन्ता = शारिवा ( अनन्तमूलं ) काकजङ्घा = मिसी इति लोके, काकमाची = मकोय इति, कपोतिका = कोमलमूलकम्, विष्णुक्रान्ता = नीलापराजिता ( कोयल ), सहचरा = पीतझिण्टी ( पियाबांसा ), सहदेवी = पीतपुष्पबला, मूर्वा = धनुर्गुणा, चक्रमर्दः ( पमाड़ ), पाठा = पापचेलिका, तामलकी = भूम्यामलकी, नीली = (नील), जालिनी = देवदाली ( कडुवी तोरई ), पद्मचारिणी = भार्ङ्गी स्थलकमल-

इति र. अ, ग्लौ., घण्टा = जपावृक्षः, विघण्टा = .... गोजिह्वा = खरपत्री, कोकिलाक्षः = तालमखाना इति ख्यातः, घनध्वनिः = मुस्ता, आखुपर्णी = मूषाकर्णी, क्षीरिणी = काञ्चनक्षीरी ( सत्यानाशी ), त्रिपुटी = ऐरण्डः, मेषशृङ्गिका = विषाणी, तिन्तिड़ी = इमली इति, रास्ना = कुलिञ्जन इति, कुक्कुटी = शाल्मली, सिंहिका = बृहती, गिरिकर्णिका = श्वेतपुष्पापराजिता । अथ पाठान्तराणि— वन्यकर्कोटी = वह्निकर्कोटी । यमचिञ्चिका = जलचिञ्चिका = जलबिन्दुजा = यवचिञ्चिकेत्ति वा । शङ्खपुष्पी = भृङ्गराजः । करञ्जकः = कुरङ्गिणी । तामलकी = चामलकी । घण्टा विघण्टा गोजिह्वा = गोजिह्विका नृ ( त्रि ) जिह्वा च । क्षीरिणी = त्रिपर्णी । त्रिपुटी-मेषशृङ्गिका = द्विपर्णी चैकपर्णिका । कृष्णवर्णा = कृष्णपर्णा । सिंही-च = श्वेता च सिंहिका वा । इति क्रमेण । र. अ. र. का. धे. पुस्तकयोर्दृश्यन्ते। नियामकाः = रसनियामकाः ।

अङ्गेनोक्तं भवेन्मूलं द्रवः सर्वाङ्गतो भवेत । अमात्रायां समामात्रा विज्ञेया रसकर्मणि । र. र. आ. २-३ ।

इत्यपि ज्ञेयम् ।। ८६–६३ ।।

गन्धनाकुली, जंगली ककोड़ा, कञ्चुकी ( शिरीश वृक्ष अथवा चना—नियमनसंस्कार में चणकक्षार का प्रयोग मिलता है), कच्ची इमली, शतावरी, शङ्खपुष्पी ( शंखाहुली ), शरपुङ्खा (सरफोंका) पुनर्नवा, मण्डूकपर्णी, मछेछी, ब्रह्मदण्डी, रत्ती, अनन्ता (अनन्तमूल ), काकजङ्घा, मकोय, पोई शाक, विष्णुक्रान्ता, भिण्टी, सहदेवी, महाबला, बला, नागबला, मूर्वा, पंवाड़, करञ्ज, पाठा,

भूमी आमला, नील, कडवी तोरी, भारंगी, जपा (गुड़हल) गुल-च्छकन्द, गोजिह्वा (गावजवां), तालमखाना, मोथा, मूषकपर्णी, सत्यानाशी, एरण्ड, मेढ़ासिंगी, काली तुलसी, बड़ी कटेरी, गिरिकर्णी (श्वेत अपराजिता) ये सब औषधियां फूल मूल पत्तों सहित ले। ये पारे की नियामक हैं ॥ ८६–९३ ॥

अथ मारकवर्गः—

घनवचाचित्रकगोक्षुराः (र)कटुतुम्बी दन्तिका जातिः ।
सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम् ॥ ९४ ॥
विषमुष्टिवज्रवल्ल्यौ लज्जा लाक्षा च देवदाली च ।
सहदेवी नी(र)पकर्णा निर्गुण्डी चक्रलाङ्गलिके ॥९५॥
माणार्कचन्द्ररेखा रविभक्ता काकमाचिका चार्कः ।
विष्णुक्रान्ता वायसतुण्डी वज्री च बला च शुण्ठी च ॥९६॥
कोशातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा ।
मत्स्याक्षी यमचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम् ॥९७॥
धुस्तूरकाकजङ्घे शतावरी कञ्चुकी च वन्ध्या च ।
तिलभेकपर्णिदूर्वा मूर्वा च हरीतकी तुलसी ॥ ९८ ॥
गोकण्टकाखुपर्ण्यौ कर्कटी कन्दवर्ग(पर्ण)लता च ।
मुषली हिंगु-गुडूची शिग्रुर्गिरिकर्णिका महाराष्ट्री ॥९९॥

मार्कव-सैंधव-सरणी-सोमलताः श्वेतसर्षपोऽसनकः ।
हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिकाः ॥१००॥
सर्वन्त्वार्धांशं वा अष्टादशाधिकं वाऽपि द्रव्यम् ।
रसमारणमूर्च्छादौ युक्तिज्ञैर्विधिवदुपयोज्यम् ॥ १०१ ॥

मारकवर्गमाह—घन इति-घनो=मुस्ता, कन्या=कुमारिका, चाण्डालिनी=लिङ्गिनी शिवलिङ्गी इति, कन्दम्=शूरणः, विषमुष्टिः ( कुचिला ), वज्रवल्ली=सेहुण्डः, लज्जा=श्वेतलज्जालुका (छुई मुई), नीरकणा=जलपिप्पली र. द्व. तट्टीकायां च नीरकणा इत्येव पाठोऽस्ति, र. र. आ. इत्यत्रापि नीरकणा इत्येव पाठः न नीपकणेति पकारयुतः, चक्रम्=तगरम्, लाङ्गलिका=कलिहारी, माणः=माणकन्दः, अर्कः=श्वेतार्कः, चन्द्ररेखा=सोमराजी, रविभक्ता=सूर्यावर्तः हुलहुल इतिलोके, अर्कः=रक्तार्कः, विष्णुक्रान्ता=श्वेतापराजिता, वायसतुण्डी=काकनासा, वज्री=स्नुहीविशेषः हड़जोड़ी, कोषातकी=जालिनी, वाराहीकन्दः=( गेठीति ), हस्तिशुण्डिका=गजशुण्डा, रम्भा=कदली, वन्ध्या=( बांझककोड़ा इति ), तिलपर्णी=रक्तचन्दनं न तिलः, भेकपर्णी=मण्डूकपर्णी, गोकण्टकः=क्षुद्रगोक्षुरः, कर्कोटीकन्दः=तिक्तकर्कोटीकन्दः बांझककोड़ा इतिख्यातः, वर्गलता= ... महाराष्ट्री=,....मार्कवः=भृङ्गराजः, सरणी=प्रसारणी, सोमलता—आ.कं. क्रिया ६-२३. इत्यत्र व्याख्याता पञ्चदशच्छदा दिव्यलता । असनको=विजयसारः, हंसपदी=हंसराज इति, व्याघ्रपदी=

विकङ्कतः, किंशुकः=पलाशः। अस्य गणस्य सर्वं=सर्वसमुदित मर्धांशं सर्वस्यार्धांशमभावे, अष्टादशाधिकं द्रव्यं युक्तिज्ञै रस-मारणे युक्तिज्ञै रुपयोज्यम्। अत्रकाश्चिदौषध्यः शास्त्रत एव व्याख्याताः। विस्तरस्तु-र. का. धे. उप. पा. ३, र. अ. प. ५, र. सा. प. ६. श्लो. २२, प. २१, आ. कं. क्रियाकरणविश्रान्तौ श्लो. २३, र. उ. नि. १७-१८ अध्याययोः, र. इ. चू. ६-७-८. अध्यायेषु। र. र. आ. उप. २. १४, पुनश्च. र. र. आ. चिकित्सा. ख. १५. श्लोक तः, गौ. र. सं. ७ पटले, र. र. स. ११-४६ श्लोकतश्च दिव्यौ-षधीनां ज्ञेयः॥ ६४–१०१॥

भाषा—नागरमोथा, बच, चीता(लाल), गोखरू, कड़वी तुम्बी, दन्ती, चमेली, गन्धनाकुली, सरफोंका, घीकुवांर, चाण्डालिनीकंद, कुचला, वज्रवल्ली, लज्जावन्ती, लाख, बंदाल, सहदेवी, जलपिप्पली, संभालू, तगर, कलिहारी, माणकन्द, श्वेत आक, सोमराजी, आदित्यभक्ता सूरजमुखी, मकोय, लाल आक, विष्णुकान्ता, कौआठोडी, सेहुंड, बला, सोंठ, कड़वी तोरी, जयन्ती, वाराहीकन्द, हाथीसुण्डी, केला, मछेछी, कच्ची इमली, हल्दी, दारुहल्दी, श्वेतपुनर्नवा, लाल पुनर्नवा, धतूरा, काकजंघा, शतावरी, कञ्चुकी, वन्ध्याककोंटी, लालचन्दन, मण्डूकपर्णी, दूर्वा, मूर्वा, हरड़, तुलसी, गोखरू, मूषकपर्णी, ककड़ी, कन्दवर्ष की लतायें, मूषली, हींग, गिलोय, सुहांजना, गिरिकर्णी अपराजिता, जलपिप्पली, भांगरा, सेंधानमक, गन्धप्रसारणी, सोमलता, श्वेतसरसों, असन. हंसराज, व्याघ्रपदी, ढांक, भिलावा, इन्द्रायण; युक्तिज्ञ वैद्यों को चाहिये कि वे इन सब

द्रव्यों या इनमें से आधे या अठारह से अधिक द्रव्यों का पारे के मारण तथा मूर्च्छन आदि में विधिवत उपयोग करे ॥

॥ ९४—१०१ ॥

अथ अम्लगणः—

अम्लवेतस–जम्बीर–लुङ्गाम्ल–चणकाम्लकाः ।
नागरङ्गं तिन्तिडी च चिञ्चापत्रञ्च निम्बुकम् ॥१०२॥
चाङ्गेरी दाडिमञ्चैव करमर्दं तथैव च ।
एष चाम्लगणः प्रोक्तो बदराम्लसमायुतः ॥ १०३ ॥

अम्लवर्गमाह --अम्लवेतसइति, अम्लवेतसः=क्रौञ्चजो यथा-विटपस्तु .... पत्रैःस्निग्धैर्घनैश्चैव. श्लक्ष्णैरग्रैश्च तीक्ष्णकैः । ···फलं-तस्यैवहेमन्ते प्रवृत्तानि फलानि च ...तीक्ष्णाद्या आयसाः सर्वेद्रवन्ति नात्र संशयः । अत्रेति अम्लवेतसरसे । गो. सं. ७, २०७ । लुङ्गाम्लम्=मातुलुङ्गम् बिजौरा नीबू इति ख्यातम्, चणकाम्लं चणककृतं काञ्जिकम् । चणकक्षारे, इति वं.श. सि. । नागरङ्गम्=अम्लनारङ्गम्, तिन्तिड़ी=वृक्षाम्लम्, चिञ्चापत्रं=तिन्तिड़ीपत्रम्, अत्र चिञ्चाफलं पत्रं च ज्ञेयम्, निम्बुकं=कागजी नीबू इति । चाङ्गेरी=चुक्रिका चल्मोड़ी चौपतिया वा, दाडिम=मम्लदाड़िमम्, करमर्द=करौंदा इति क्षुद्रफलमहाफलभेदेन द्विविधं ज्ञेयम् । चणकाम्लमम्लवेतसं च सर्वेषामुत्तमोत्तमम् । ॥ १०२-१०३ ॥

भाषा—अम्लवेत, जम्बीरी, मातुलुङ्ग=बिजौरा, चणकाम्ल, नारंगी, तिन्तिड़ी वृक्षाम्ल, इमली के पत्ते चकार से फल का भी

ग्रहण होता है, नीबू, चांगेरी, खट्टा अनार, करौंदा, खट्टे बेर वा बेर की खटाई; इन सब से अम्लवर्ग होता है ॥ १०२—१०३ ॥

अथ लवणवर्गः—

लवणानि च कथ्यन्ते सामुद्रं सैन्धवं विडम् ।
सौवर्च्चलं रोमकञ्च चुल्लिकालवणं तथा ॥१०४॥

लवणवर्गमाह—लवणानीति—लवणत्वेन लवणमेकविधमेव सर्वलवणपरमाणूनामेकजातीयत्वात्, उत्पत्तिस्थलीयतत्तद्द्रव्य संयोगात्त्वनेकत्वम् । उत्पत्तिस्तु, उद्भिद्भ्यो जीवरक्तमूत्राभ्यां सरो जलधिस्रोतः खनिभ्यः । तच्च स्वच्छं वर्णहीनं षट्कोण-कणं लवणास्वादयुतं जले लयनशीलमग्नौ पीतवर्णां शिखां-सृजति । सामुद्रं समुद्रजलभवं स्वच्छशुभ्रं विपणिषु लभ्यते, कर्कच् इति ख्यातम् । सैंधवं सिन्धुनदीपर्वतोद्भवम्, तच्चद्विविधं श्वेतं रक्तवर्णं च लौहयोगात् । श्वेतं श्रेष्ठम् । विडं त्रिफलादियोगेन कृतम्, सौवर्चलं = रुचकम्, रोमकं शाकम्भरीत्यपरपर्यायं (सांवर-नमक) रूमावतीनदीजं सा च जोधपुरे सांवरलेक इत्यत्र पतति । चुल्लिकालवणं—करीरपीलुकाष्ठेष्विकादहनादिजातं नवसादरा-ख्यम् । चरके तु—सैन्धवसौवर्चलकाल विड पाक्या नूपकूप्य वालकैलमूलकसामुद्ररोमकोद्भिदौषरपाटेयकपांशुजानीत्येवंप्रका-राणि चान्यानि लवणवर्ग परिसंख्यातानि । इत्युक्तं विमाने अ. ८ । १०४ ।

सामुद्रलवण, सेंधा, विड, सौंचल, सांभर, नौसादर ये लवण-वर्ग हैं ॥ १०४ ॥

अथ मूत्रवर्गः—

**मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।**

**गोऽजाऽवीनां स्त्रियाः पुंसां मूत्रवर्ग उदाहृतः ॥१०५**

मूत्रवर्गमाह मूत्राणीति हस्ती=गजः, करभ=उष्ट्रः, महिषी, खरो=गर्दभः, वाजी=अश्वः, गोऽजे प्रसिद्धे, अविर्मेषः, पुंसां=पुरुषाणाम् । महिषीति स्त्रीलिङ्गोपादानन्तुछन्दोनुरोधात । मूत्रन्तु स्त्रियाः पुरुषस्यचाविशेषेण ग्राह्यम् ।

यथा—नरतुरगकुञ्जरोष्ट्रखरमहिषकमेषगोजाभिः ।

नार्या च मूत्र दशकं दशभिः स्मृतमेभिरेवात्र । र. का. धे ।

नारीमेषीखराष्ट्रीणां मूत्रवर्गो गजस्य च । र. र. आ. २-१० ।

चिकित्सोपयोगिमूत्राणि— च. सू. १. अ. श्लो. ६२ तः । सु. सू. अ. ४५. र. अ. प. ५-३५ च ज्ञेयानि ॥ १०५ ॥

हाथी, ऊंट, गधा, घोड़ा; इन सब के पुरुषजाति के मूत्र लें । तथा भैंस, गाय, बकरी, भेड़; इन सब के स्त्रीजाति के मूत्र लें । यह मूत्रवर्ग कहाता है ॥१०५॥

अथ द्रावकवर्गः—

**गुञ्जाटङ्कणमध्वाज्यगुडा द्रावकपञ्चकाः ॥१०६॥**

द्रावकवर्गमाह—गुञ्जेति—गुञ्जा=श्वेतगुञ्जा, टङ्कणं=सोहागा इति, द्रावयन्ति धातूनीति द्रावकाः । गुडगुग्गुलुगुञ्जाऽऽज्यसारघैष्टङ्कणान्वितैः दुर्द्रावाखिललोहादेर्द्रावणाय गणोमतः र. र. स. अ. १०-६५ ॥ १०६ ॥

श्वेतरत्ती, सुहागा, शहद. घी, गुड़; ये पांच धातुओं के द्रव करने वाले पंचद्रावक कहाते हैं ॥ १०६ ॥

अथ पित्तवर्गः—

**पित्तं पंचविधं मत्स्यगवाश्वरुरुबर्हिजम् ॥ १०७ ॥**

पित्तमिति—मत्स्यः = रोहितमत्स्यः, रुरुः = कृष्णसारमृगः हरिण इति, त्वचं स मेध्यां परिधायरौरवीमिति-रघुवंश ३. सर्गे, बर्ही = मयूरः, वराहमहिषयोरपि भवति पित्तम ॥ १०७ ॥

रोहू मछली, गाय, घोड़ा, कृष्णसार मृग, मोर, इन पांच के पित्तों से पित्तवर्ग होता है ॥ १०७ ॥

क्षारवर्गः—

**स्वर्जिका टङ्कणञ्चैव यवक्षार उदाहृतः ॥ १०८ ॥**

क्षारवर्गे—अन्येपि–तिलापामार्गकदलीपलाशशिग्रुमोक्षकाः ।
मूलकार्द्रकचिञ्चाश्च वृक्षक्षाराः प्रकीर्त्तिताः ॥
। र. अ. ५. ३० ।

क्षारनिर्माण प्रकारश्च

तरुणक्षारवृक्षस्य शुष्कंपञ्चाङ्गं दाहयित्वा ( सर्वमन्तःपुटे दहेत र. र. अ. २. ४ ) श्वेतभस्म विधेयम्, तच्चाष्टगुणोष्णजले समालोड्य रात्र्यूषितं प्रातर्वस्त्रनिसृतं स्वच्छं जलमग्नौ बुद्बुदोत्पत्ति सान्द्रतां यावन्मृत्पात्रे विपाच्य तदनु काचादि पात्र आतपे शोषयेत । अधिकपाके क्षारो दग्धः कठिनश्च भवति । यवानाञ्च बीजेषु दुग्धावस्थायामधिकक्षारो भवत्यूषरभूमिजानामन्येषां च ॥ १०८ ॥

भाषा—सज्जी, सुहागा, यवक्षार—इसे क्षार वर्ग कहते हैं ॥१०८॥

अथ रससेवाक्रमफले—

प्रातरेव पुरतो विरेचनं तद्दिनोपवसनं विधाय च ।
तत्परेऽहनि च पथ्यसेवनं तत्परेऽहनि रसेन्द्रसेवनम् ॥१०९॥
बुद्धिः स्मृतिः प्रभा कान्तिः बलञ्चैव रसस्तथा ।
वर्द्धन्ते सर्व एवैते रस सेवाविधौ नृणाम् ॥ ११० ॥

रससेवाक्रममाह—प्रातरिति–एतद्विधानन्तु र. इ. चि. स्निग्धमित्यादिना ३. १८२ श्लोकतः। आ. कं. ६-८६ पृ० ४२, तः एवं रसार्णवे १८–११७ श्लोकतः। र. हृ. अ. १८। र. का. धे. सूतक्रियापादे ७३ श्लो. नवमेसारणाधिकारे—गो. र. सं. प. ७-३-४३ तो व्याख्यातम्। तत्र च रससेवा गुणदोषाः पथ्यमपथ्यं रसाजीर्णचिकित्सा च वर्णिता। प्रथमं यथाविधि स्नेहपानं कृत्वा ततो विरेचनमुपवसनं च विधाय=कृत्वा तत्परेऽहनि=उपवसनदिनात्परदिने पथ्यसेवनं=मुद्गाम्बुप्रभृति, तत्परेऽहनि=पथ्यसेवनदिवसाद्द्वितीयदिने रसेन्द्रस्य सेवनं कार्यम् ॥ १०९ ॥

तत्फलमाह—बुद्धीति—बुद्धिर्मनीषा,स्मृतिः=स्मरणम्, प्रभा =भा दीप्तौ प्रभातीति प्रभा-त्विट्, कान्तिः=छविः, बलं=यथा-बलवानयमिति रसादिशुक्रान्तानां धातूनां यत्परं तेजस्तत्खलु ओजस्तदेव बलमित्युच्यते। सु. सू. अ. १५. १३। सर्व एवैतेबुद्ध्यादयो रससेवाविधौ=रसप्रयोगे वर्धन्ते ॥ ११० ॥

भाषा—पारदसेवनविधि—प्रातःकाल पूर्व विरेचन ले। सारे दिनउपवास रखे। अगले दिन पथ्य सेवन करे। उससे अगले दिन

पारद का सेवन करे। विधिपूर्वक पारा सेवन करने से बुद्धि, स्मृति, प्रभा, कान्ति, बल और रसधातु सभी बढ़ते हैं ॥ १०६–११० ॥

तत्र पथ्यकथनम्—

हितं मुद्गाम्बु दुग्धाज्यं शाल्यन्नञ्च विशेषतः।
शाकं पौनर्नवं देवि ! मेघनादञ्च वास्तुकम् ॥ १११ ॥
लवणं नागरंमुक्तं पद्ममूलानि भक्षयेत्।
अनुपानं तु दातव्यं ज्ञात्वा रोगादिकं तथा ॥ ११२ ॥

रस सेवायां पथ्य ( र. अ. १८। १३०. ½ ) माह हितमिति— मुद्गान्नं मूंग इति शिम्बीधान्यं प्रसिद्धम्, आज्यं=गव्यघृतम्। शाल्यन्नं रक्तशालिमहाशाल्यादि। पौनर्नवं=पुनर्नवाभवम्, देवि इति सम्बोधनम्, मेघनादः=तण्डुलीयः, सवास्तुकं=वास्तुक- (बथुवा इति) शाकसहितम्। तद्गुणाश्च—त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकमिति च. सू. अ. २७–८४। लवणं=सैन्धवम्। नागर= मार्द्रकम्, पद्ममूलानि=कमलककड़ीति भसींडा इति वा ख्या- तानि। देवि इत्यत्र वास्तु, इति सवास्तुकमत्र स यूथिकामिति, नागरमत्र मागधीमिति विकृतपाठान्तराणि। अनुपानमित्यादि श्लोकार्धस्तु रसार्णवे तत उद्धृतपाठेषु च न दृश्यते तत्र भिषगिति प्रथमान्तपाठस्तु प्रक्षिप्तोऽयं पाठ इति ज्ञापयति ॥ १११–११२ ॥

भाषा—हे देवि ! पारे के सेवन के साथ मूंग का यूष, दूध, घी, शालि चावल, पुनर्नवा, बथुवा, चौलाई, इनका शाक तथा

सेंधा नमक, सौंठ, मोथा, कमल की जड़ ये वस्तु खानी पथ्य हैं। रोग आदि का विचार कर अनुपान देना चाहिये।

॥ १११-११२ ॥

तत्र अपथ्यकथनम्

कूष्माण्डं कर्कटीञ्चैव कालिङ्गं कारवेल्लकम्।
कुसुम्भिका च कर्कोटी कदली काकमाचिका।
ककाराष्टकमेतद्धि वर्जयेत् रसभक्षकः ॥ ११३ ॥

पारद सेवनेऽपथ्य ( र. अ. १८-१२० ) माह—कूष्माण्डमिति-कूष्माण्डं=पेठा इति, कर्कटी=कर्कटीफलम्, कालिङ्गं=तरबूज इति, मांसफलः न शिरीषो न वा कुटजाऽपथ्यप्रकरणात्। कारवेल्लकं=करेला इति, कुसुम्भिका=कुसुम्भशाकः, कर्कोटी=वांझ ककोड़ा इति, कदली=रम्भा, काकमाचिका=मकोय इति, रसभक्षकः=रससेवकः, एतत्ककाराष्टकं वर्जयेत्। कदलीत्यत्र कलम्बीति पाठे कलम्बी=उपोदिका। र. र. स. अ. ११ श्लो. १२३ तोऽन्यान्यप्यपथ्यानि ककाराष्टकान्तरं च वर्त्तते ॥ ११३ ॥

इति रसाधिकारः।

भाषा—पेठा, ककड़ी, तरबूज, करेला, कुसुम्भी, ककोड़ा, केला, मकोय इन आठ ककार-पूर्व वाले द्रव्यों को पारा सेवन के दिनों में न लेना चाहिये। ये अपथ्य हैं ॥ ११३ ॥

अथ उपरसभेदाः—

गन्धको वज्र-वैक्रान्तं वज्राभ्रं तालकं शिला।
खर्परं शिखितुत्थञ्च विमलं हेममाक्षिकम् ॥११४॥
काशीशं कान्तपाषाणं वराटाञ्जनहिङ्गुलम्।
गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु।
एते चोपरसाः प्रोक्ताः शोध्या मार्या विधानतः ॥११५॥

अथोपरसाः—गन्धक इति—आनन्दकन्दे तु—

गन्धतालशिलाताप्य वनहिंगुलगैरिकाः।
चपलाश्मजभूनागहरिद्राग्निजारकाः॥
खर्परीतुत्थकंकुष्ठगिरिसिन्दूरटङ्कणाः।
कम्पिल्लविषकासीसगौरीपाषाणभूखगाः॥
पोताशश्टङ्गिसिन्दूरस्तुवरिश्च रसाञ्जनम्।
नीलाञ्जनं च सौवीरं स्रोतोञ्जनमफेनकम्॥
पुष्पाञ्जनं शङ्खशुक्तिज (श)म्बूकाश्च वराटकाः।
सा त्राणी च नवक्षारा जिनक्षारकुमारकाः॥
सर्जगुग्गुलुलक्षान्च क्षारा च लवणानि च।
गोरोचनोऽम्लवेतश्च काचश्च गरा बालुकाः॥

एत उपरसाः ख्याता रसराजस्य कर्मणि। इत्यधिकाः पठिताः। क्रि. क. वि. उ.१.४.। शिखितुण्डं=तुत्थकम्, विमलं= रजतमाक्षिकम्, हेममाक्षिकम्, स्वर्णमाक्षिकम्, कान्तपाषाणं= चुम्बकम्, भ्रामयेल्लोहजातं तु तत्कान्तम्। अञ्जनं=रसाञ्जनम्

शङ्खभूनागमिति-प्राण्यङ्गत्वात्-द्वन्द्वश्चेत्यादिना (२-४-२.) क्लीवत्वमेकत्वञ्च भूनागो=महीलता-वर्षासु वृष्टिसंक्लिन्ने भूगर्भे सम्भवन्ति हि । जन्तवः क्रिमिरूपा ये ते भूनागा इति स्मृताः । एते विंशति उपरसाः प्रोक्ताः=कथिताः । ते च विधानतोऽनुपदोक्तविधिना शोध्या मार्याश्च ॥११४-११५॥

गन्धक, हीरा, वैक्रान्त, वज्राभ्रक, हड़ताल, मनसिल, खपरिया, नीलाथोथा, रौप्यमाक्षिक, स्वर्णमाक्षिक, कसीस, चुम्बकपत्थर, कौड़ी, सुरमा, शिंगरफ़, गेरू, शङ्ख, केंचुए, सुहागा, शिलाजीत; ये सब उपरस कहे हैं। इन सबको विधिपूर्वक शुद्ध करना और मारना चाहिये ॥ ११४-११५ ॥

तत्रादौ गन्धकोत्पत्तिमाह—

श्वेतद्वीपे पुरा देव्याः क्रीडन्त्याः प्रसृतं रजः ।
क्षीरार्णवे तु स्नाताया दुकूलं रजसाऽन्वितम् ।
धौतं तत् सलिले तस्मिन् गन्धको गन्धवत् स्मृतः ॥११६

गन्धकोत्पत्तिमाह श्वेतद्वीप इति एष च प्रसङ्गः—र. अ. प. ७ श्लो. ५६ तो वर्ण्यते । श्वेतदीपस्तु भूमध्यसागरे सिसलीति ख्यातः सम्भाव्यते तत्रैव प्रचुर गन्धकोत्पत्तेः । पुरा=प्राक् काले श्वेतदीपे क्रीडन्त्याः= कन्दुकादिक्रीडासक्तायाः, देव्याः=पार्वत्याः, रजः=मासिकरक्तं प्रसृतं=प्रादुर्भूतं तु पुनः, क्षीरार्णवे=दुग्धसमुद्रे ( White Sea ) 'उत्तरे हिमवत्पार्श्वे क्षीरोदो नाम सागरः, दशकर्मपद्धत्तौ पुण्याहवाचने । स्नातायाः=चतुर्थदिवसे इति शेषः । रजसा अन्वितं=युक्तं, दुकूलं=वस्त्रं. धौतं=प्रक्षा-

लितं, तस्मिन् सलिले क्षीरार्णवजले तत् रजः गन्धवत्=आमोद युक्तं गन्धको जात-इत्यर्थः। गन्धकामोदस्य=रज आमोदस्य सदृशत्वादिति भावः। गन्धकोत्पत्तिस्तु—रसोन सर्षप स्वर्णमाक्षिक विमल कासीस तुत्थ नीलाञ्जन स्रोतोञ्जन हरितालशिला दर्दुर खर्पर हिंगुल खटिकादिभ्यः, काश्मीरे नैपाले, ब्रह्मदेशे ज्वालामुखी समीपमृत्तिकासु=विशेषतः सिसलीद्वीपे जापानदेशे च भवति ॥ ११६ ॥

पुराकाल में श्वेतद्वीप में क्रीड़ा करती हुई देवी पार्वती को रजः स्राव हुआ। तब-उसने क्षीरसमुद्र में स्नान किया। उसका वह रजःयुक्त वस्त्र उस जल में धोया गया। वह गन्धवाला रज गन्धक नाम से विख्यात होगया ॥११६॥

अथ गन्धकभेदाः—

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः।
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने।
व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः ॥११७॥

चतुर्धेत्यादिना—गन्धकभेदा उच्यन्ते। यद्यपि गन्धकत्वेनैक-विध एवगन्धकः सर्वविधगन्धाणूनां सजातीयत्वात्। भूमध्यगत-तापस्य तरतमभावेन चातुर्विध्यं तस्येति वैज्ञानिकाः।

स चापि त्रिविधो देवि शुकचञ्चुनिभो वरः ॥
मध्यमः पीतवर्णःस्यात् शुक्लवर्णोऽधमः प्रिये ! इत्युक्तम्।

र. अ. प. ७. ६७। रक्तः=रक्तवर्णः, शुकतुण्डाख्यः, हेमक्रियासु

धातुवादविधावुक्तः पीतश्च रसायने=रसरसायने, श्वत=श्वेतवर्णः 'श्वेतोऽत्र खटिकाप्रोक्तः' स च व्रणादिलेपने हितः, कृष्णः=कृष्णवर्णः जरामृत्युनाशकत्वेन श्रेष्ठः, सुदुर्लभो=दुःखेन लभ्यते ॥११७॥

गन्धक चार प्रकार का होता है—लाल पीला श्वेत और काला, लाल गन्धक स्वर्ण बनाने के काम आता है, पीला और श्वेत गन्धक रसायन में प्रयुक्त होता है, श्वेत गन्धक व्रण आदि पर लेप करने के काम आता है। काला गन्धक श्रेष्ठ है, परन्तु वह अति दुर्लभ है ॥ ११७ ॥

### अशुद्धगन्धदोषाः—

अशुद्धगन्धः कुरुते तु तापं कुष्ठं भ्रमं पित्तरुजां करोति।
रूपं बलं वीर्य्यसुखं निहन्ति तस्मात् सुशुद्धो विनियोजनीयः ॥ ११८ ॥

अशोधितगन्धकदोषानाह अशुद्धेति—अशुद्धगन्धः=शुद्धिरहितो गन्धः, तापं=सन्तापम्, भ्रमं=चक्रारूढस्येव कुरुते, पित्तरुजां=पित्तरोगान्। एवं रूपं बलं, वीर्यसुखं=पुंस्त्वम् सुरतसामर्थ्यमित्यर्थः, निहन्ति। विनियोजनीयः=तेषु तेषु योगेषु ॥११८॥

अशुद्ध गन्धक का सेवन ताप कुष्ठ भ्रम और पित्त के रोगों को उत्पन्न करता है तथा रूप बल वीर्य और आरोग्य का नाशक है। इसलिये अच्छी-प्रकार शुद्ध कर इसका प्रयोग करना चाहिये ॥ ११८ ॥

गन्धकपर्य्यायाः—

**गन्धको गन्धपाषाणः शुकपुच्छः सुगन्धकः ।**
**सौगन्धिकः शुल्वरिपुः पामारिर्नवनीतकः ॥११९॥**

व्यवहारार्थं गन्धकस्य नामान्याह—गन्धक इति—शुक—पुच्छः—शुकस्य पक्षिणः पुच्छ इव हरित्पीतवर्णः, सुगन्धकः= शोभनो गन्धोऽस्येति सुगन्धः स एव सुगन्धकः, सौगन्धिकः= सुगन्धकशब्दात् स्वार्थे विनयादिभ्यष्ठक् (५ । ४ । ३४) इति ठकि रूपम् । शुल्वरिपुः=शुल्वस्य=ताम्रस्य, रिपुररिः, गन्धकयोगेन हि शुल्वभस्म भवति । वैज्ञानिकास्तु गन्धताम्रयोः परस्परं प्रीति-रस्तीत्याहुः । पामारिः=पामानाशकत्वात । नवनीतकः=नवनीतं हैयङ्गवीनं तद्वन्मृदुत्वात स्वार्थे कः ॥ ११९ ॥

गन्धक, गन्धपाषाण, शुकपुच्छ, सुगन्धक, सौगन्धिक, शुल्वरिपु, पामारि, नवनीतक; ये नाम गन्धक के हैं ॥ ११९ ॥

अथ गन्धकशुद्धिः—

**साज्यं भाण्डे पयः क्षिप्त्वा मुखं वस्त्रेण बन्धयेत् ।**
**तत्पृष्ठे गन्धकं क्षिप्त्वा शरावेण पिधापयेत् ॥१२०॥**
**भाण्डं निक्षिप्य भूम्यन्तरूर्ध्वे देयं पुटं लघु ।**
**ततः क्षीरे द्रुतं गन्धं शुद्धं योगेषु योजयेत् ॥१२१॥**

साज्यमित्यादिना— गन्धकशुद्धिरुच्यते । भाण्डे=हण्डि-कायां चीनपात्रे वा साज्यं=आज्येन गव्यघृतेन सहितं साज्यं गव्यघृताभावे महिष्यादि-घृतमपि गौणत्वेन ग्राह्यम । प्रयोग

विशेषे सार्षपतैलं तिलतैलं कुसुम्भतैलं करञ्जतैलं पक्षाघातादि-वातव्याध्यादिषु-एरण्डज्योतिष्मतीतैले ग्राह्ये। घृतं च गन्ध-समानं ज्ञेयम। गन्धचतुर्थांशमित्यन्ये। पयो=गोदुग्धम्। गन्धकाच्चतुर्गुणं ग्राह्यम। क्षिप्त्वा=दत्वा तद्भाण्डमुखं तनुना घृताक्तेन दृढवस्त्रेण बन्धयेत्। तत्पृष्ठे वस्त्रोपरि गन्धकं तण्डुलाकृतिचूर्णितं क्षिप्त्वा शरावेण=भाण्डमुखसमानमुखेन पिधापयेत=आच्छादयेत॥ १२०॥

तदनु सन्धिरोधं वस्त्रमृत्स्नया विधाय भूम्यन्तः भाण्डप्रवेश-योग्यं गर्त्तं विधाय तत्र भाण्डमामुखं निधाय, ऊर्ध्वे=शरावो-परि, लघुपुटसप्तसंख्यवनोपलैः कपोतपुटं देयम। ततस्तापेन क्षीरे भाण्डस्थिते द्रुतं=गलितं कालेन कठिनीभूतं गन्धं शुद्ध-मुष्णजलेन त्रिः क्षालयित्वा योगेषु=औषधि प्रयोगेषु योजयेत्। इत्थं भृङ्गराजरसे त्रिफलाजलेऽपि शुद्धि र्भवति॥ १२१॥

एक पात्र में घी और दूध मिलाकर डाले मुखपर एक पतला कपड़ा बांधो, इस कपड़े पर गन्धक का चूर्ण रख उसे एक शराव से ढक दे और सन्धिबन्धन कर दे दूध घी वाले पात्र को भूमि के अन्दर रख मिट्टी से चारों ओर गढ़े को भरने के पश्चात् ऊपर से छोटा पुट दे। पुट से गन्धक पिघल जायगी और कपड़े से छनकर दूध वाले पात्र में गिरेगी। इस गन्धक को शुद्ध समझ कर योगों में बरतें॥ १२०—१२१॥

मतान्तरम्—

**लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत।**
**तप्ते घृते तत्समानं क्षिपेत् गन्धकजं रजः॥ १२२॥**

विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिक्षिपेत् ।
एवं गन्धकशुद्धिः स्यात् सर्वरोगेषु योजयेत् ॥ १२३ ॥

मतान्तरेण शुद्धिरुच्यते—लौहपात्र इति—लौहपात्रे=कटाहे घृतं विनिक्षिप्य=दत्वा, अग्नौ=बदाराङ्गारागनौ, शेषं स्पष्टम् । ऊर्ध्वपातितोऽपि गन्धः शुद्धो भवति । परं तत्र सोमलादयः सम्भवन्ति । लौहपात्रे साज्यगन्धं पक्त्वा तैलनिभं क्षिपेत् । भृङ्गराजरसे क्षिप्तं शुद्धि मायाति निश्चितम् । कुत्रचिदन्ते दृश्यतेऽयं पाठः ॥ ॥ १२२—१२३ ॥

एक लोहे के पात्र में घी डाल आग पर तपावें । पिघलने पर उसके समान ही उसमें गन्धक का चूर्ण डालें । गन्धक के पिघलते ही उसे दूध में डाल दें । पश्चात् गन्धक को निकाल गरम जल से धो धूप में सुखा रखें । यह शुद्ध गन्धक है, इसे सब रोगों में प्रयोग करें ।

यदि दूध के ठण्डा होने से गन्धक छिद्रमय हो जाय तो उसे जौकुट करके जल में कुछ देर उबाल लें और पश्चात् धूप में सुखा लें ॥ १२२—१२३ ॥

अथ शुद्धगन्धकगुणाः—

शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति च ॥ १२४ ॥

इत्थं विशुद्धगन्धस्य गुणानाह—शुद्धगन्धइति—अग्निकारी=बुभुक्षाकरः । जरा इत्यत्र ज्वरेति पाठान्तरम । अधिकगन्धसेवनजन्यविकृतौ गोघृतं क्षीरं च पिबेत् ॥ १२४ ॥

शुद्ध गन्धक. कुष्ठ अकालमृत्यु तथा बुढ़ापा आदि रोगों को हरता है, अग्नि को बढ़ाता है, अत्यन्त गर्म होता है तथा वीर्य वृद्धि करता है ॥ १२४ ॥

अन्यच्च—

**गन्धाश्मातिरसायनः सु(स)मधुरः पाके कटूष्णो मतः ।**
**कण्डूकुष्ठविसर्पदद्रुदलनो दीप्तानलः पाचनः ।**
**आमोन्मन्थनशोषणो विषहरः सूतेन्द्रवीर्यप्रदः ।**
**प्लीहाध्मानविनाशनः क्रिमिहरः सत्वात्मकः सूतजित् ॥**
**॥ १२५ ॥**

संक्षेपेण गुणानाह गन्धाश्मेति—अतिरसायनः—यज्जराव्याधिविध्वंसिभेषजं तद्रसायनमिति । अतिश्चात्र सर्वोत्कर्षे ज्ञेयः । समधुरः=मधुरगुणयुतः, मधुरेण शर्करादिना युतश्च, पाके=विपाके, कटूष्णः=कटुविपाक उष्णविपाकश्च मतः । दद्रुदलनः=दद्रुनाशकारी, दीप्तानलः=क्षुत्करः, आमोन्मथनः=आमनाशनः जीर्णप्रवाहिकायां क्रमवृद्धमात्रया लघुतरलपथ्ययोगेन शय्यायां विश्रमेण च दीर्घकालं सेवितः विशेषफलाय कल्पते । शोषणः=द्रवशोषणः, सूतेन्द्रवीर्यप्रदः=पारदगुणवर्धकस्तच्च मकरध्वजादिषु स्पष्टमेव, प्लीहाध्मानविनाशनः=प्लीहा च आध्मानं च तयोर्विनाशकरः । सत्त्वात्मकः=सत्वस्वरूपः, सूतजित=पारदजेता, श्लोकद्वयमिदं र. र. स. ये. क्रमेण ३–४५, ३–१६ दृश्येते ।

गन्धाश्मा=गन्धश्चा । समधुरः=सुमधुरः । कटूष्णो मतः=

कटूष्णान्वितः। दद्रुः=दर्पः। शोषणः=शोधनः। सूतेन्द्र=सूताच्च। प्लीहाध्मानविनाशनः=गौरीपुष्पभवस्तथा। सत्वात्मकः सूतजित्=स्वर्णाधिकं वीर्यकृदिति क्रमेण पाठान्तराणि।

मात्रा १ माषकं माषद्वयं वा रसायनार्थं मधुना शर्करया वा दुग्धानुपानेन। विरेचनार्थं माषकद्वयं माषषट्कं वा प्राकृतिकबद्धकोष्ठतायां मूलव्याधौ च। विविधेषु त्वग्रोगेषु–निम्बत्वचा पत्रैर्वा। कुष्ठे श्वासे कासे च पिप्पलीचूर्णमधुना कालमेधानुपानेन त्रिकटुचूर्णघृतानुपानेन वा, मन्दाग्नौ लघुहरीतकीचूर्णेन। त्वचि निम्बतैलेन सार्षपतैलेन वा मर्दितो दृश्यादृश्यजीवाणुनाशकः। धूमश्चास्य संक्रामकताहरः। तत्प्रकारश्च महामारी (प्लेग) पुस्तके प्रदर्शितः। नासागतधूमेन गात्रदाहको श्वासयन्त्रदाहकश्च। आभ्यन्तरप्रयोगे पित्तरेचकः। अन्त्रस्थाऽदृश्यकृमिघातको रक्तशोधनेन रसायनकार्यकारी। गुदबहिर्निर्गमने तन्मुखविदरे कण्डूयने च सरत्वादुपयुक्तो भवति।

अत्र केचन प्रसिद्धाः सद्यः फलदाश्च गन्धकयोगाः संगृह्यन्ते।

शुद्धो बलिर्गोपयसा त्रिवारं ततश्चतुर्जातगुडूचिकाद्भिः।
पथ्याक्षधात्र्यौषधभृङ्गनीरैर्भाव्योऽष्टवारं पृथगार्द्रकेण॥
सिद्धे सितां योजय तुल्यभागां रसायनं गन्धकसंज्ञितं स्यात्।
धातुक्षयं मेहगणाग्निमान्द्यं शूलं तथा कोष्ठगतांश्च रोगान्॥
कुष्ठान्यथाष्टादशरोगसंघान् निवारयत्येव च राजरोगम्।
कर्षोन्मिते सेवित एति मर्त्यो वीर्यस्य पुष्टिं बलमग्निदीप्तिम्॥
गन्धकस्तुल्यमरिचः षड्गुणत्रिफलान्वितः।
शम्याकमूलजरसैर्मर्दितोऽखिलरोगहा॥ आ. प्र. २-४१-४३-५८॥

विशोधितः सुगन्धिको निहन्ति बाह्यलेपतः ।
प्रकाममामवातकं चिरोत्थिताञ्च गृध्रसीम् ॥
सुगन्धिकः सुनिर्मलो वराकषायसंयुतः ।
हरेदिहोर्ध्वगान् गदान् तथाग्निमान्द्यनाशनः ॥
सिंहपर्णकषायेण क्षयं हन्ति नवोत्थितम् ।
क्वाथेन कण्टकार्याश्च कासं श्वासं व्यपोहति ॥
रम्भापक्वफलेनेह चर्मदोषं विनाशयेत् ।
वह्निचूर्णेन सहितो निहन्ति बलहीनताम् ॥
विशोधितं गन्धकं तु तिलचूर्णेन शीलितम् ।
गुदामयोत्थं पायुस्थं विदरं नाशयत्यलम् ॥
यष्टीखण्डः स्वर्णपत्री मिश्रेया च समं समम ।
चूर्णेनानेन वा युक्तः पायुस्थविदरान्तकः ॥
सकौशिकः सुगन्धिकः फलत्रिकेण संयुतः ।
द्विमाससमात्रसेवितः कफोत्थरोगनाशनः ॥
ज्योतिष्काबीजतैलं, खलु विधिविहितं श्लक्ष्णचूर्णं वचायाः ।
गव्यञ्चाज्यं नवीनं दधिभवममलं तुल्यमेतत्त्रयं स्यात ॥
पामारिर्नष्टगन्धस्त्रितयपरिमितः सेवितो मासमात्रम् ।
यक्ष्माणञ्चान्त्रशोषं हरति हि चपलं गण्डमालाञ्च भीष्माम् ॥
दिव्या दृष्टिः सततं वीर्यवृद्धिश्चित्ते तुष्टिर्निर्भरं देहपुष्टिः ।
शौर्योत्कर्षो जायते वज्रमुष्टिर्नष्टातङ्को माससमात्रप्रयोगात ॥
मृद्दारश्रृङ्गं सौभाग्यं कर्पूरं गन्धकस्तथा ।
सर्वमेतत्समं ग्राह्यं चूर्णमेषां प्रकल्पयेत् ॥

नारिकेलस्य तैलेन परिलिप्ता ह्यनारतम् ।
पामा नश्यति सप्ताहाच्चिरजापि सुदारुणा ॥
सौभाग्यं शालनिर्यासः स्फुटिका च सुगन्धिकः ।
सर्वं समं समादाय चूर्णयेद् भिषजाग्रणीः ॥
निम्बूकस्वरसेनाथ सततं परिलेपनात् ।
विद्रावयति दद्रूणि द्रुतं नास्तीह संशयः ॥
शाल्मलीलघुमूलस्य चूर्णेन विमलं बलिम् ।
भक्षयेन्मासमेकन्तु शौर्यं वीर्यं विवर्धयेत ॥
विशोधितं गन्धकं तु मधुना परिशीलितम ।
धात्रीरसानुपानेन गलत्कुष्ठं निहन्त्यलम ॥

। इति. र. त. ८. ४०-५४ ।

विकारान्नाशयेद्गन्धो दुष्टसूताशनोत्थितान्
दुष्टा हि भक्षणोत्थांश्च शिरोदाहादिकानपि ।

गन्धप्रयोगेषु त्याज्या—क्षाराम्लतैलसौवीरविदाहिद्विदलं कोपवनितासुखादयः ।

अथ सर्वत्रातीवोपयोगित्वाद्गन्धकद्रावस्य (दाहजलस्य) निर्माणप्रकारः ।

एकस्मिंल्लोहपात्रे तु बलिं शतपलोन्मितम् ।
निक्षिप्य चुल्लिकायाञ्च निधायाग्निं प्रदीपयेत ॥
अपरस्मिन् सोरकञ्च सार्धषट्कपलोन्मितम् ।
निधाय चुल्यामारोप्य वह्निं सन्धुक्षयेत्ततः ॥

पिधानेनानयोर्युक्त्या भृशं संरोधयेन्मुखम् ।
नलिकाद्वितयं दीर्घं पात्रयोर्योजयेत् पृथक् ॥
कोष्ठाकारेऽहिपात्रे च मुखं नलिकयोर्न्यसेत् ।
वलिसोरकयोरेवं धूमं सम्मिश्रयेद् बुधः ॥
दशाधिकद्विशतकं पलं सलिलमाहरेत् ।
पात्रेऽन्यस्मिंश्च संस्थाप्य वह्नौ सन्तापयेद् भृशम् ॥
नलिकामुखतो वाष्पं नागपात्रेऽथ मेलयेत् ।
वाष्पसंयोगतश्चैव शतत्रयपलोन्मितः ॥
जायते गन्धकद्रावो पीताभोऽतिमनोहरः । र. त. ८. १०६–११४ ।

गन्धकस्य विशेषवर्णनन्तु–र. इ. चि. अ. ५ । र. अ. प. ७. श्लो. ६८ तः । आ. कं. उ. १३. तथा–क्रि. क. वि. उ. १. १३ तः । र. इ. चू. अ. ११ । र. र. स. अ. ३. श्लो. २. तः । आ. वे. प्र. अ. २. ३. तः । अत्र कश्चिद्विशेषोप्यस्ति । र. त. ८. तरङ्गे नव्य-दिशाऽपि वर्णनमस्ति । र. २. आ. उ. ३. श्लो. ६८ तः । अत्र विशेषप्रकारेण गन्धशुद्धिर्निर्गन्धकरणं तैलप्रकारश्च वर्णितः । कुलकर्णीकृत र. र. स. विज्ञानबोधिन्यामपि ज्ञातव्याः सन्ति विषयाः ।

अथ पक्षवधे गन्धककल्पः—ऐरण्डतैलत्रिफलाक्वाथे यथोक्त-विधिना गन्धकं शोधयित्वा पुनरैरण्डतैले विपचेत् तदनु द्विमाष-मात्रया समभागशर्करादुग्धानुपानेन प्रत्यहं त्रिःप्रयोगः । रक्तिका-चतुर्थांशमात्रया ताम्रभस्माप्यत्र देयम् । प्रत्यहमेकाहमतिक्रम्य वा ऐरण्डरसोनदशमूलादिवातघ्नद्रव्यक्वाथेन वस्तिः प्रदेया ।

इत्थं विद्युत्प्रयोगेणाप्यसाधितः सुचिकित्सकैरप्यचिकित्सिता नातिचिराय सिद्ध्यति पक्षबधः। प्रयोगश्चायं मदीयज्येष्ठभ्रातृ श्रीगंगादत्तपन्तपुत्रेण जीवानन्देन काश्यां कस्मादपि साधोर्लब्धो मह्यमपि दत्तो मया च बहुशोऽनुभूतः।

गन्धककल्पास्तु—र. इ. चू. । र. र. स. । आ. वे. प्रकाशादिभिरुद्धृता दृश्यन्ते ॥ १२५ ॥

भाषा—शुद्ध गन्धक अतिरसायन है, रस में मधुर है और पाक में कटु है, उष्ण है। खाज कुष्ठ और विसर्प दाद को दूर करता है। अग्निदीपक और पाचक है। आमरस को पचाता है। शोषण करता है। विष को हरता है। पारे के लिये वीर्यप्रद है। तिल्ली और आध्मानहर है। क्रिमिनाशक है, सत्त्वरूप है। पारे को जीतने वाला है ॥ १२५ ॥

अशुद्धवज्रदोषाः—

पार्श्वपीडां पाण्डुरोगं हृल्लासं दाहसन्ततिम्।
रोगानीकं गुरुत्वञ्च धत्ते वज्रमशोधितम् ॥ १२६ ॥

अशुद्धवज्रदोषानाह-पार्श्वेति—

वज्रमिन्द्रायसं वीरं भिदुरं कुलिशं पविः ॥
अभेद्यमसितं रत्नं दृढगर्भावृतं स्मृतम्।
स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्यं लघु लेखनम् ॥
षड्धारं तीक्ष्णकं धारं सुसौम्यारं श्रियं दिशेत्।

मूलेऽनुक्तं वज्रलक्षणमत्र—आ. कं. क्रि. क. वि. उ. ८. ४६½ त उच्यते। तत्र च स्त्रीपुंभेदा जातयश्च वज्रोत्पत्तिस्थानमृदूकरण

भस्मकरणादीनि विस्तरशः प्रोक्तानि। एवं, र. इ. चू. १२. २०। र. र. स. ४–२६। आ. वे. प्र. १३–१४। अत्रापि विशेषतः— विस्तरेण च वज्रविषये ज्ञातव्याः सर्वे विषया वर्णिताः सन्ति। र. अ. प. ६–६५। र. का. धे. मणिरत्नाधिकारे। र. र. आ. उ. ३–२। च, वज्रविषये द्रष्टव्यम्। वज्रलक्षणन्तु—र. अ.— भेदयेत्सर्वलोहानि, यच्च केन न भिद्यते तद्वज्रम् प. ८. श्लो १। वज्रं हि काठिन्येन न सर्वान्धातूनतिशेतेऽतएव तस्य काठिन्यं १० भवति। अङ्गारसजातीयत्वेऽपि घनत्वकठिनत्वभेदात् वज्रस्य ततो भेद इति परीक्षकाः। एवं सैन्धवस्य २। दुग्ध पाषाणस्य ३। स्फटिकस्य ७। पुष्परागस्य ८। कुरविन्दस्य ९। काठिन्यम्। पार्श्वपीड़ां= पार्श्वशूलम्, पाण्डुरोगो= यकृद्विकारः, हृल्लासं= हृदयादीषद्व्यथः पटूवम्बुनिर्गमः, दाहसन्ततिं= प्रबलदाहम्। रोगानीकं= रोगसमूहम्, गुरुत्वं= गौरवम्। अशोधितं= शुद्धिरहितम्, वज्रं= हीरकम्, धत्ते= करोति॥ १२६॥

अशुद्ध हीरे के सेवन से पसलियों में पीड़ा, पाण्डुरोग, जी मचलाना, दाह, अन्य रोगसमूह तथा देह में गुरुता होती है।

### अथ वज्रशोधनम्—

व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचितम्।<br>
सप्ताहं कोद्रवक्काथे कौलत्थे विमलं भवेत्॥ १२७॥

व्याघ्रीत्यादिना वज्रशोधनमुच्यते— वज्रं= हीरकं व्याघ्री-कन्दगतं= व्याघ्री कण्टकारी तस्याः कन्दो मूलं यद्यपि कन्द

शब्देन सूरणमूलकादयोऽभिधीयन्ते तथापि व्याघ्रीपदसाहचर्यात् व्यवहारतश्च कन्दशब्दो मूलेऽपि दृश्यते, तदुक्तं व्याघ्रीमूलकल्कनिर्मितसम्पुटमध्यस्थं तत्सम्पुटं च वस्त्रे कृत्वा सप्ताहं कोद्रवक्वाथे कोदों इतिख्यातधान्यस्य क्वाथे, कौलत्थे=कुलत्थं कुलथी इति गहत इति वा प्रसिद्धो धान्यविशेष उत्तरापथे प्रचुरतया भवति तदुत्थे क्वाथे । वा कोद्रवकथितेन वेति पाठान्तरात् । र. र. स. ४–३४ । दोलायन्त्रे--

द्रवद्रव्येण भाण्डस्य पूरितार्धोदरस्य च ।
मुखे तिर्य्यक् कृते दण्डे द्रव्यं सूत्रेण लम्बितम् ॥
तं स्वेदयेत्तलगतं दोलायन्त्रमितिस्मृतम् ॥ र. अ. प. ४–७।

इत्युक्ते त्रिपाचितं विमलं दोषहीनं निर्मलं च भवेत् ॥ १२७ ॥

भाषा—हीरे को कण्टकारी की जड़ की लुगदी के सम्पुट में रख लुगदी को कपड़े में बाँध कोदों के क्वाथ में वा कुलथी के क्वाथ में सात दिन तक दोलायन्त्र में स्वेदन करे तो हीरा शुद्ध हो जाता है । दोनों क्वाथों में भी स्वेदन का विधान है ॥ १२७ ॥

दोलायन्त्रम् ।

मतान्तरम्—

व्याघ्रीकन्दगतं वज्रं मृदा लिप्तं पुटे पचेत् ।
अहोरात्रात् समुद्धृत्य हयमूत्रेण सेचयेत् ।
वज्रीक्षीरेण वा सिञ्चेत् कुलिशं विमलं भवेत् ॥१२८॥

प्रकारान्तरेण वज्रशोधनं व्याघ्रीत्यादिना—हयमूत्रेण=अश्वमूत्रेण, वज्रीक्षीरेण=स्नुहीक्षीरेण सेचयेदिति—

तद्गोले निहितं वज्रं तद्गोलं वह्निना धमेत् ।

सिञ्चयेदश्वमूत्रेणेत्यादि निदर्शनात । शा. ध. म. ख. ११-८१। वज्रं तप्तमश्वमूत्रेण सिञ्चेत् । कुलिशं=वज्रम् । अन्यच्च तण्डुलीयजलैर्वज्रं शुद्ध्यति । इति र. इ. चि. ७-६८ ॥ १२८ ॥

भाषा—कण्टकारी के जड़ की लुगदी के सम्पुट में हीरे को बन्द कर कपड़मिट्टी कर गोमयाग्नि से पुटपाक करे २४ घण्टे के बाद निकाल कर तपे हीरे को घोड़े के मूत्र से अथवा सेहुण्ड के दूध से सिञ्चन करे तो हीरा निर्मल हो जाता है ॥ १२८ ॥

अथ वज्रमारणम्—

त्रिवर्षारूढकार्पासमूलमादाय पेषयेत् ।
त्रिवर्षनागवल्ल्या वा निजद्रावैः प्रपेषयेत ॥ १२९ ॥
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् ।
एवं सप्तपुटेनैव म्रियते कुलिशं ध्रुवम् ॥ १३० ॥

वज्रमारणमाह— त्रिवर्षेति–त्रिवर्षारूढकार्पासमूलं=त्रिवर्षपुराणकार्पासस्य मूलमादाय पेषयेत् तदनु त्रिवर्षपुराणनागवल्ल्या, निजद्रावैः स्वरसैः प्रपेषयेत्=प्रकर्षेण पेषयेत् ॥ १२९ ॥

तद्गोलके=नागवल्लीस्वरसपेषितकार्पासमूलसम्पुटे वज्रं क्षिपेत् रुद्ध्वा शरावसम्पुटे कृत्वा सन्धिरोधं च विधाय गजपुटे ( पारदः ५६ श्लो० ) पचेत् । एवं सप्तपुटेनैव कुलिशं=वज्रं ध्रुवं निश्चयेन म्रियते=भस्मीभवति । र. इ. चि. मणौ च—

त्रिवर्षनागवल्ल्याश्च कार्पास्या वाथ मूलिकाम् ।
पिष्ट्वा तन्मध्यगं वज्रं कृत्वा मूषां निरोधयेत् ।
मुनिसंख्यैर्गजपुटैर्म्रियते ह्यविचारितम् ॥ ७·५८ ॥

रसार्णवे तु—पेष्यं त्रिवर्षकार्पासमूलं वा तण्डुलाम्भसा ॥ ६–६२ ॥ इति दृश्यते । इति नागवल्लीकार्पासमूलयोर्विकल्पः कृतः । मा० ३४ र० ॥ १३० ॥

भाषा—तीन वर्ष पुरानी कपास की जड़ को पीसे अथवा तीन वर्ष पुरानी पान की जड़ को पान के ही रस से पीसे । उस के पिण्ड के अन्दर हीरे को बन्द कर और शरावसम्पुट में रख सन्धिबन्धन कर गजपुट में फूँक दे । इस प्रकार से सात पुट देने ही से हीरे की भस्म हो जाती है ॥ १३० ॥

मतान्तरम्—

**कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु निक्षिपेत् ।**
**त्रिसप्तकृत्वः सन्तप्तं वज्रमेवं मृतं भवेत् ॥ १३१ ॥**

प्रकारान्तरेण वज्रमारणं कांस्येति— मण्डूकं कांस्यजे पात्रे निगृह्य स्थापयेत्सुधीः । स भीतो मूत्रयेत्तत्र तन्मूत्रे वज्रमावपेत् । इति कांस्यपात्रे भेकस्य मण्डूकस्य मूत्रे त्रिसप्तकृत्वः=त्रिगुणिताः सप्त त्रिसप्त त्रिसप्तकृत्वोऽत्र क्रियाभ्यावृत्तिगणने कृत्वसुच् । एक-

विंशतिवारं—सन्तप्तमग्नौ तापितं, वज्रं निक्षिपेत्=सेचयेत् एवं वज्रं मृतं भवेत ॥१३१॥

कांसे के पात्र में मेंडक का मूत्र इकट्ठा कर हीरे को आग में तपा उस मूत्र में बुझादे। इस प्रकार इक्कीस बार गरम कर बुझाने से हीरा मर जाता है।

चमकदार कांसे के पात्र में मेंडक को पकड़ कर डाल दें तो वह वहां भयभीत हुआ मूत्र कर देता है॥ १३१॥

अथान्यः—

त्रिसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचयेत् ।
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥१३२॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण तु ।
भस्मीभवति तद्वज्रं वज्रवत् कुरुते तनुम् ॥ १३३ ॥

तदन्यप्रकारेणाह त्रिरिति=सन्तप्तं वज्रं त्रिसप्तकृत्व=एकविंशतिवारं खरमूत्रेण सेचयेत् ततो मत्कुणैः=खट्वा मल्लैः। तालकं मत्कुणैः पिष्ट्वा इति-र-र-आ-३–१५ पाठः। तालकं=हरितालं पिष्ट्वा तद्गोले तालकसम्पुटे कुलिशं=वज्रं क्षिपेत् ततो गोलं प्रध्मातं=प्रतप्तं वाजिमूत्रेण=अश्वमूत्रेण पूर्वक्रमेण सिक्तं तु भस्मीभवति तद्वज्रं=वज्रभस्म तनुं=शरीरं वज्रवत= वज्रसदृशं कुरुते। यथोक्तम्— रसे यत्र भवेद्वज्र रसःसोऽमृतमुच्यते। भस्मीभावगतं युक्त्या वज्रवत्कुरुते तनुम्। र-इ-चि-७—६१। ॥१३२—१३३॥

भाषा—शुद्ध हीरे को आग में खूब गरम कर इक्कीस बार गधे के मूत्र से सिंचन करे। फिर शुद्ध हड़ताल को खटमलों के साथ पीसकर उसके गोले में हीरे को रखे। उस गोले को सम्पुट में बन्द कर अङ्गारों में रख धौंकनी से खूब आंच दे। जब हड़-ताल सारी जल जाय और सम्पुट तप कर लाल हो तब उस तप्त हीरे को निकाल घोड़े के मूत्र से सींचे। इसप्रकार २१ बार करे, तो हीरा भस्म हो जाता है। इसके सेवन से शरीर वज्र के समान सुदृढ़ हो जाता है। हीरकभस्म की मात्रा $\frac{1}{32}$ रत्ती से $\frac{1}{16}$ रत्ती तक है॥ १३२—१३३॥

अथ शोधितवज्रभस्मगुणाः—

आयुष्यं सौख्यजननं बलरूपप्रदं तथा।
रोगघ्नं मृत्युहरणं वज्रभस्म भवत्यलम्॥ १३४॥

इत्थं मृतस्य वज्रस्य गुणानाह—आयुष्यमिति=आयुषे हितमायुष्यम्, सौख्यजननं=सुखकरम्, बलरूपप्रदम्=बलप्रदं (११० श्लो०) रूपप्रदं=सौन्दर्यकरम्, मृत्युहरणं=रोगदूरीकरणेन, अलं=पर्याप्तम्। वज्रविषये विशेषस्तु—र-अ-प-६-६५-११२। आ-कं-क्रि-क-वि-८-४६। र-र-आ-३-२-६४॥ १३४॥

भाषा—हीरे की भस्म, आयु बढ़ाने वाली, आरोग्योत्पादक, बल और रूप देने वाली, रोगनाशक तथा अकाल मृत्यु को हरने वाली होती है॥ १३४॥

अथ वैक्रान्तशोधनम्—

वैक्रान्तं वज्रवच्छोध्यं ध्मातं तद्धयमूत्रके।
सिक्तं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणैः॥१३५॥

वैक्रान्तशोधनमाह—काठिन्यम् ४ । विशिष्टगुरुत्वम् ३-२। fluorspar भाषानाम-तुर्मुली, वैक्रान्तमिति—तल्लक्षणं च र-र-स-

अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥
श्वेतो रक्तश्च पीतश्च नीलः पारवतच्छविः ।
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ।र-५५-५६।
विकृन्तयति लोहानि तेन वैक्रान्तकः स्मृतः ।

उत्पत्तिस्तु— विन्ध्यस्य दक्षिणे भागे उत्तरे चास्ति सर्वतः। र-अ-प-६-१२६। मध्यप्रान्त. पंजाब, राजपूताना, ब्रह्म (बर्मा) देशेषु-अन्यखनिजैः सह सम्भवति । विविधधातूनां लेशसंसर्गादस्य नानावर्णता । वज्रवच्छोध्यमिति व्याघ्रीकन्दगतमित्यादिविधानेनेत्यर्थः। हयमूत्रके=अश्वमूत्रे । सिक्तं सिक्तमत्र हितं हिममित्यपपाठौ। वज्रस्थाने=वज्रप्रतिनिधित्वेन ॥ १३५॥

वैक्रान्त को हीरे के समान ही शुद्ध कर आग में तपा घोड़े के मूत्र से सिंचन करे। इस वैक्रान्त को भस्म को हीरे की भस्म के अभाव में विद्वान लोग प्रयुक्त करें ॥ १३५ ॥

मतान्तरम्

वैक्रान्तं वज्रवच्छोध्यं मारणञ्चैव तस्य तत् ।
हयमूत्रेण तत् सेच्यं तप्तं तप्तं त्रिसप्तधा ॥ १३६ ॥
ततश्चोत्तरवारुण्याः पञ्चांगे गोलकं क्षिपेत् ।
रुध्वा मूषापुटे पाच्य मुद्धृत्य गोलकं पुनः ॥ १३७॥

क्षिप्त्वा रुध्वा पचेदेवं यावत् तत् भस्मतां व्रजेत्।
भस्मीभूतञ्च वैक्रान्तं वज्रस्थाने नियोजयेत्॥ १३८॥

प्रकारान्तरेणाहवैक्रान्तमिति– त्रिसप्तधा=एकविंशतिवारम्, उत्तरवारुण्या=उत्तरणीत्याख्यायाः, शार्ङ्गधरे तु--ततस्तु मेष दुग्धस्य पञ्चाङ्गे गोलकं क्षिपेत्' मेषदुग्धं=मेषदुग्धिका तस्या पञ्चाङ्गमित्यर्थः····मेषदुग्धस्य स्थाने लताश्चोत्तरवारुण्या इति पाठान्तरे लघु-इन्द्रवारुण्या ग्राह्यमिति दीपिकायामुक्तम्। रस-पद्धतौ तु–'उत्तरवारुणी पर्यासि चेति–पाठः' तट्टीकायाम्–उत्तरवारुणीति उत्तरणीति प्रसिद्धा' इत्युक्तम्। कोषेषु-उत्तरवारुणी शब्द-पर्याये इन्द्रवारुणी न दृश्यते। पञ्चाङ्ग मूलपत्रपुष्पफललता-कल्ककृतमूषायां क्षिपेत्। ततस्तस्य गोलकं कृत्वा मूषापुटे रुध्वा पाच्यं गजपुट इति शेषः। उद्धृत्य पुनः पूर्ववत् गोलकं सम्पुटे क्षिप्त्वा पूर्ववत रुध्वा च पचेत्—एवं यावत्तद्भस्मतां व्रजेत् सप्तवार-पुटनाद्भवतिभस्म। वज्रस्थाने हीरकप्रतिनिधिरूपेण। नीलवैक्रान्त-भस्म च सर्वश्रेष्ठ मन्यभेषजै दुर्जयान् रोगाञ्जयति। मात्रा च 1/64 रक्तिकातः 1/2 रक्तिमिता॥ १३६-१३८॥

वैक्रान्त को हीरे के समान ही शुद्ध करना तथा मारना चाहिए। उसे गरमकर २१ बार घोड़े के मूत्र से सींचें। फिर उत्तर वारुणी के पत्ते जड़ फूल फल और प्रतान को पीस गोला बना उसमें उस शुद्ध वैक्रान्त को डाल एक मूषापुट में बन्द कर पकावे। इस प्रकार नये उत्तरवारुणी के पञ्चाङ्ग के गोले में डाल

सम्पुट कर पुट देता जाय जबतक उसकी भस्म न हो। इस वैक्रान्त भस्म को हीरे के स्थान में प्रयुक्त करे। मा. ३४-११ र.

॥ १३६-१३८ ॥

अथाभ्रपर्य्यायाः—

**अभ्रकं गिरिजाबीजममलं गगनाह्वयम् ॥१३९॥**

क्रमप्राप्तमभ्रं तत्पर्य्यायाँश्चाह—अभ्रकमिति—गिरिजा= गौरी तस्या बीजं=वीर्यम्। गिरिजा देवी यद्वीर्यमुमोच तच्छुभ-मभ्रकं जातमिति र. अ. प. ६—२। इति प्रकरणाभिप्रायः। अमलं=न विद्यते मलमत्रेति, अमलं=मलहीनमित्यर्थः। गगना-ह्वयं=गगनं नभ आह्वा नाम यस्य तद्गगनाह्वयम्। यानि नामानि गगनस्य तानि अभ्रकस्य शास्त्रे व्यवहारार्थं परिगणनम्। एवं घनस्य=मेघस्य वा यानि नामानि तान्यप्यभ्रस्य ज्ञेयानि। अभ्रको-त्पत्तिस्तु—विहारे—हजारीबागप्रदेशे, मद्रदेशे नेल्लोरशालेमप्रान्तयोः, आजमीढ़े (अजमेर) च भवति। ॥ १३९ ॥

अभ्रक, गिरिजाबीज, अमल, गगन आकाश और इसके पर्याय ये सब अभ्रक के वाचक हैं॥ १३९ ॥

अथाभ्रभेदाः—

**तत्र कृष्णाभ्रके वज्रं पीतात्मनि तु ग्राहिकम्।**
**सितात्मके तारकं स्याद्भीरुकं रक्तके वरम् ॥१४०॥**

अथाभ्रभेदाः—तत्रेति—अभ्रं कृष्णपीतसितरक्तभेदेन चतुर्विधं तत्पुनः प्रत्येकं पिनाकनागदर्दुरवज्र भेदेन चतुर्विधंमतः षोडशभेदाः भवन्ति। रसप्रकाशसुधाकरेऽपि-भेदाःसन्ति षोडश, इत्थमेवोक्तम्। ५—६। कृष्णाभ्रके=कृष्णवर्णे-अभ्रे वज्रं=

वज्राभ्रं पीतात्मनि=पीतवर्णे माहिकं-तदाख्यम्, सितात्मके=सितवर्णे तारकम्, रक्तके=रक्तवर्णे भीरुकं भीरुक नाम वरं=श्रेष्ठं स्यात्। वरमित्युक्त्या वज्रादीनामलाभे शेषाणां गौणत्वेन ग्रहणं सूचितम्। तत्र लोहांशाधिक्यात्कृष्णं तदल्पत्वाद्रक्तम्। तदल्पतरत्वात्पीतम्, क्षारयुतत्वात्सितवर्णमिति ज्ञेयम्॥ १४०॥

अभ्रक चार प्रकार के रंगों का होता है। काला पीला श्वेत और लाल। इनमें से काले अभ्रक की जाति में से "वज्र" अच्छा है। पीले अभ्रक की जाति में से "माहिक" अच्छा होता है। श्वेत अभ्रक की जाति में से "तारक" तथा लाल अभ्रक की जाति में से "भीरुक" अच्छा है॥ १४०॥

सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम्।
यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि।
सदाकरसमुद्भूतं वज्रन्तु प्रथितं घनम्॥ १४१॥

वज्राभ्रलक्षणमाह-सुप्रशस्तमिति-कठोराङ्गं=कठिनम्, कज्जलसन्निभं=कृष्णवर्णम्। शब्दायते=ध्वनिं करोति, उच्छूनं=उत्फुल्लम्, सदाकरसमुद्भूतं=उत्तरशैलोत्थपुरुषप्रमाणाधःखनेगृहीत प्रशस्त-खनिजातं चेत्यर्थः। वज्रं वज्राख्यं घनमभ्रं तु इति विशेषतया प्रथितम्=प्रसिद्धम्। वज्रन्तु इत्येव पाठः सादीत या प्रतिभाति। वज्रेति पाठस्तु प्रामादिकः॥ १४१॥

जो अभ्रक कठोर अङ्ग वाला, भारी, कज्जल के समान काला हो और जो आग में रखने पर न तो किसी प्रकार का शब्द करे

और न फूले, जो उत्तम खान से निकला हो उसे "वज्र" अभ्रक कहते हैं, वह उत्तम है ॥ १४१ ॥

पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम् ॥ १४२ ॥
ध्मातमभ्रं दलचयं पिनाकं विसृजत्यलम् ।
फूत्कारं भुजगः कुर्यात् दर्दुरं भेकशब्दवत् ।
चतुर्थञ्च वरं ज्ञेयं न वह्नौ विकृतिं व्रजेत् ॥१४३॥

अग्नौ धमनात्पिनाकादिपरीक्षामाह—पिनाकमिति—यथा सर्वेषु द्रव्येषु जलं तिष्ठत्येवमभ्रेऽपि प्रायः प्रतिशतं षड्भागमानं जलं तिष्ठति, अतोऽग्नौ ध्मायमानानां पिनाकादीनां रचनाप्रकार भेदेन बहिर्निर्गच्छज्जलं तत्तद्विशेषशब्दं करोति । पिनाकं तु जलीयस्नेहस्यापगमनादलं=पर्य्याप्तं दलचयं दलानां=पत्राणां चयं=समूहं विसृजति, एवं भुजगो=नागः फूत्कारं=जलनिस्सरणमार्गस्य तनुत्वात्तादृशशब्दं करोति, तथा दर्दुरमपि भेकस्य=मण्डूकस्य शब्दवच्छब्दकरणात, इदमपि जलनिस्सरणमार्गभेदवशादेव ज्ञेयम् । चतुर्थं वज्राभ्रं वन्हौ ध्मायमानं विकृतिं न व्रजेत् वज्रवत्तिष्ठेत् । अस्य तु जलं रचनासौकर्यवशात सुखेन निस्सरत्यतो वरं श्रेष्ठं ज्ञेयम् ॥ १४२—१४३ ॥

यह कृष्ण अभ्रक भी चार प्रकार का है । पिनाक, दर्दुर, नाग और वज्र ॥ १४२ ॥

पिनाक को आग में तपाने से चिट चिट शब्द के साथ पत्र अलग २ हो जाते हैं । नाग अभ्रक आग में तपाने से सर्पवत

फुंकार छोड़ता है और दर्दुर अभ्रक मेंडक के समान शब्द करता है। चौथे वज्र अभ्रक को श्रेष्ठ जाने। वह आग में किसी भी प्रकार के विकार को नहीं प्राप्त होता—वैसा ही रहता है॥ १४३॥

कुष्ठप्रदं पिनाकं स्याद्दर्दुरं मरणप्रदम्।
नागं देहगतं नित्यं व्याधिं कुर्य्याद् भगन्दरम् ॥१४४॥
रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये!
तस्माद्वज्राभ्रकं ग्राह्यं व्याधिवार्द्धक्यमृत्युजित् ॥१४५॥

पिनाकादिसेवने दोषमाह—कुष्ठप्रदमिति—भगन्दरमिति—नागं भक्षित सवश्यं भगन्दरव्याधिं करोति॥ १४४॥

वज्राभ्रकस्यैव व्यवहार्यत्वमाह—रस इति—रसे ज्वराद्यर्थमादौ, रसायने जराव्याधिविध्वंसनार्थम्, एवशब्दाच्छेषाणां निरासः। प्रिये-इति सम्बोधनं पार्वत्याः। रसार्णवादुद्धृतोऽयं पाठः। व्याधि-वार्धक्यमृत्युजिदिति व्याधि ज्वरादिः, वार्धक्यं=वृद्धस्य भावः, मृत्युः=प्राणवियोगः, तेषां जित्=जयनशीलम्॥ १४५॥

पिनाक अभ्रक की भस्म के सेवन से कुष्ठ और दर्दुर के सेवन से मृत्यु होती है। नागाभ्र के सेवन से भगन्दर रोग हो जाता है। इस कारण हे प्रिये! रसों में और रसायन कर्म में वज्राभ्रक को प्रयुक्त करना चाहिये। यह रोग, बुढ़ापा और अकाल मृत्यु को नहीं होने देता॥ १४४-१४५॥

अशुद्धाभ्रं निहन्त्यायु वर्धयेत् मारुतं कफम्।
अहतं छेदयेद् गा मन्दाग्निक्रिमिवर्द्धनम् ॥१४६॥

अशुद्धाभ्रमिति—अहत=मल्पपुटितम् । ईषदर्थे नञ् । छेदयेत स्फोटयेत ॥ १४६ ॥

अशुद्ध अभ्रक की भस्म आयु का नाश करती है, वायु और कफ को बढ़ाती है। शुद्ध भी अभ्रक हो परन्तु कच्चा हो वा ठीक भस्म न किया हो तो शरीर का छेदन करता है, मन्दाग्नि और क्रिमि बढ़ाता है ॥ १४६ ॥

धान्याभ्रमाह—

पादांशशालिसंयुक्तमभ्रकं कम्बलोदरे ।
त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेद् दृढम् ॥१४७॥
कम्बलाद्गलितं श्लक्ष्णं बालुकारहितञ्च यत् ।
तद्धान्याभ्रमितिप्रोक्तमभ्रमारणसिद्धये ॥ १४८ ॥

धान्याभ्रकरणमाह पादांशेति—प्रथमं काञ्जिकादौ—अभ्रस्य शोधनमभ्रगततृणशर्करादिनिवारणार्थं धान्याभ्रकं विधेयम् ।

पादांशशालिसंयुक्त = मभ्रकाच्चतुर्थांशशालिधान्ययुक्तमभ्रकं कम्बलोदरे कम्बलकृतप्रसेविकायां चूर्णीकृत्य पूरयित्वेति शेषः । नीरे=जले काञ्जिकइति तु-आयुर्वेदप्रकाशः । त्रिरात्रं क्लिन्नं मृदूभूतं दृढं यथास्यात्तथा मर्दयेत्पाणिना पद्भ्यां वा । गलितं कम्बलान्निस्रुतं श्लक्ष्णं=सूक्ष्मं स्पष्टमन्यत् ॥१४७-१४८॥

वज्राभ्रक चार भाग, शालिधान्य १ भाग, दोनों को एक कम्बल की पोटली में डालकर जल में तीन दिन रात पड़ा रहने दे। जब भीग कर गला हुआ सा हो जाय तब ज़ोर से मर्दन करे। मर्दन से कम्बल में से बारीक अभ्रक के कण बाहर चौड़े

पात्र में आजायंगे। बालुका वा छोटी छोटी कंकरी आद कम्बलि में ही रह जायगी। इस प्रकार जल में निकले अभ्र को धान्याभ्र कहते हैं। यही मारने के काम आता है।

जल के स्थान पर कांजी का विधान भी आ. प्र. में मिलता है॥ १४७–१४८॥

मतान्तरम्—

त्रिफलाक्वाथगोमूत्र–क्षीरकाञ्जिकसेचितम्।
भस्त्राग्नौ सप्तधा व्योम तप्तं तप्तं विशुध्यति ॥१४९॥

अभ्रस्य शोधनमाह त्रिफलेति—त्रिफलाक्वाथादीनां प्रत्येकं विकल्पः।

यथा—र. इ. चू—प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम्।
निर्दोषं जायते नूनं निक्षिप्तं वापि गोजले।
त्रिफलाक्वथिते वापि गवां दुग्धे विशेषतः।
ततोधान्याभ्रकं कृत्वा·······अ० १०–१६–१७।

भस्त्राग्नौ=चर्मप्रसेविकाध्माताग्नौ व्योम=अभ्रम्॥ १४९॥

अभ्रक को आग पर धौंकनी से तपा कर त्रिफला का काढ़ा, गोमूत्र, दूध वा कांजी किसी एक में सात वार सिंचन करने से वह शुद्ध हो जाता है। कहीं-कहीं चारों में सात वार बुझाने का विधान भी है॥ १४९॥

मतान्तरम्—

अथवा बदरीक्वाथे ध्मातमभ्रं विनिक्षिपेत्।
मर्दितं पाणिना शुष्कं धान्याभ्रादतिरिच्यते ॥१५०॥

(इत्यभ्रशोधनम्)

प्रकारान्तरेण शोधनमाह—अथवेति—अभ्रमानां बदरीत्वचं क्वाथयित्वा तत्रध्मातं=तप्तमभ्रं विनिक्षिपेत्=सिञ्चेत्। क्वाथश्च प्रत्येकवारं नव एव ग्राह्यः। अतिरिच्यते—समधिकं भवति ॥१५०॥

अथवा अभ्रक को तपा कर बेरी की छाल के क्वाथ में डाले और हाथों से खूब मसले। सूखने पर यह धान्याभ्रक से भी उत्तम हो जाता है ॥१५०॥

अभ्रद्रुतिः—

अगस्त्यपुष्पतोयेन पिष्टं शूरणकन्दगम्।
गोष्ठभूमिगतं मासं जायते रससन्निभम् ॥१५१॥

अभ्रस्य द्रुतिमाह-अगस्त्येति—अगस्त्यपुष्पाणां रसे धान्याभ्रस्य पिष्टिं विधाय सूरणकन्दे खातं कृत्वा तत्र पिष्टिं निधाय बहि र्मृत्कर्पटेन विलिप्य गोष्ठभूमौ हस्तमात्रे खाते मासमिति-कालाध्वनोरत्यन्तसंयोगे द्वितीया,पूरयेत्। रससन्निभं=पारदोपमं जायते। पुष्पस्थाने पत्रेतिपाठान्तरम। अगस्त्यपुष्पं=वकपुष्पम्, सूरणकन्दः जिमीकन्द इति स च वन्यो ग्राह्यः॥ १५१ ॥

इत्यभ्रद्रुतिः।

अभ्रक को अगस्तिया के फूल के रस से निश्चन्द्र घोटकर नूतन जंगली सूरण के अन्दर बन्द कर मिट्टी लीपकर गोशाला की भूमि के अन्दर एक मास तक गड़ा रहने दे, तो अभ्र पारे के समान द्रव हो जाता है॥ १५१ ॥

अथाभ्रमारणम्—

वज्राभ्रकं समादाय निक्षिप्य स्थालिकोदरे ।
रम्भादिक्षारतोयेन पचेद् गोमयवह्निना ॥१५२॥
यावत् सिन्दूरसंकाशं न भवेत् स्थालिकाबहिः ।
सेचनीयं ततः क्षीरैस्ततः सूक्ष्मं विचूर्णयेत् ॥१५३॥

वज्राभ्रकमित्यादिनाऽभ्रमारणमुच्यते—शोधितं धान्याभ्रकं समादाय स्थालिकोदरे=हण्डिकाभ्यन्तरे रम्भादिक्षारतोयेन= कदल्यादिगणभस्मनिसृतक्षारजलेन, स च गणः—

कदलीसूर्यभक्तश्च कटुकोशातकी तथा ।
द्रावणी काकमाची च शिग्रुकाक्षीरकञ्चुकी ॥

नीरपिप्पलिका चेति कदल्यादिगणस्त्वयम् । र. इ. चू. ८-२८ । गोमयवह्निना=गोमयाग्निना पचेत । अन्विष्यमाणोऽपि रम्भादि-गणो न दृष्टस्त्रुटितः प्रतिभाति र. सा. संग्रहे ॥ १५२ ॥ सिन्दूरसंकाशं रक्तवर्णम्, सङ्काशशब्दः सदृशवाची । सूक्ष्मं मसृणतरमित्यर्थः । इत्येकेनैव पुटेन-अभ्रभस्म जातम् ॥१५३॥

शुद्ध वज्राभ्रक को एक हांडी में डाल "रम्भादिगण" के क्षारजल से उपलों की आग दे पकावे । जब तक हांडी के बाहर का भाग सिन्दूर के समान लाल रंग का न दिखाई दे तब तक आंच देता जाय । पश्चात् उसे गरम ही दूध से सिक्त करे और सुखाकर सूक्ष्म चूर्ण बना ले ॥ १५२-१५३ ॥

मतान्तरम्—

धान्याभ्रकं समादाय मुस्ताक्काथैः पुटत्रयम् ।
तद्वत् पुनर्नवानीरैः कासमर्दरसैस्तथा ॥ १४५ ॥
नागवल्लीरसैः सूर्य्यावर्त्तीरैर्देयं पृथक् पृथक् ।
दिनं दिनं मर्दयित्वा क्काथैर्वटजटोद्भवैः॥ १५५ ॥
दत्वा पुटत्रयं पश्चात् त्रिःपुटेत् मुशलीजलैः ।
त्रिर्गोक्षुरकषायेण त्रिःपुटेत् वानरीरसैः ॥ १५६ ॥
मोचकन्दरसैः पाच्यं त्रिवारं कोकिलाक्षकैः (जैः) ।
रसैः पुटेल्लौध्रकैस्तु क्षीरादेकं पुटेत्पुनः ॥ १५७ ॥
दध्ना घृतेन मधुना स्वच्छया सितया तथा ।
एकमेकं पुटं दद्यादभ्रस्यैवं मृतिर्भवेत् ॥ १५८ ॥
सर्वरोगहरं व्योम जायते योगवाहकम् ।
कामिनीमददर्पघ्नं शस्तं पुंस्त्वोपघातिनाम् ।
वृष्यमायुष्करं शुक्रवृद्धिसन्तानकारकम् ॥ १५९ ॥

अन्यप्रकारेणाभ्रमारणामाह धान्येति—शोधितं धान्याभ्रकं समादाय=गृहीत्वा मुस्ताक्काथेन खल्वे मसृणं मर्दयित्वा चक्रिकां गोलकान् वा विधाय चिक्कणकाष्ठपट्टिकाया मातपे शोषयित्वा साय मुपलै गजपुटखातस्याऽर्धं पूरयित्वा तत्र रुद्धमुखामभ्रचक्रिका पूर्णां स्थालीं स्थापयित्वा तदुपरि शेषान् वन्योपलान्पूरयेत्। ततोऽग्निं दद्यात् निर्धूमे चाग्नौ गजपुटमुखं भस्मना सर्वत आच्छादयेत्ताप-

निरोधाय। स्वाङ्गशीते च शनैः स्थालीमुद्घाट्य चक्रिकां पुनर्मुस्ता-क्वाथेन मर्दयित्वा पूर्ववच्चक्रिकाविधानपुटनादिस्वाङ्गशीतान्तं कर्म कुर्यादित्येष एव क्रमः सर्वत्रपुटदाने विधेयः। कासमर्दः=कसौंदी इति, नागवल्ली=पान इति, सूर्यक्षीरैः=अर्कक्षीरैः, वटजटा प्रसिद्धा, मुशली=तालमूली, गोक्षुरपञ्चाङ्गाभावे बीजकषायेण मर्दनम्। वानरी=शूकशिम्बी, मोचकन्दः=कदलीकन्दः, कोकिलाक्षकः=तालमखाना इति; लोध्रकः=पठानी लोध इति वणिग्द्रव्यम्। मुस्तादिलोध्रान्तैर्द्वादशद्रव्यैः प्रत्येकं पुटत्रयम। क्षीरादि सितान्तैः पञ्चभिःप्रत्येकमेकवारपुटनम्, इत्येकचत्वारिंशत्पुटि अभ्रम्। मृतिरिति=निश्चन्द्रकं सुसूक्ष्मं च लोचनाञ्जनसन्निभम्। तदातु मृतमित्युक्तमभ्रकम्। अरुणवर्णञ्चेत्यपि बोध्यम्। सचन्द्रं च विषवज्ज्ञेयम। आ.वे. प्र.४-१७। योगवाहकम्=तत्तदनुपानयोगेनतत्तद्गुणकरम्। पुंस्त्वोपघातिनां=क्लीबत्वमापन्नानां न तु सहज क्लीबानाम्। वृष्यम्=वृषाय कामुकाय हितम्, आयुष्करं=आयुर्वर्धकम्, शुक्रवृद्धिसन्तानकारकम्=शुक्रवर्धनं तद्वारा सन्तानोत्पादकं च। वन्योपलानामभावे गौणत्वेन गृहोपलाङ्गार विद्युत्तापेनापि पुटनं भवतु नाम। मा. ३-१ र.॥ १५४-१५६॥

धान्याभ्रक को लेकर नागरमोथे के क्वाथ से एक दिन घोट फुट दे। ऐसे तीन बार पुट दे। इसी प्रकार पुनर्नवा, कसौंदी, पान, आक का दूध, बड़ की दाढ़ी का क्वाथ, मूसली का क्वाथ, गोखरू का क्वाथ, कैंच के बीजों का काढ़ा, केले के कन्द का रस, तालमखाने का रस, पठानीलोध का क्वाथ—इनकी क्रम से ३-३ पुट दे।

फिर गाय के दूध, दही, घी, मधु, मिश्री की १—१ पुट दे। इस प्रकार से अभ्रक मर जाता है। यह अभ्रकभस्म सब रोगों को हरने वाली, योगवाही, स्त्रियों के मद को नाश करने वाली, नपुंसकों को पुरुषत्व देने वाली, वृष्य, आयुवर्द्धक, वीर्य बढ़ाने वाली तथा सन्तान देने वाली है ॥ १५४—१५९ ॥

अथ मारकवृन्दम्—

तण्डुलीयकबृहती–नागवल्लीतगरपुनर्नवाश्च ।
हिलमोचिका मण्डूकपर्णी तिक्तिकाऽऽखुपर्णिका ।
मदनार्काद्रं पालंक्याप्तुतमातृकादिः सुधोभिरुदितम् ॥१६०॥

अभ्रमारकगणे तण्डुलीयकः=सर्वविधोऽपि मारिषः चौलाई इति, बृहती=कण्टकारी, तगरं=पिण्डीतगरम्, हिलमोचिका= स्वनामख्यातोत्तमशाकविशेषे हिञ्चे शाक इति वङ्गे (वै. श. सि.) मण्डूकपर्णी ब्राह्मीभेदः, तिक्तिका=काकमाची तिक्तपटोली वा। आखुपर्णिका=मूषाकर्णी, मदनो=धुस्तूरो मदनफलं वा अन्याभ्रमारकगणे उभयोः पाठदर्शनात्, अर्कार्द्रके प्रसिद्धे। अत्र गणे र. इ. चि पाठे पलाशो दृश्यते स विचारणीयः। पालङ्क्या इति पाठस्तूचितः, लक्षसूतमात्रिका=शतावरी स्यात्। सूतमात्रिका पाठे सूतमात्रिका इन्द्रवारुणीति मणिना व्याख्याता। आदि-पदात् रसकामधेनुपरिगणिता—आयुर्वेदप्रकाशीय सहस्रपुटि-अभ्रकस्यपरिगणिताश्च ज्ञेयाः ॥ १६० ॥

चौलाई, बड़ी कटेरी, पान, पिण्डतगर, पुनर्नवा, हिलमोचिका, मण्डूकपर्णी, काकमाची, मूषाकर्णी, मैनफल, आक, अदरक और पालक, सूतमातृका यह विद्वानों ने अभ्रक का मारकगण कहा है। इन में से पृथक् वा सबसे पुटादि देने से अभ्रकमारण होता है ॥ १६० ॥

मतान्तरम्—

रम्भाद्भिरभ्रं लवणेन पिष्ट्वा चक्रीकृतं तद्दलमध्यवर्त्ति ।
दग्धेन्धनेषु व्यजनानिलेन स्नुह्यर्कमूलाम्बुपुटेन सिद्धम् ॥१६१

प्रकारान्तरेणाभ्रमारणं रम्भेति—रम्भाद्भिः=कदलीरसेन, लवणेनेति सहार्थे तृतीया तेन समानमानमभ्रं पिष्ट्वा चक्रीकृतं तद्दलमध्यवर्त्ति इति तत्पदेन सापेक्षत्वेऽपि रम्भाशब्द आकृष्यते, तद्दलं=रम्भापत्रं तन्मध्यवर्त्तिरम्भापत्रेण सर्वतो वेष्टयित्वेत्यर्थः। दग्धेन्धनेषु=कोकिलाङ्गारेषु व्यजनानिलेन=व्यजनकृतवायुना पुटेदिति शेषः। तदनु स्नुह्यर्कमूलाम्बुपुटेन स्नुही=थूहर इति, अर्को विदितः, तयोर्मूलस्वरसेन पुटेत्। इति त्रिपुटि-अभ्रम। रम्भादिनेति पाठे रम्भादिगणस्यात्राऽदृष्टत्वा त्पूर्वोक्तः (१५२) कदल्यादिगणो ज्ञेयः। तद्दलशब्दस्वारस्यात्तु रम्भाद्भिरित्येव पाठः प्रतिभाति। तद्दलेत्यत्र टङ्कणेति पाठान्तरम् ॥ १६१ ॥

अभ्रक में कुछ सेंधानमक मिला केले की जड़ के रस से पीस टिकियां बना सुखा ले। पश्चात केले के पत्तों में लपेट अंगारों पर रख पंखे से वायु देता जाय। इसके बाद थोहर की जड़ के रस

और आक की जड़ के रस से घोट पुटें दे तो अभ्रकभस्म सिद्ध होता है ॥ १६१ ॥

मतान्तरम्—

धन्याभ्रकस्य भागैकं भागौ द्वौ टंगणस्य च ।
पिष्ट्वा तदन्धमूषायां रुध्वा तीव्राग्निना पचेत्
स्वभावशीतलं चूर्णं सर्वयोगेषु योजयेत् ॥ १६२ ॥

अन्यच्चाह धान्याभ्रेति—अन्धमूषायां ६० श्लो. टी. व्याख्या-तान्धमूषायां तीव्राग्निना = खराग्निना, स्वभावशीतलं = स्वाङ्गशीतम् । इत्येकपुटि-अभ्रम् । पुटितमनेन प्रकारेणाभ्रं कठिन-तरं भवति ॥१६२॥

धान्याभ्रक एक भाग, सुहागा दो भाग; दोनों को पीस अन्ध-मूषा में बन्द कर तीव्र अग्नि से पकावे । स्वांगशीतल होने पर चूर्ण को सब योगों में प्रयुक्त करे । इस प्रकार बनाने पर अभ्रक कांच के सदृश हो जाता है ॥ १६२ ॥

मतान्तरम्—

धान्याभ्रकं दृढं मद्यं मर्कक्षीरैर्दिनावधि ।
वेष्टयेदर्कपत्रेण चक्राकारन्तु कारयेत् ॥ १६३ ॥
कुञ्जराख्ये पुटे दग्ध्वा सप्तवारान् पुनः पुनः ।
ततो वटजटाक्वाथैस्तद्वद् देयं पुटत्रयम् ।
म्रियते नात्र सन्देहः सर्वयोगेषु योजयेत् ॥ १६४ ॥

दशपुटि-अभ्रमाह धान्येति—कुञ्जराख्ये पुटे = गजपुटे (पारद ५६ श्लो.) अभ्रमेकं दिनमर्कक्षीरेण मर्दयित्वा चक्रिकां शोषयित्वा-

अर्कपत्रेणावेष्ट्य कुमुद्यां पूरयित्वा तन्मुखसन्धिरोधं च विधाय गजपुटे पुटेत । वटजटाक्वाथपुटदाने वटपत्रैरावेष्टयेत् सर्व-पुटेषु ॥ १६३-१६४ ॥

धान्याभ्रक को आक के दूध से अभाव में मदार की जड़ के रस से एक दिन तक दृढ़ता से मर्दन करे और टिकियां बनाकर सुखा ले पश्चात् आक के पत्तों में लपेट दे। फिर गजपुट में फूंक दे। इसी प्रकार आक के दूध में घोट कर सात पुट देवे। अन्त में बड़ की जटा के काढ़े में घोट बड़ के ही पत्तों में लपेट कर तीन पुटें देवे। इससे अभ्रक की भस्म हो जाती है–इसमें संदेह नहीं। इस भस्म को सब योगों में डालें॥ १६२—१६४॥

मतान्तरम्—

दुग्धत्रयं कुमार्यम्बु गंगापुत्रं नृमूत्रकम्।
वढशुंगमजारक्तमेभिरभ्रं विमर्दयेत् ॥ १६५ ॥
शतधा पुटितं भस्म जायते पद्मरागवत्।
निश्चन्द्रकं भवेद् व्योम शुद्धदेहे रसायनम् ॥ १६६॥

शतपुटि-अभ्रविधानमाह—दुग्धत्रयमिति दुग्धत्रयं=वटार्को-दुम्बरोद्भवमिति र.का. घे.। गोजावीनां दुग्धमिति जीवानन्दटीका। अभ्रमारणप्रकरणे—उदुम्बरस्थाने स्नुहीदुग्धं सूचितम्। आयुर्वेद-प्रकाशेऽपि-अर्कवटस्नुहुस्डदुग्धान्येव परिगणितानि। कुमार्य्यम्बु= घृतकुमारीरसम, गङ्गापुत्रं†=गाङ्गेयापरपर्य्यायो मुस्तको न

† गजमूत्रमिति क्वचित्पाठः।

नागबला र. का. धेनूका । नृमूत्रकं=नरमूत्रम्, वटशुङ्गं=वट-कोमलाङ्कुरम् । एभिर्यथायथं शतधा=शतवारं पुटितम् । प्रथम-चतुष्टयेन—प्रत्येकं १३ पुटानि शेषैर्द्वादशेति ज्ञेयम् । भस्म, पद्म-रागवत्=पद्मरागतुल्यं रक्तमित्यर्थः, निश्चन्द्रकं=चन्द्रिकाहीनम् । शुद्धदेहे =पञ्चकर्मादिभिः । अत्र—

शतादिस्तु सहस्रान्तः पुटोदेयो रसायने ।
दशादिस्तु शतान्तस्याद्व्याधिनाशनकर्मणि ।
सहस्रपुटपक्षे तु भावनापुटनं भवेत् ।
मर्दनन्तु तथा न स्यादिति प्राचां हि सम्मतम् ॥

( आ. वे. प्र. ४-१६-२० )

सहस्रपुटविधाने भावनां दत्वा पुटनं विधेयम् । न मर्दनम् । मसृणत्वेन मर्दनस्यानावश्यकत्वात् । सहस्रपुटनप्रकारस्तु—आ. वे. प्र. शे ज्ञेयः ।

अरुणभस्मप्रकारस्तु—शाल्मलीत्वग्रसेन त्रिः पुटनम् । तथा कूर्माद्रौ सरयूरामगंगयोर्मध्यवर्तिनदीनां मध्यस्थितशिलासु तदा-लिङ्गनप्रसरणशीला अजानां प्रिया श्वेतदुग्धा वेडुलीतिख्याता या लता तस्याः स्वरसेन त्रिःपुटनादरुणवर्णं नयनाह्लादकरं भव-त्यभ्रभस्मेत्यस्मज्जेष्ठभ्रातृस्वर्गीयश्रीगंगादत्तपन्तानामनुभवः । यद्वा नागबला, भद्रमुस्ता, वटदुग्धं जटाक्वाथो वा मञ्जिष्ठा हरिद्रा, एतैः क्रमेण पुटनादरुणं भस्म भवति ।

अमृतीकरणन्तु—त्रिफलोत्थकषायस्य पलान्यादाय षोडश ।
गोघृतस्य पलान्यष्टौ मृताभ्रस्य पलान्दश ।

एकीकृत्य लौहपात्रे पाचयेन्मृदुवह्निना ।
द्रवे जीर्णे समादाय सर्वरोगेषु योजयेत् । ४४-४५ ।
तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् ।
घृते जीर्णे ततश्चूर्णं सर्वकार्येषु योजयेत् ।। ४७ ।।
इति चामृतीकरणम् ।

अभ्रसेवने वर्ज्यानि तु—

क्षाराम्लं द्विदलं कोलं कर्कटीकारवेल्लकम् ।
वृन्ताकं च करीरं च तैलं चाभ्रे विवर्जयेत् ।४८। इतितत्रैव ।

पुंस्त्वकृद्वयस्थापनाऽतिक्षुत्कृदभ्रसत्वप्रकारस्तु-आकरेभ्योज्ञेयः ।
तथा द्रुतिप्रकारोऽपि ।।१६५-१६६।।

बड़, सेहुण्ड, आंक इनका दूध; घीक्वार का रस, नागरमोथा, पुरुष का मूत्र, बड़ के अंकुर, बकरी का खून; इन सबसे अभ्र को घोटें। घोट कर सौ पुटें दे तो पद्मराग के समान लाल रंग को निश्चन्द्र भस्म होता है। वमन विरेचन आदि से शुद्ध देह में निश्चन्द्र अभ्रकभस्म का सेवन रसायन है ।। १६५-१६६ ।।

**निश्चन्द्रमारितं व्योम रूपं वीर्य्यं दृढां तनुम् ।।**
**कुरुते नाशयेन्मृत्युं जरां रोगकदम्बकम् ।। १६७ ।।**

[इत्यभ्रमारणम्]

रौक्ष्यं सौक्ष्म्यं जलप्लावशोणवर्णसमुद्भवः ।
विचित्रगुणदीप्तिश्च जायते बहुभिः पुटैः । र. इ. चू. १०-३६।

इत्थं मारिताभ्रगुणमाह निश्चन्द्रेति—

कचकचिति न दन्ताग्रे कुर्वन्ति समानि केतकीरजसा।
योज्यानि हि प्रयोगे रसोपरस लोह चूर्णानि।

र. इ. चि. अ. ८-६।

इत्यपि ज्ञेयम्। रूपम् = सौन्दर्यम्, दृढां = कठिनाम्, तनुं = कायम्, स्त्रियांमूर्त्तिस्तनु स्तनूः। अ.। मृत्युम् = अल्पमृत्युम, जरां = वृद्धत्वम्। कदम्बकंकदम्बमेव कदम्बकं स्वार्थे कः समूहम्।

लक्ष्मीविलासकाभ्रकं शृङ्गाराभ्रकं, नित्यनाथाभ्रकापरपर्यायो कामेश्वरमोदकश्च (र. र. स. अ. २७-१२४) एतेऽभ्रस्य महायोगाः। कल्पाश्चाकरेभ्यो ज्ञेयाः।

गौरीतेजः परममृतं वातपित्तक्षयघ्नं
प्रज्ञाबोधि प्रशमितजरं वृष्यमायुष्यमग्र्यम्।
बल्यं स्निग्धं रुचिदमकफं दीपनं शीतवीर्यं
तत्तद्योगे सकलगदहृद्व्योम सूतेन्द्रबन्धि।

(र. इ. चू. १०-२)

वेल्लव्यौषसमान्वितंघृतयुतं वल्लोन्मितं सेवितं,
दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकोष्ठामयान्।
ऊर्ध्वश्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं,
मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान्।

(इति तत्रैव १०-५२)

योगरत्नाकरतोऽभ्रानुपानानि—

अभ्रकं च निशायुक्तं पिप्पलीमधुना सह।
विंशति च प्रमेहानां नाशयेन्नात्र संशयः॥ १॥

अभ्रकं हेमसंयुक्तं क्षयरोगविनाशनम् ।
रौप्यहेमाभ्रकं चैव धातुवृद्धिकरं परम् ॥ २ ॥
अभ्रकं च हरीतक्या गुडेन सह योजितम् ।
एलाशर्करया युक्तं रक्तपित्तविनाशनम् ॥ ३ ॥
त्रिकटु त्रिफलां चैव चातुर्जातं सशर्करम् ।
मधुना लेहयेत्प्रातः क्षयार्शःपाण्डुनाशनम् ॥ ४ ॥
गुडूचीसत्वखण्डाभ्यां मिश्रितं मेहनाशनम् ।
एलागोक्षुरभूधात्री सिता गव्येन मिश्रितम् ॥ ५ ॥
प्रातः संसेवनान्नित्यं मेहकृच्छ्रनिवारणम् ।
पिप्पलीमधुसंयुक्तं भ्रमजीर्णज्वरापहम् ॥ ६ ॥
मधुत्रिफलया युक्तं दृष्टिपुष्टिकरं मतम् ।
मूर्वासत्वयुतं व्योम व्रणानां च विनाशनम् ॥ ७ ॥
गोक्षीरक्षीरकन्दाभ्यां बलवृद्धिकरं परम् ।
भल्लातकयुतं व्योम त्वर्शोदोषनिवारणम् ॥ ८ ॥
नागरं पौष्करं भार्गी गगनं मधुना सह ।
अश्वगन्धायुतं खादेद्वातव्याधिनिवारणम् ॥ ९ ॥
चातुर्जातं सिता चाभ्रं पित्तरोगनिवारणम् ।
कट्फलं पिप्पलीक्षौद्रं श्लेष्मरोग निवारणम् ॥ १० ॥
सर्वक्षारयुतं चाभ्रमग्निवृद्धिकरं परम् ।
मूत्राघातं मूत्रकृच्छ्रमश्मरीमपिनाशयेत् ॥ ११ ॥
विजयारससंयुक्तं शुक्रस्तम्भकरं परम् ।
लवङ्गमधुसंयुक्तं धातुवृद्धिकरं परम् ॥ १२ ॥

गोक्षीरशर्करायुक्तं पित्तरोगविनाशनम् ।
अभ्रकं विधिसंयुक्तं पथ्ययोगेन योजितम् ॥ १३ ॥
वलीपलित नाशः स्याज्जीवेच्च शरदां शतम् ।

इत एव रसतरङ्गिण्यां प्रायोऽनूदितान्य अनुपानानि दृश्यन्ते । अन्त्रवृत्तये च लशुनाद्यनुपानेन योज्यम् ।

र.हृ. ४. । आ. वे. प्र. ४. । आ.कं. ७-१५८ तथा-क्रि. ७-२८. । रससंकेतकलिका श्लो. ५८ । र. र. स. २ । र. अ. प. ६ । र. इ. चू. १० । र. का. घे. धातुसंग्रहपादे ।

र. र. आ. उ. ३-६३ । लोह सर्वस्वे श्लो. ७१ । यो. र. आ. उपधातुप्रकरणे । र. प्र. सु. ५-३ ।

र. इ. चि. अ. ४ । र. प. श्लो. ४० । र. त. अ. १० । वसवराजीये कश्चिदितोपि अनुपाने विशेषस्तत एव ज्ञेयः । उपरिनिर्दिष्ट ग्रन्थप्रकरणेभ्योऽभ्रविषये विशेषो ज्ञातव्यः ॥ १६७ ॥

॥ इत्यानन्दीटीकायामभ्राधिकारः ॥

निश्चन्द्र अभ्रकभस्म के सेवन से रूप और वीर्य्य की वृद्धि तथा शरीर की दृढता होती है। यह अकाल मृत्यु, बुढापा तथा अन्य रोगों के समुदाय को नष्ट करता है। ॥ १६७ ॥

अथ हरितालपर्य्यायास्तद्भेदाश्च—

**हरितालं तालमालं मतं शैलूषभूषणम् ।**
**पिञ्जरं रोमहरणं तालकं पीतमित्यपि ॥**
**तालकं पटलं पिण्डं द्विधा तत्राद्यमुत्तमम् ॥ १६८ ॥**

अथ तालवर्णनं हरितालमिति—तालम्, आलं मालमिति

संज्ञात्रयम्। शैलूषभूषणम्=शैलूषो नटस्तस्य भूषणं भूषाजनकम्। रोमहरणम्=तालसुधालेपेन हि रोमभूमी रोमजननेऽसमर्था जायते। पीतं=पीतवर्णत्वात्पीतमिति। तत्र हरितालस्य पटल पिण्डमिति द्वौ भेदौ, तयोराद्यं पटलमुत्तमं धात्वन्तरशून्यत्वात्—

स्वर्णवर्णं गुरु स्निग्धं तनुपत्रं च भास्वरम्।
तत्पत्रतालकं प्रोक्तं बहुपत्रं रसायनम्। र. र. स. ३-६६।

इदमीरानतः-समायाति। वंशपत्री, वर्की, बगदादी वा हरि-ताल शब्देन लभ्यते। पिण्डाख्ये मृतिकादियोगादनुत्तमत्वम्।

तत्तु—

निष्पत्रं पिण्ड सदृशं स्वल्पपत्रं तथा गुरु।
स्त्री पुष्पहरणार्थं तु गुणाल्पं पिण्डतालकम्

अयञ्चोत्तरापथे हिमालयप्रत्यन्तपर्वतेषु भवति॥

वस्तुतस्तु—गौरीपाषाणो हरितालं मनःशिला चेत्येतत्त्रयं सोमलयोनि, तथाहि—सोमलपरमाणूनां भागद्वयं प्राणवायो Oxygen भागत्रयं मिलितं ($As_2 O_3$) गौरीपाषाणो भवति। सोमलपरमाणूनां भागद्वयं गन्धकपरमाणूनां भागत्रयं मिलितं ($As_2 S_3$) हरितालं भवति। एवं सोमलपरमाणूनां भागद्वयं गन्धपरमाणूनां भागद्वयं मिलितं ($As_2 S_2$) मनःशिला भवति। अतएव आ. वे. प्र.—

तालकस्यैव भेदोस्ति मनोह्वा च तदन्तरम्।
तालकं त्वतिपीतं स्याद्भवेद्रक्ता मनः शिला॥

मालमत्र तयेति, पिञ्जकं पिञ्जरमिति पाठान्तरे॥ १६॥

हरिताल, ताल, आल, शैलूषभूषण, पिञ्जर, रोमहरण, तालक, पीत, ये नाम हड़ताल के हैं। हड़ताल दो प्रकार का होता है एक "पिण्ड" दूसरा "पटल"। इनमें से पटल अच्छा माना है ॥ १६८ ॥

अशुद्धतालमायुर्घ्नं कफमारुतमेहकृत् ।
तापस्फोटांगसंकोचान् कुरुते तेन शोधयेत् ॥१६९॥

अशुद्धस्य रोगकरत्वमाह—अशुद्धमिति—आयुर्घ्नं = शरीरेन्द्रिय सत्वात्मसंयोगनाशकम्। तापो = दाहो ज्वरश्च, स्फोटः = स्फुटनं विदारः। कथमेतान्करोतीत्यूह्यम् ॥ १६९ ॥

अशुद्ध हड़ताल आयु को कम करता है, कफ वायु तथा प्रमेह का कारण होता है। ताप फोड़े करता तथा अंगों को संकोच करता है। इस कारण इसे शुद्ध करे ॥ १६९ ॥

अथ हरितालशोधनम्—

शुद्धं स्यात् तालकं स्विन्नं कूष्माण्डसलिले ततः ।
चूर्णोदके पृथक् तैले तस्मिन् पूते न दोषकृत् ॥१७०॥

अतः शोधन माह—शुद्धमिति प्रथमं तालकं खण्डशो (तण्डुल प्रमाणान्-खण्डान् कृत्वा) विधाय चतुर्गुणवस्त्रकृत-पोट्टली मध्ये निधाय। पूते = वस्त्रगालिते कूष्माण्डसलिले = कूष्माण्डफलरसे मन्दाग्निना दोलायन्त्रे (१२७) स्विन्नं स्वेदितम्। एकप्रहरमानमित्यपि ज्ञेयम्। ततः कूष्माण्डजलस्वेदनानन्तरं चूर्णोदके = सुधाजले पूर्ववत्स्वेदनीयम्। चूर्णोदकविधानन्तु-

पलमेकं सुधाचूर्णं प्रस्थमिते जले निर्वाप्यालोड्य तथैव स्थापयेत। कञ्चित्कालानन्तरमुपरिस्थं स्वच्छं जलं नयेत्। इदमेव चूर्णोदकं नाम। तैले=तिलतैले ॥ १७० ॥

पेठे के रस में हड़ताल को दोलायन्त्र द्वारा १ प्रहर स्वेदन करे। फिर चूने के पानी में स्वेदन करे। फिर तिलतैल में स्वेदन करे। इस प्रकार से शुद्ध हड़ताल दोषकारक नहीं होता।

तैलांश को उष्ण जल से धोकर निकाल दे ॥१७०॥

अन्यच्च—

तालकं कणशः कृत्वा दशांशेन च टंगणम्।
जम्बीरोत्थैर्द्रवैः क्षाल्यं काञ्जिकैः क्षालयेत् पुनः॥१७१॥
वस्त्रे चतुर्गुणे बध्वा दोलायन्त्रे दिनं पचेत्।
सचूर्णेनारनालेन दिनं कूष्माण्डजै रसैः।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात्।१७२।

प्रकारन्तरेण तालशोधनम्—तालकमित्यादिना—तालकं=हरितालम्, कणशः=तण्डुलाकृति कृत्वा दशांशेन=तालकदशमभागेन, टङ्कणं दत्वा कञ्चित्कालं जम्बीरोत्थद्रवैः सह तथैव स्थापयेत्। ततः क्षाल्यं=स्वच्छजलेन धावनीयम्। एवं पुनर्दशांश टङ्कणं दत्वा काञ्जिकैस्सह कञ्चित्कालं स्थापयेत ततः स्वच्छजलेन क्षालयेत्। तदनु शोषयित्वा चतुर्गुणे वस्त्रे पोटलीं बध्वा सचूर्णेन=तालकदशांशसुधाचूर्णयुतेन। शम्बूकशुक्त्योर्भस्मकृतचूर्णमिति जी. टीका। आरनालेन=काञ्जिकेन, एवं कुष्माण्डजरसेन

दिनं पचेत् । वा=अथवा, शाल्मलीतोयै.=शाल्मलीमूलस्वरसैस्त्वक्क्वाथैर्वा तालकं स्वेद्यम् । अत्रापि दिनमिति ज्ञेयम् ॥ १७१-१७२॥

हड़ताल का जौकुट चूर्ण दस भाग, सुहागा एक भाग, दोनों को मिलाकर जम्बीरी नीम्बू के रस से धोवे, फिर कांजी से धोवे। पश्चात् चार तह किये हुए वस्त्र की पोटली में हड़ताल को बांध दे। पुनः कांजी लेकर उसमें थोड़ा सा चूना डाल कर घोल दें और उसमें पोटली को लटका कर दोलायन्त्र की विधि से दिन भर स्वेदन करे। पेठे के रस से दिन भर स्वेदन करे, अथवा सेमल की जड़ के रस से दोलायन्त्र में स्वेदन करे। इस प्रकार हड़ताल शुद्ध हो जाता है ॥ १७१–१७२ ॥

अन्यच्च

तालकं पोट्टले बध्वा सचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैकं ततः कूष्माण्डजे रसे ॥१७३॥
तिलतैले पचेद् यामं यामं तत् त्रैफले जले ।
दोलायन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥१७४॥

॥ इति शोधनम् ॥

पुनः प्रकारान्तरेण शोधनम्—तालकमिति पूर्ववत्। काञ्जिके चूर्णं दत्वा यामैकं स्वेदयेत्। एवं कूष्माण्डरसे तिलतैले त्रिफला जले प्रत्येकमेकं यामं पाच्यम्। कूष्माण्डरसादौ चूर्णं न देयम्। ॥ १७३-१७४ ॥

हड़ताल को पोटली में बांध चूना मिली कांजी में दोलायन्त्र

से एक पहर तक पकावे। फिर पेठे के रस में फिर तिलतैल में पश्चात् त्रिफला के काढ़े में इस प्रकार से दोलायन्त्र में चार पहर पका चुकने के पीछे हड़ताल शुद्ध हो जाता है। मात्रा–¼ से ½ रत्ती।

॥ १७३–१७४॥

अथ हरितालमारणम्

तालकं कणशः कृत्वा सुशुद्धं हण्डिकान्तरे।
चूर्णोदकेन संपिष्टमपामार्गजटोद्भवैः ॥१७५॥
क्षारोदकैश्च संपिष्टमूर्ध्वाधो यावशूकजम्।
चूर्णं दत्वा निरुध्याथ कूष्माण्डैश्च प्रपूरयेत्॥१७६॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥१७७॥

तालस्य मारणं—तालकमिति-कणशः कृतं शुद्धं तालं चूर्णोदकेन, अपामार्गमूलक्षारोदकेन च क्रमशः पिष्टवा चक्रिकां विधायाऽतपे शोषयित्वा हण्डिकान्तरे=हण्डिकातलदेशेऽङ्गुल-मानं यावशूकजं=यवक्षारं प्रसार्य तत्र चक्रिकां संस्थाप्य तां यव-क्षारेणाच्छादयेत्, तच्च शरावेण निरुध्य। तदुपरि कूष्माण्डजैः= कूष्माण्डखण्डैः प्रपूरयेदागलमिति शेषः। पुनः मुखं निरुध्य चतुर्यामं क्रमाग्निना=मन्दमध्यतीव्राग्निना पचेत्। कुष्ठादौ–आदिपदात् रक्तविकृतिजन्यरोगेषु पञ्चतिक्तक्वाथानुपानेन जीर्णज्वरादिषु च देयम् ॥ १७५-१७७ ॥

विशुद्ध हड़ताल के छोटे छोटे टुकड़े कर के चूने के जल से

पीसे। शुष्क होने पर अपामार्ग की जड़ से बने क्षार के जल से पीस टिकिया बना ले। फिर एक हांडी में नीचे यवक्षार का चूर्ण बिछा हड़ताल की टिकिया रखे। ऊपर पुनः यवक्षार का बारीक चूर्ण दबा दबा कर डाले। इसके ऊपर अधोमुख शराब देकर सन्धिनिरोध करे। हांडी के अवशिष्ट भाग में पेठे का श्लक्ष्णपिष्ट कल्क भर हांडी का मुख भी बन्द कर दे। नीचे क्रमशः ४ प्रहर की मन्द, मध्य और तीव्र आग जलावे। स्वाग-शीतल होने पर श्वेत रंग की हड़ताल भस्म निकाल कुष्ठ आदि रोगों में प्रयुक्त करे॥ १७५–१७७॥

हरितालं कटु स्निग्धं कषायञ्च विसर्पनुत्।
तालकं हरते रोगान् कुष्ठमृत्युज्वरादिकान्।
संशुद्धं कान्तिवीर्य्यौजः कुरुते मृत्युनाशनम्॥१७८॥

हरितालमिति मृततालस्य गुणाः। विसर्पनुत् बाह्यप्रयोगेणाभ्यन्तरप्रयोगेण च। कान्ति वीर्यौजइत्यत्र कान्तिवीर्ये चेति पाठान्तरम्।

द्वितीयं मृत्युनाशनपदं ग्रन्थान्तरसंग्रहीतवाक्यादिति न पौनरुक्तिः।

गुडूच्यादिकषायेण गदानेतान् व्यपोहति।
सोपद्रवं वातरक्तं कुष्ठान्यष्टादशापि च॥
फिरङ्गदेशजं जन्तोर्हन्ति रोगं सुदुस्तरम्।
विसर्पमण्डलं कण्डूं पामां विस्फोटकं तथा॥

वातरक्तकृतान रोगानन्यानपि विनाशयेत्।
एतद्भेषजसेवी तु लवणाम्लौ विवर्जयेत् ॥
तथा कटुरसं वह्नि मातपं दूरतस्त्यजेत।
लवणं यः परित्यक्तुं न शक्नोति कथं च न ॥
स तु सैन्धवमश्नीयान्मधुरोपरसो हि सः।

इति भावप्रकाशीयं हरितालभस्म बहुभिर्बहुशोऽनुभूतमस्ति। आ. वे. प्र. ५-१५। एते गुणा पत्राख्यं तालकमित्यादिना भावप्रकाशोक्ततालभस्मनो ज्ञेयाः। आयुर्वेदप्रकाशे तु सिद्धमतेन तालकभस्मकरणस्य विस्तरोऽस्ति स च विस्तरभिया नात्रोद्धृतः। अथ र. र. समुच्चयात् तालमारणस्य सरलप्रकारोत्र दीयते।

मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥
उपलैर्दशभिर्देयं पुटं रुध्वाऽथ पेषयेत्।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ।३-७४॥१७८॥

शुद्ध हड़ताल कटु, स्निग्ध, कसैला होता है, विसर्प रोग को दूर करता है, कुष्ठ अकालमृत्यु तथा ज्वरादि को हटाता है। कान्ति वीर्य्य एवं ओज को बढ़ाता है ॥१७८॥

मतान्तरम्—

अम्लरोलीजलैर्भाव्यं तालं द्वादशयामकम्।
तथैव निम्बुनीरेण ततश्चूर्णोदकेन च ॥ १७६ ॥
प्रक्षाल्य शाल्मलीक्षारैर्द्विगुणैः खातमध्यगम्।
विधाय कवचीयन्त्रं बालुकाभिः प्रपूरयेत् ॥१८०॥

द्वादशप्रहरं पक्त्वा स्वांगशीतञ्च चूर्णयेत् ।
खादयेत् रक्तिकामेकां कुष्ठश्लीपदशान्तये ॥१८१॥

पुनरन्यप्रकारेण तालकमारणम्—अम्लरोलीति—

तालस्य सूक्ष्मपत्राणि कणान् वा कृत्वा अम्लरोलीरसेन निम्बुरसेन चूर्णोदकेन च प्रत्येकं द्वादशप्रहरं भावयित्वा काञ्जिकेन प्रक्षाल्य, तालकद्विगुणशाल्मलीक्षारेण शरावे खातं विधाय तत्र तालं दत्त्वा शाल्मली क्षारेणैवाच्छाद्य सम्पुटं मृत्कर्पटैरावेष्ट्य कवचीयन्त्रे कृत्वा वालुकाभिः प्रपूर्य द्वादशप्रहरं क्रमाग्निना पाकं विधाय स्वाङ्गशीतं रक्तिकामात्रया योज्यम् । अम्लरोली=चांगेरी ॥ १७६-१८२ ॥

हड़ताल को चांगेरी के रस से बारह पहर भावना दे । फिर नीबू के रस से १२ पहर भावना दे । चूने के पानी से हड़ताल को धो दुगुना सेमल का क्षार मिला काचकूपी में डाल दे । उस काचकूपी पर कपड़मिट्टी कर कवचीयन्त्र को एक बड़ी हांडी में रख चारों ओर से बालू भर दे और उसके नीचे बारह पहर आग जलावे । स्वांगशीतल होने पर निकाल कर चूर्ण कर ले । इसकी एक रत्ती की मात्रा खावे तो कुष्ठ तथा श्लीपद रोग शान्त होता है । मात्रा ½ रत्ती ॥ १७६-१८१ ॥

अथ रसमाणिक्यम्—

तालकं वंशपत्राख्यं कूष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वाऽपि दध्ना चाम्लेन वा पुनः॥१८२

शोधयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृति ।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥१८३॥
बदरीपल्लवोत्थेन कल्केन लेपयेद्भिषक् ।
अरुणाभमधःपात्रं तावज्ज्वाला प्रदीयते ॥१८४॥
स्वांगशीतं समुद्धृत्य माणिक्याभं भवेद् ध्रुवम् ।
तद् रक्तिद्वितयं खादेद् घृतश्रामरमर्द्दितम् ॥१८५॥
सम्पूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते ।
स्फुटितं गलितं यच्च वातरक्तं भगन्दरम् ॥१८६॥
नाडीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम् ।
नासाऽऽस्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान् ।
पुण्डरीकञ्च चर्माख्यं विस्फोटं मण्डलं तथा ॥१८७॥

तालक भस्मपरीक्षा—

तालं मृतं तदा ज्ञेयं वह्निस्थं धूमवर्जितम् ।
सधूमं न मृतं प्राहुर्वृद्धवैद्या इति स्थितिः । आ. वे. प्र. ५-त्र

तालकमित्यादिना-सिद्धफलं रसमाणिक्यमाह—वंशपत्राख्यं= पटलं तच्च पूर्वोक्तप्रकारेण शोधितं ज्ञेयम् । सप्तधा=सप्तवारं क्रियाप्रकारार्थे धाप्रत्ययः । त्रिधेति-त्रिवारान्नावरं सप्तवारान्नाधिकमिति ज्ञेयम । कूष्माण्डसलिले=सुपक्वपुराणकूष्माण्डफलस्वरसे, तच्च प्रतिवारं नूतनं देयम । दध्ना=अम्लदध्ना । अम्लेन= निम्बुकादिस्वरसेन । शोधयित्वेति-इदं पुनः शोधनं गुणवर्द्धना-

र्थम् । ततः काञ्जिकेन जलेन वा प्रक्षाल्य तण्डुलाकृति-तण्डुलमानं चूर्णयित्वा अभ्रपत्रान्तः शरावसम्पुटे कृत्वा वदरीपल्लवकल्केन सन्धिलेपनं ततश्चवहिः मृत्कर्पटेन वेष्टनं चुल्लिकायां निधाय—अधःपात्रतलं यावदरुणाभं वह्निज्वालया भवति तावदग्निः प्रदेयः। स्वाङ्गशीतं = चुल्लिकायामेव शीतम् । भ्रामरं = द्विरेफकृतं मधु। अद्यत्वेतु निर्मलाभ्रपत्रे हरितालकणान् कृत्वा-अभ्रपत्रेणैवाऽच्छाद्य कोकिलाग्नावल्पेनैव कालेन सम्पाद्यते रसमाणिक्यम् । एतस्यानुपानादिकं कुष्ठप्रकरणे व्याख्यास्यते । केचित्तु शरावसम्पुटं वालुकायन्त्रे कृत्वा रसमाणिक्यं सम्पादयन्ति । प्रतिश्याये प्रातःसायं मधुना प्रयुक्तं चमत्करोतीत्यस्मज्जेष्ठभ्रातृपद्मनाभपन्तानामनुभवः। अथ तालकसत्वपातनविधिः—लाक्षा राजी तिला शिग्रुष्टङ्कणं लवणं गुडम् । तालकार्धेन सम्मिश्र्य छिद्रमुष्यां निरोधयेत्। पुटेत्पातालयन्त्रेण सत्वं पतति निश्चितम् । अन्यच्च—

जेपालसत्वधातारिबीजमिश्रं चतालकम् ।

कूपीस्थं वालुकायन्त्रे सत्वं पतति यामतः ।। आ. वे. प्र. ५-३३-३४। इदं सत्वं शुद्धगौरीपाषाणमेव ज्ञेयम्। अथ तालविकारे—ससितंजीरकक्षोदं कुष्माण्डस्वरसं तु वा । अश्नीयात्तालविकृतौत्रिवारंत्वेकवासरे । र. त. ११-१०३। अथ कृत्रिमतालम्-सोमलस्य मरुद्भागान्तत्त्वभागान्गन्धकस्य च चूर्णयित्वा मन्दानलेन डमरुकयन्त्रे पचेत । स्वाङ्गशीते च विशुद्धं तालमाहरेत । ।। १८२-१८७।।

इत्यानन्दीटीकायां तालाधिकारः ।

शुद्ध वंशपत्र हड़ताल को पेठे के रस में सात अथवा तीन वार भावित कर खट्टे दही या किसी अम्ल से सात या तीन वार भावनायें दे उष्ण जल से धो सुखा कर चावलों के समान कण बना ले। फिर दो शरावों में इसे कुशल वैद्य रखे। इन शरावों की सन्धियों को बेर के पत्तोंसे पीसे हुए कल्कसे बन्द कर तब तक आग दे जब तक नीचे के पात्र का तल लाल रंग का नहीं हो जाता। स्वांगशीतल होने पर माणिक्य के समान रंगदार चमकते हुये हड़ताल को निकाल ले। इसे रसमाणिक्य कहते हैं। शिवजी की पूजा कर इसे दो रत्ती मात्रा में ले घी और शहद मिला खावे तो कुष्ठ रोग से छूट जाता है। फूटे तथा गले हुए वातरक्त, भगन्दर, नासूर, दुष्ट व्रण, उपदंश, विचर्चिका, नाक तथा मुंह के रोग, दारुण चतरोग, पुण्डरीक कुष्ठ, चम्बल, विस्फोट तथ मण्डल कुष्ठ को यह रसमाणिक्य दूर करता है॥१८२-१८७॥

अथ सपर्य्याय मनःशिलायाः शोधनादिकम्—

**मनःशिला च नैपाली शिलाह्वा नागजिह्विका।**

**मनोह्वा कुनटी गोणी करञ्जी करवीरिका।**

**मनोह्वा त्वौंड्रपुष्पाभा शस्यते सर्वकर्मसु॥१८८॥**

मनः शिलेति—मनोह्वान्तं नाम परिगणनम्। ओण्ड्रपुष्पाभेति—ओंड्रपुष्पं=जपापुष्पं (गुडहरफूल) तद्वदाभा कान्तिर्यस्येति विग्रहः। इषत्पीतरक्तेत्यर्थः। सा च त्रिधा श्यामाङ्गी कणवीरका खण्डा भेदात्–उत्तरोत्तरा श्रेष्ठा भूरिसत्ववत्वात् सत्वन्तु गौरीपाषाणमेव॥ १८८॥

मनःशिला, नैपाली, शिलाह्वा नागजिह्विका, मनोह्वा, कुनटी, गोणी, करञ्जी, करवीरिका, ये सब नाम मनसिल के हैं। मनसिल जवाकुसुम के समान लाल हो तो उसे उत्तम समझ सब कामों में बरतना चाहिये ॥ १८८ ॥

**मनःशिला मन्दबलं करोति, जन्तुं ध्रुवं शोधनमन्तरेण।**
**मलस्य बन्धं किलमूत्ररोधं सशर्करं कृच्छ्रगदं करोति॥१८९॥**

मतान्तरम्

**अश्मरीमूत्रहृद्रोगमशुद्धा कुरुते शिला।**
**मन्दाग्निं मलदुष्टिञ्च शुद्धा सर्वरुजापहा ॥१९०॥**

अशुद्धाया दोषानाह—मनःशिलेति-स्पष्टम् ॥ १८९-१९० ॥

अशुद्ध मनसिल मनुष्य के बल को मन्द करती है। मलबद्धता तथा शर्करा और मूत्रकृच्छ्र करती है ॥ १८९ ॥

अशुद्ध मनसिल से पथरी, मूत्ररोग, हृद्रोग, मन्दाग्नि तथा मलदुष्ट होता है और शुद्ध मनसिल सब रोगों को दूर करती है ॥ १९० ॥

**जयन्तीभृंगराजोत्थरक्तागस्त्यरसैः शिलाम्।**
**दोलायन्त्रे पचेद्यामं यामं छागस्य मूत्रके।**
**क्षालयेदारनालेन सर्वरोगेषु योजयेत् ॥ १९१ ॥**

शोधनमाह जयन्तीति—जयन्ती—भृङ्गराज—रक्तागस्त्यानां मिलितानां पृथग् वा रसेन दोलायन्त्रे, यामं=प्रहरमेकमेवं छाग मूत्रेऽपि तदनु आरनालेन=काञ्जिकेन क्षालयेत् ॥ १९१ ॥

मनसिल को जयन्ती, भृङ्गराज, लाल अगस्तिया, बकरी का

मूत्र इनमें एक २ दिन दोलायन्त्र में स्वेदन कर कांजी से धो सब रोगों में दें। उक्त औषधों में से एक से भी शुद्धि होती है ॥ १६१ ॥

मतान्तरम्—

**मातुलुंगरसैः पिष्टा जयानीरैर्मनःशिला ।**
**शृंगवेररसैर्वापि विशुध्यति मनःशिला ॥ १६२ ॥**

( इति मनःशिलाशुद्धिः )

प्रकारान्तरेण शोधनमाह मातुलुङ्गेति—मातुलुङ्गः=बिजौरा नीबू इति, पिष्टेति—आदिकर्मणिक्तः।

पृथक् तन्त्रान्तरीयश्लोकार्धाविमौ—अतोमनः शिलायाः पुनरुपादानम् । शेषंस्पष्टम् ॥ १६२ ॥

मनसिल को बिजौरा के रस से वा जयन्ती के रस से अथवा अदरक के रस से पीसें तो शुद्ध होती है ॥ १६२ ॥

**कटुः स्निग्धा शिला तिक्ता कफघ्नी लेखनी सरा ।**
**भूतावेशभयं हन्ति कासश्वासहरा शुभा ॥ १६३ ॥**

शोधिताया गुणानाह—कटुरिति-भूतावेशभयं भूताना मदृश्यजन्तूना मावेशस्य शरीरप्रवेशेन रोगविशेषस्यभयं हन्ति।

अथ प्रसङ्गान्मनःशिला सत्वपातनं रसतरङ्गिण्याः–११-१२६।

गुड़गुग्गुलुकिट्टाज्यैस्त्वष्टमांशेन वै पृथक् । शिलामूषागता कोष्ठ्यां ध्मातासत्वं विमुञ्चति । इति मनःशिला।

अथ गौरीपाषाणः (संखिया) सुभ्र ते तु फेनाश्म इति नाम

गौरीपाषाणकः पीतो विकटो हतचूर्णकः।
स्फटिकाभश्च शङ्खाभो हरिद्राभस्त्रयः स्मृताः।
पूर्वः पूर्वो गुणैः श्रेष्ठः—

अस्य शोधनम्—कारवल्लीफले क्षिपेत्।
स्वेदयेद्धण्डिकामध्ये शुद्धो भवति मूषकः।

सत्त्वपातनम्— तालवद्दाहयेत्सत्त्वं शुद्धं शुभ्रं प्रयोजयेत्॥

गुणाः— रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यकृत्।
र. र. स. ३-१२४-१२६।

आ. वे. प्र. शे. तु—श्वेत पीत भेदेन द्विविधस्यापि विषकृत्यकरत्वमुक्तम्। विशिष्टगुरुत्वम् ३.७। श्वेतवर्णः कठिनः पारदर्शको गन्धास्वादहीनश्चाकचक्ययुतः पिष्टश्चतण्डुलचूर्णवच्छुभ्रो भङ्गुरो जले न द्रवति ईषद्वा। उष्णजले तैले सुरायां च द्रवति, वह्नौ मृदूभूत्वा वाष्पायतेरसोन गन्धः। कृत्रिमो ऽप्ययं भवति। विषमात्रा तु रक्तिका सार्ध रक्तिका वा। गन्धास्वादहीनत्वाद्दुग्ध मिष्टान्नादियुतं प्रायः परप्राणनाशाय प्रयुञ्जन्ते दुष्टाशयाः। घटिकामध्य एव भ्रमपुरस्सरा क्रमवर्धनशीला सरक्ता वमिः प्रवर्तते, तदनुवेलमेव सरक्तकुन्थनातिद्रवातिसारप्रवृत्तिरितिज्ञात्वा त्वरित मामा* शयनलिकया, तदलाभे प्रस्थमितजले तोलकं लवणस्य दत्वा वामनीयः। लघु राजिकाचूर्णजलेन मदनफलेन एवं विधेनान्येन वा पुनः पुनः। स्वतः प्रवृत्ते च वमने उष्णजलं दुग्धं वा स्निग्धं चान्यत्पुनः पुनर्देयम्। अचिकित्सायां द्विघटि-

---

* Stomachtube.

कातो यावदहोरात्रं मृत्युकारः। अत्र विशेषस्तु व्यवहारायुर्वेद-ग्रन्थेभ्यो ज्ञेयः।

शोधनन्तु-मेघनादरसेन, क्षारजलेन, टङ्कणजलेन, कारवल्ली-रसेन, दुग्धेन वा दोलायन्त्रे मृद्वग्निना स्वेदनमेव। मात्रा च—रक्तिका त्रिशांशात आशतांशं मरिचादिभिः करणीया, गुडूची सत्वेन यवक्षारेण वा। गुणाः—रसायनो बल्यो वृष्य स्त्वच्यः कुष्ठघ्नो ज्वरघ्नो वातघ्नो रक्तवर्धनश्च। विविधत्वग्रोगेषु जीर्ण-विषमज्वरे हृदिभेदो वृद्धौ पुराणान्नद्रवशूले विशेषेणोपयुज्यते।

अत्र रसतरङ्गिण्याम्—

गौरीपाषाणकः स्निग्धो दोषघ्नो रसबन्धकृत।
कफवातामयहरो वृश्चिकादिविषप्रणुत॥
मासमात्रप्रयोगेण श्वासं परमदारुणम्।
विविधानि च कुष्ठानि नाशयेन्नैवसंशयः॥

श्लीपदोत्थज्वरध्वंसी प्रकामं कामवर्धनः।
सन्धिवातगद द्वेषी फिरङ्गकरिकेशरी॥
अग्निमान्द्यहरः कामंविषमज्वरनाशनः।
कान्तिप्रदः परं जीर्णपाण्डुरोग निषूदनः॥
श्वासं प्रतमकं हन्ति चिरोत्थं त्वतिदारुणम्।
द्रुतमारम्भवेलायां यक्ष्माण मपिनाशयेत्॥
हृच्छूलजं ज्वरोत्थं च हृद्दौर्बल्यं द्रुतंहरेत्।
अतीसारं निहन्त्याशु भुक्तमात्रसमुत्थितम्॥

मल्लो बाह्यप्रयोगेण क्षार कर्मकरः परम् ।
शोथसन्तापशैथिल्यकरश्च परिकीर्त्तितः ॥

**रोगविशेषे च**—वासासत्वेन वा व्याघ्रीचूर्णेन परिशीलितः ।
मल्लश्चिरोत्थितं चातिदारुणं श्वासमुद्धरेत् ॥
पञ्चतिक्तकसत्वेन चूर्णेनाऽगथवाशितः ।
मल्लोविनाशयत्याशु कुष्ठानि विविधानितु ॥
गुडूच्यर्कशिफाचूर्णैयत्नतः परिशीलितः ।
मल्लः सुनिर्नलस्तूर्णं निहन्ति श्लीपदज्वरम् ॥
करञ्जबीजचूर्णेन सेवितो सम्बलोऽमलः ।
सीतज्वरं निहन्त्याशु दिनैकेन न संशयः ॥
शुण्ठी पुनर्नवा चूर्णं मल्लस्त्रिदिनसेवनात् ।
आमवातं हरे द्घोरं ज्वरं चापि तदुद्भवम् ॥
विशोधितं शंखविषं सलोहं परिशीलितम् ।
नाशयत्यचिरादेव पाण्डुरोगं चिरोत्थितम् ॥
जातीपत्रलवङ्गाभ्यां मल्लः संसेवितोऽमलः ।
नाशयत्याशु नियतं फिरङ्गमतिदारुणम् ॥
रससिन्दूरलोहाभ्यां यक्ष्माणं नाशयेद् ध्रुवम् ।
शङ्खिनीचूर्णसंयुक्तो हृद्दौर्बल्यं विनाशयेत् ॥
शुण्ठीमरिचचूर्णेन श्वेतमल्लो निषेवितः ।
भुक्तमात्रसमुद्भूतमतीसारं विनाशयेत ॥
जलेन लेपयेद्यत्नात् मल्लं वृश्चिकदंशने ।
नाशयेद्घटिकार्द्धेन वृश्चिकार्तिं सुदारुणाम् ॥

इति विशेष उक्तः अ. ११

अत्र रसायनसागरात् मल्लचन्द्रोदयः—

नैम्बूक नीरेण दिनत्रयन्तु श्वेतादिरूपांश्चतुरोपि मल्लान्।
यथोत्तरं तूप्रबलाग्निमथ स्तान्समांशसूतेन विमर्दयेत्॥
ताभ्यां समानेन सुगन्धकेन कृत्वा मसिकूपिकया पचेत्।
सर्वार्थकर्यां खलु कांछिकायां यामत्रयं शीतलमुद्धरेत्॥
मल्लादि चन्द्रोदयमामनन्ति सर्वौषधेभ्योपि प्रधानवीर्यम्।
विसूचिकासन्निपात त्रिदोषान् व्याधीनशक्तुमनन्यशस्त्रम्॥

यद्ययमर्धरक्तिमात्रया जललवणयुतनिम्बूकरसानुपानेन मधुमेहे प्रातः प्रयुज्यते तदा तस्मिन्नेवदिने मुखशोषपिपासादीनामल्पताप्रतीयते कासश्वासयोरपिपूजितः। इति गौरीपाषाणाधिकारः।

शङ्खकर्पूराश्मा ( गोदन्तहरितालं घापरा इति वा ) नाक्षिणात्यास्तु कर्पूरशिलेति कथयन्ति । पारदशक* मध्यपारदर्शक† अपारदर्शक‡ भेदेन त्रिविधोऽयम्। काठिन्यमस्य१ ½ तः२ , विशिष्ट गुरुत्वं २·२तः२·४ इति भवति। अयं पारदर्शकः पत्राकारः शोभनो भवति यं गोदन्तिहरितालमितिवदन्ति। निम्बूकरसयुतजले घटिकाद्वयं स्थापयित्वा ततो मृत्तिकादिप्रक्षालनं विधाय गजपुटे कुमारीरसेन त्रिः पुटेत्। मा. २. र.। बल्यः शीतलो ग्राही रक्तरोधकः कासश्वासमेहहरः।

व्युषितं पयसि कुमार्याः पुटितमिभपुटे वलक्षहरितालम्।
तत्तदनुपानवशतो ज्वरादिशमनाय किमुनालम्॥

सिद्धभेषजमणिमाला ज्वराधिकारः।

---

*Selenite. † Gypsum. ‡ Alabaster.

पलमितरक्तस्फटिकायां माषकचतुष्टयं मल्लस्य दत्वा चूर्णीकृत्य तवके स्फटिकोत्फुल्लनावधि विपचेत् । रक्तिकादशमभाग मात्रया विषमज्वरे नवे पुराणे वा विशिष्टमुपकरोति । अत्र च गोदन्तितालस्य रक्तिकाद्वयं चतुष्टयं वा दत्वा चेद्दीयते मात्राष्टकमहोरात्रेण, नातिचिराय नवो विषमो निवर्त्तते । इति स्वानुभवः। अत्र गौरीपाषाणस्यांशोऽपि नास्तीति वैज्ञानिकाः । सरक्तप्रवाहिकायुतविषमज्वरे, एक एवाऽयम् । प्रायो दातव्यौषधालयेषु विषमज्वरे ऽस्यैव प्रयोगो भवति ॥ १६३ ॥

मनसिल कटु, स्निग्ध, कड़वी, कफनाशक है, लेखन करती है, सारक है, भूतावेश के भय को नाश करती है तथा कास श्वास को दूर करती है । मात्रा $\frac{1}{4}$र० ॥ १६३ ॥

अथ खर्परशोधनम्—

पुष्पाणां रक्तपीतानां रसैः पिष्ट्वा च भावयेत् ॥
नरमूत्रैश्च गोमूत्रैर्यवाम्लैश्च ससैन्धवैः ।
सप्ताहं त्रिदिनं वाऽपि पक्वः शुध्यति खर्परः ॥१६४॥

क्रमप्राप्तं खर्परमाह पुष्पाणामिति—पाठोऽयं र. अ. प.७-३३ खर्परसत्वपाठेन सम्वदति । रक्तपीतानाम्—मञ्जिष्ठा कुंकुमं लाक्षा खदिरश्चासनं तथा । रक्तवर्गस्तु—देवेशि ! पीतवर्गं मतः शृणु कुसुम्भं किंशुकं रात्री पतङ्गो मदयन्तिका । र. अ. ५-३६ । इत्युक्तानां रसैः=स्वरसैः पिष्ट्वा भावयेदेतैरेव रसैरित्यर्थः। ततः ससैन्धवैर्नरमूत्रगोमूत्रयवाम्लैः सप्ताहं त्रिदिनं वा। पक्वः=स्वेदितः खर्परः शुद्धयति । पिष्ट्वा चेत्यत्र पत्रैः पित्तै र्वेति

पाठान्तरम् । पक्व इत्यत्र पश्चादिति पाठे रक्तपुष्पादिभिः पेषणानन्तरं नरमूत्रादिभिर्भावना—तत्र—

मृत्तिका*, गुड़†, पाषाण‡ भेदतो रसकस्त्रिधा ।
पीतस्तु मृत्तिकाकारो मृत्तिका रसकोवरः ॥
गुड़ाभो मध्यमो ज्ञेयः पाषाणाभः कनिष्ठकः ।

इति र. अ. वे. त्रिविध उक्तः (७-२८-२६)

र. र. स. ये-तु—रसको द्विविधः प्रोक्तो ददुरः कारवेल्लकः ।

सत्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु । २-१४६ ।

अत्र—तत्तत्खनिजद्रव्यतारतम्याद्ददुरकारवेल्लकभेदोऽपि ज्ञेयः । यशदाधिक्याद्ददुरे सत्वाधिक्यं धात्वन्तरयोगश्चाल्पो भवति ।* पुरा खर्परश्चीनतः समागतोऽभवत । अद्य तु ब्रह्मदेशतः समायाति । भारतेऽपि यत्रतत्र सन्ति खनयोऽस्य । शिमला पर्वते—सुबाथू स्थाने—सीसकेन सह मिलति । खर्परमृत्तिका, स्वर्जिका, कोकिला त्रयमेतद्ध्मातं सत यशदो निर्गच्छति । इति खर्परमृत्तिकापरीक्षा ।

खर्परविषये-ऽस्ति महान्भ्रमो वैद्यसमाजे—तत्र रीति§ हेतुः, रीतिकृदिति पदद्वयं पित्तलनिर्मापकत्वेन खर्परं कथयति, खर्परज-

---

* Calamine. † Redzincore. ‡ Blende..

* यद्यपि सर्वविधखर्परात् तत्सत्वमेकविधमेव यशदोनिस्सरति सर्वखर्पर परमाणूनां समानजातीयत्वात् । तथापि मूलखनिज खर्परस्य तत्तद्भिन्मजद्रव्यान्तर संयोगादनेकविधत्वम् ।

§ रीतिः = पित्तलम् ।

मिति† पदं खर्परोद्भवत्वेन खर्पर यशदयोर्जन्यजनकभावं दर्शयति। एवं यशदकारण मिति पदं ज्ञेयम्। 'सत्वं कुटिलसंकाशं मुञ्चति' (र. अ. ७. ३६.)। 'वङ्गाभं पतितं सत्वम्' (र. र. स. २-१०७.)। अत्र कुटिलसंकाशवङ्गाभशब्दाभ्यां खर्पराद्यशदोत्पत्तिः स्पष्टैव। 'शुल्वखर्परसंयोगे जायते पित्तलं शुभमिति—रुद्रयामलीय वाक्यादवशिष्ट सन्देह लेशोऽपि निवार्यते। (यशदस्यैकोभागों भागद्वयं शुल्वस्य (ताम्रस्य।) मिलितं ध्मातंसत पित्तलं जायते) 'खर्परे प्रद्रुते। ज्वाला भवेन्नीलासिता*॥यदि'। र.र.स. २-१६०। धात्वन्तरे-एतादृक् ज्वालाया वर्णनाभावाच्च। ज्वाला हि धातूनां परस्परं विभेदकरोति सर्वसम्मतो निश्चयः। खर्परविषये भ्रमस्तु तुत्थशब्दादपि—तुत्थशब्दो हि रसकवाचकः सस्यकवाचकश्च अतएव—तुत्थस्यैव भवेद्भेदः खर्परं तद्गुणं च तादति (आ. वे. प्र.) तुत्थस्य भेदः खर्परो भ्रमादुक्तः। यथा-'गोभद्रो रसकस्तुत्थम्' र. अ. ७. ३७.। अत्र खर्परे रसकपर्याय तुत्थ शब्दे तु न कस्यापि विप्रतिपत्तिः। अतएव—शुद्ध्यते तुत्थखर्परम् र. र. स. २–१३१। 'द्विस्तुत्थं तु मयूरखर्परभिदा तत्राद्यमाहुः शिखिग्रीवा कान्तिः' र. प. मयूरग्रीवतुत्थमिति पूर्वाचार्यैं र्विभेदः कृतः। एवं 'ताम्ररूपं परिध्मातं सत्वं मुञ्चति सस्यकम्' ताम्ररूप कुटिलसंकाश शब्दाभ्यां सन्देहो निराकृतः।

---

† खर्परजो=यशदः।

*The Zinc burns' white blue flame. Chemistry by Kumar.

आ.वे.प्र., र.त. इत्यादिषु यशदखर्परयोः पृथगधिकारे वर्णनन्तूक्त-भ्रमादेव जातम्।

यत्रोपरसभागोस्ति† रसे तत्सत्वयोजनम्।
कर्तव्यं तत्फलाधिक्यं रसज्ञत्वमभीप्सता। र. इ. चि ७. ६४

इति वाक्यात् खर्परालाभे मालतीवसन्त, मालिनीवसन्तरसादिषु यशद एव शुद्धश्चूर्णीकृतो* नियोज्यः। अस्माकं कुलपरम्पराप्येषैव ॥ १६४ ॥

खपरिया रसग्रन्थोक्त मञ्जिष्ठादि लाल पीले फूलों के रसों से पीस पुनः पुरुष मूत्र, गोमूत्र, जौ की बनी कांजी में सेंधानमक मिला सात दिन या तीन दिन दोलायन्त्र द्वारा पकाने से शुद्ध होता है ॥ १६४ ॥

मतान्तरम्—

खर्परः परिसन्तप्तः सप्तवारान् निमज्जितः।
बीजपूररसस्यान्तर्निर्मलत्वमवाप्नुयात् ॥ १६५ ॥

खर्परेति—परिसन्तप्तो=द्रवीकृतः, बीजपूररसस्य=बिजौरा नीबूइति ख्यातस्य फल रसे। श्लोको यं र. इ. चू. १०-११२. तोऽत्रोद्धृतो दृश्यते।

रसकस्य सरलशोधनप्रकारद्वयम्—

कटुकालाबु निर्यास आलोड्य रसकं पचेत्
शुद्धं दोषविनिर्मुक्तं पीतवर्णं च जायते। र.र. स.२-१२४

---

† खर्परस्य उपरसेषु परिगणनमानन्दकन्दादौज्ञेयम्।

* रसादिषु तु शोधयित्वैव दीयते र. प. टी. श्लो. ५४।

तप्तं तप्तं यशदं लोहखल्वे मसृणं चूर्णीकृत्य मासं नरमूत्रेण भावयेत्, मूत्रं च प्रत्यहं नूतनं देयम्। तदनु जलेन प्रक्षालनीयः ॥ १६५ ॥

खपरिया को गरम कर बिजौरे के रस में बुझायें। इसप्रकार सात वार बुझाने से निर्मल हो जाता है ॥ १६५ ॥

अथ मारणम्—

> खर्परं पारदेनैव वालुकायन्त्रगं पचेत्।
> चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते।
> नेत्ररोगहरः क्लेदी क्षयहा खर्परो गुरुः ॥१६६॥

(इति खर्परशोधनमारणम्)

खर्परमिति—रसकभस्मप्रकारमाह—समभागपारदेन बालुका यन्त्रे रससिन्दूर विधिना पचेत्। नेत्ररोगेषु अञ्जनरूपेण, क्लिन्नव्रणे शुष्कचूर्णप्रक्षेपः। तदन्यव्रणे घृतादिना लेपे पूजितः प्रसिद्धश्च। क्षयहा-इति क्षयजरात्रिस्वेदे रक्तिमात्रया प्रवालभस्म (२ र.) ना सह युज्यते।

यशदभस्मप्रकारः—तत्सत्वं तालकोपेतं प्रक्षिप्य खलुखर्परे। मर्दयेल्लोहदण्डेन भस्मी भवति निश्चितम्। तत्सत्वं खर्परसत्वम्। उष्णवात (GONORRHOEA) प्रदर स्वप्नदोषेषुपूजितम्। प्रमेहे वस्तिप्रदाहे च पर्णपत्रेण, विषमज्वरे लवङ्गयवानीचूर्णेन, अतिसारे जीरकसितया, रजोऽल्पतायां नवनीतेन, अपतन्त्रकापस्मार मस्तिक शक्त्यल्पतायां क्षये च घृतेन, दग्धक्षते चर्म रोगे च

नवनीतेन। नेत्ररोगेषु बलहानौ वृक्करोगे पाण्डौ श्वासे कासे च तत्तदनुपानेन योज्यम्। मा० ½, १ र.

यशदपरिचयः—विशिष्टगुरुत्वम् ७. १.।

कठिनो वहीरौप्यकल्पोज्ज्वलः, आघाते भङ्गुरो विशिष्ट गन्धास्वादयुतः। खण्डितश्च सुरेखनीलवर्णरवकयुतो दृश्यते लोहस्येव नचात्र किट्टं भवति। सर्वेषु दाहजलेषु द्रवति, तप्तश्चद्रवति, शीतश्च नामितो नमति, उष्णीकृतो घनघातेन चूर्णयितुं शक्यते, अत्युष्णाद्रवो गालनयोग्यो भवति, तीव्राग्नौ पातनयन्त्रेण तिर्यक् पतति, उत्तापे द्रवत्सु लोहेषु प्रथमो वङ्गः, द्वितीयः सीसकः, तृतीयश्च यशदः। विशिष्टगुणास्तु आकरेभ्यो ज्ञेयाः॥ १६६॥

इति खर्पराधिकारः

शुद्धखर्पर को चूर्ण कर समपरिमाण शुद्ध पारे से मिला एक दिन वालुकायन्त्र में पकावे। इस से सुन्दर भस्म हो जाता है। खर्पर नेत्ररोगनाशक, क्लेद करने वाला क्षयनाशक तथा भारी है। मात्रा १ र०॥ १६६॥

अथ सपर्य्यायतुत्थशोधनमारणम्—

**तुत्थके तु शिखिग्रीवं हेमसारं मयूरकम्।**
**विष्ठया मर्दयेत् तुत्थं मार्जारककपोतयोः॥१६७॥**
**दशांशं टङ्कणं दत्वा पाच्यं मृदुपुटे ततः।**
**पुटं दध्ना पटु क्षौद्रैर्देयं तुत्थविशुद्धये॥१६८॥**

तुत्थपर्यायाञ्छोधनञ्चाह—तुत्थके, इति

तुत्थंताम्रोपधातुः स्यात् किञ्चित्ताम्रेणतद्भवेत्।

किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणं च तत् । आ. वे. प्र ३।६।
मार्जारस्य कपोतस्य च विष्ठया तुत्थसमभागया तुत्थदशांशं टङ्कणं दत्वा सम्मर्द्य शराबसम्पुटे कृत्वा मृदुपुटे पुटेत् दध्ना च। ततश्चतुर्थांशसैन्धवमधुना पुनःपुटेत, तुत्थं शुद्धं स्यात् ॥१६७-१६८॥

तुत्थक, शिखिग्रीव, हेमसार और मयूरक ये नाम नीलेथोथे के हैं । तूतिया को समान बिल्ली की विष्ठा तथा कबूतर की बीठ से मर्दन कर फिर नीलेथोथे का दसवां भाग सुहागा डाल लघुपुट में पकावे । इसके पश्चात् दही से और फिर सैन्धव शहद से पुट दे तो नीलाथोथा शुद्ध हो जाता है ॥ १६७—१६८ ॥

अन्यच्च—

ओतोर्विष्ठासमं तुत्थं सक्षौद्रं टंगणाङ्घ्रियुक् ।
त्रिधा सुपुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥१६९॥

प्रकारान्तरेणाह—ओतोरिति—ओतोर्विडालस्य विष्ठया=पुरीषेण समं=समानभागं सक्षौद्रं=समधु टङ्कणाङ्घ्रियुक्=तुत्थ चतुर्थांशटङ्कणयुतं त्रिधा=त्रिवारं सुपुटितं=मृदुपुटितं वान्ति-भ्रान्तिविवर्जितं शुद्धं स्यात् ॥ १६९ ॥

बिल्ली की विष्ठा, नीलाथोथा समभाग सुहागा चौथाई भाग लें । मधु से घोट तीनवार पुट देने से तुत्थ वान्ति भ्रान्ति से रहित शुद्ध हो जाता है ॥ १६९ ॥

अन्यच्च—

गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्ध यामकम् ।
वान्तिभ्रान्ती यदा न स्तस्तदा शुद्धिं विनिर्दिशेत् ॥२००॥

अन्यप्रकारमाह–गन्धकेनेति–तुत्थार्धेन गन्धकेन स=सह अर्धयामं=प्रहरार्धं पुटेदिति शेषः पुटनं च वान्तिभ्रान्तिनिवर्त्तनं यावत्। अत्र पाठः खण्डितः प्रतीयते ॥ २०० ॥

गन्धक एक भाग, नीलाथोथा दो भाग मिलाकर आधे पहर की पुट दे। इसी प्रकार पुट देते हुए जब वान्ति भ्रांति नष्ट होजावें तब तुत्थ की शुद्धि और भस्म होगई समझ काम में लावें ॥२००॥

गुणाः—

तुत्थं सकटु क्षारं कषायं विशदं लघु।
लेखनं भेदि चक्षुष्यं कण्डूक्रिमिविषापहम् ॥२०१॥

( इति तुत्थकशुद्धिः )

तुत्थात्ताम्रनिर्माणप्रकारः—लोहपात्रे मसृणीकृतं तुत्थचूर्णं चतुर्गुणजले कृत्वा काष्ठेनालोड्य स्थिरे च जले तुत्थचतुर्थांशं सैन्धवं दत्वा अहोरात्रं स्थापयेत् तत उपरिस्थं जलं पृथक्कृत्वा प्रक्षाल्य चूर्णाकारं ताम्रं भवेत्। प्रकारोऽयं वैद्य शङ्करदेवगिरेः।

तुत्थगुणानाह–तुत्थमिति–कण्डूक्रिमिविषापहामिति–द्विगुञ्जतुत्थं पञ्चतोलकपरिस्रुतजले द्रवीकृत्य–उष्णवाते (GONORRHOEA) शुक्लप्रदरे च उत्तरवस्ति विधौ योजयेत् एवं प्रक्लिन्न-पूतिमांसोच्छ्रितव्रणप्रक्षालनार्थे च योजयेत्। तुत्थविशेषगुणा ग्रन्थान्तरेभ्योऽपि ज्ञेयाः॥

'ताम्रदाहजलैर्योगे जायते तुत्थकं शुभम्' इति रुद्रयामलीय वाक्यं भा. र. शास्त्रे–उद्धृतम् कृत्रिमतुत्थनिर्माणपरम्। दाहजलम्=गन्धकद्रवः॥ इति तुत्थम ॥ २०१ ॥

नीलाथोथा, कटु क्षार कषाय विशद लघु लेखन भेदी तथा चक्षु के लिये हितकारी होता है। खाज कृमि तथा विष को नाश करता है।

मा० ½ र.। वमनार्थ तुत्थ की मात्रा—ɛ-५ र. ॥ २०१ ॥

अथ विमलशुद्धिः—

मूत्रारनालतैलेषु गोदुग्धे कदलीरसे ।
कौलत्थे कोद्रवक्वाथे माक्षिकं विमलं तथा ॥२०२॥
मुहुः शूरणकन्दस्थं स्वेदयेद्वरवर्णिनि !
क्षाराम्ललवणैरण्डतैलसर्पिःसमन्वितम् ।
पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत् ॥२०३॥

विमल† शुद्धिमाह–मूत्रेति–विमलस्य काठिन्यम् ६। वि. शु.४। प्रायो लोहगन्धकयोगेन विमलोत्पत्तिः‡। अतएव विमलाञ्चन्द्रार्क-सङ्काशं सत्वं पतते, इत्युक्तम्। र. र. स. २–१०४। शूरणकन्दस्थं =शूरणकन्दे गर्तं विधाय तत्र विमलं माक्षिकं च कृत्वा। मूत्रारनालै र्व्यस्तैः समस्तै र्यथासम्भवे मिलितै रेकं यामं स्वेदयेत् ततः क्षारादिभिः सह मर्दयित्वा पुटत्रयं देयम। उभयंशोधितं मृतं च भवेत्। आरनालं=काञ्जिकम्, कोद्रवः=कोदों इति। वरवर्णिनि इति सम्बोधनपदम्। क्षारो=यवक्षारः, अम्लं=काञ्जिकम्, लवणं=सैन्धवम्, तैलम्=तिलोद्भवम्, ऐरण्ड तैलं वा सर्पि गव्यम्, मूत्रा-

---

† CUBIC SULPHIDE OF IRON

‡ लोहस्य ( मुण्ड ) एकोभागः गन्धस्य भागद्वयम्।

रनालेत्यादि श्लोकार्धस्थाने-तैलारनालतक्रेषु गोमूत्रे कदलीरसे, इति र. अ. ७. ६. पाठान्तरमस्ति ॥ २०२—२०३ ॥

हे वरवर्णिनि! रौप्यमाक्षिक तथा स्वर्णमाक्षिक को शूरण-कन्द में रख गोमूत्र, कांजी, तिलतैल, गोदुग्ध, केले का रस, कुलथी का क्वाथ, कोदों का क्वाथ; इनमें दोलायन्त्र से तीन बार स्वेदन करे। फिर क्षार अम्ल सेंधानमक, ऐरण्डतैल तथा घी से मिलाकर तीन पुट देवें तो इन दोनों माक्षिकों की शुद्धि होती है ॥ २०२—२०३ ॥

मतान्तरम्—

जम्बीरस्य रसैः स्विन्ना मेषशृङ्गीरसैस्तथा ।
रम्भातोयेन वा पाच्या विमला शुद्धिमृच्छति ॥२०४॥
( इति विमल शुद्धिः )

मतान्तरे–जम्बीरस्येति–मेषशृङ्गी=मेढ़ाशृङ्गी इति ख्याता, घस्रं=एकं दिनम्। पाच्येति पाचनत्र स्वेदने ज्ञेयः। इति विमलः ॥ २०४ ॥

रौप्य माक्षिक जम्बीरी नीबू का रस, मेढ़ासिङ्गी का रस, केले का पानी इनमें से किसी एक में १ दिन पाक करने से शुद्ध होता है। मा. ३—१ र. ॥ २०४ ॥

अथ माक्षिकनामानि—

माक्षीके धातुमाक्षीकं ताप्यं तापीसमुद्भवम् ।
गरुडो माक्षिकः पक्षी बृहद्वर्ण इति स्मृतः ॥ २०५ ॥

क्रमप्राप्तं माक्षिकमाह-माक्षिक इति—

सुश्रुते—एवं च माक्षिकं धातुं तापीजममृतोपमम् ।
मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् । सु. चि. १३-१६ ।

अत्र माक्षिकस्यामृतोपमादत्ता* । रजतप्रभम्–रौप्यमाक्षिकम्। माक्षिकस्य वि० गु० ४ । काठिन्यम् ३. ५ । अत्र ताम्रस्य लोहस्य गन्धस्य च योगो भवति ।

माक्षीक, धातुमाक्षिक, ताप्य, तापीसमुद्भव, गरुड, माक्षिक, पक्षी, बृहद्वर्ण; ये सब सोनामाखी के नाम हैं ॥ २०५ ॥

अस्य लक्षणम्—

भंगे सुवर्णसंकाशो मनाक् कृष्णच्छविर्बहिः ।
बृहद्वर्ण इति ख्यातो माक्षिकः श्रेष्ठ उच्यते ॥२०६॥

स्वर्णाभं स्वर्णं माक्षीकं निष्कोणं गुरुतायुतम् ।
कालिमां विकिरेत्तत्तु करे घृष्टं न संशयः । भङ्गे सुवर्णेत्यादि मूलोक्तलक्षणपूर्वार्धे योऽर्थमिदमायुर्वेदप्रकाशीयम् । १२-७ । दक्षिणापथे हि नर्मदायाः नातिदूरे तापी नदी ( ताप्ती ) वहति बत्सदेशतः. प्रायः सम्पूर्णभारततः नेपालतो हिमालयतश्च माक्षिकस्य प्राप्तिर्भवति । रौप्यमाक्षिके ताम्रभागस्याल्पत्वात्'पाषाण बहलः प्रोक्तस्ताराख्योऽल्पगुणात्मक' इत्युक्तम् ॥ २०६ ॥

जो सोनामाखी तोड़ने में सोने जैसा हो, बाहर से थोड़ा काला हो उसे बृहद्वर्ण माक्षिक कहते हैं। वही उत्तम होता है ॥ २०६॥

---

* Chalcopyrite रासायनिकसूत्रम् । Cv FeS 2.

अशुद्धमाक्षिकदोषाः—

मन्दाग्निं बलहानिश्च व्रणविष्टम्भनेत्ररुक् ।
कुरुते माक्षिको मृत्युमशुद्धो नात्र संशयः ॥२०७॥

अशुद्धमाक्षिकसेवने दोषमाह-मन्दाग्निमिति- मृत्युमिति-अशोधिततात्रभक्षणे ये दोषास्तेऽत्र भवन्ति ॥ २०७ ॥

अशुद्ध सोनामाखी मन्दाग्नि, बलहानि, व्रण, विष्टम्भ, नेत्र-रोग और मृत्यु करता है ॥ २०७ ॥

अथ माक्षिकशोधनम्—

स्वर्णमाक्षिकचूर्णन्तु वस्त्रे बध्वा विपाचयेत् ।
कालमारिषशालिञ्च--क्वाथे दोलाविधानतः ।
तदधः पतितं शस्तमेवं शुध्यति माक्षिकम् ॥२०८॥

शोधनमाह-स्वर्णमाक्षिकेति- स्वर्णमाक्षिकस्य चूर्णं विधाय वस्त्रे बध्वा कालमारिषशालिञ्चक्वाथे दोलायन्त्रे ( १२७ श्लोकम्) विपचेत् । कालमारिषो=बृहत्पत्रतण्डुलीयः, शालिञ्चः=पत्तूरः शाकविशेषः । वस्त्रस्य सूक्ष्मावकाशाद्यच्चूर्णमधः पतति । तच्छस्तम् ॥ २०८ ॥

स्वर्णमाक्षिक का चूर्ण वस्त्र में बांध, बड़ी चौलाई और शालिञ्च शाक के क्वाथ में दोलायन्त्र से पकावे । जो चूर्ण वस्त्र में से निकल कर क्वाथ में नीचे गिर जावे वह उत्तम है । इस प्रकार सोनामाखी का शोधन होता है ॥ २०८ ॥

मतान्तरम्—

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत् ॥ २०६ ॥
लोहपात्रे पचेत् तावत् लोहदर्व्या च चालयेत् ।
सिन्दूराभं भवेद्यावत् तावच्छुध्यति माक्षिकम् ॥२१०॥

उत्तमं सरलं च शोधनप्रकार माह- माक्षिकस्येति-माक्षिकं सैन्धवं च चूर्णयित्वा लोहपात्रे माक्षिकनिमज्जनावधि जम्बीरादिद्रवं दत्वा लोहदर्व्या चालयन् तावत्पचेत् यावत् माक्षिकं सिन्दूराभं=रक्तवर्णं मग्नितापेन भवेत् । ततो जलेन त्रिस्त्रिर्वा प्रक्षाल्य संरक्षेत । सिन्दूराभमत्र भासवर्णमय इति पाठान्तरे वर्णशब्दसत्वे ऽपि मयट् विधानं किमर्थमिति विचारणीयम ॥ २०६-२१० ॥

सोनामाखी तीन भाग, सेंधानमक एक भाग; दोनों को बिजौरे के रस या जम्बीरी नीबू के रस में अलोडित कर लोहे की कड़ाही में पकावें लोहे की कड़छी से हिलाते रहें और जब सोनामाखी लाल हो जाय तब शुद्ध समझे ।

मतान्तरम्—

माक्षिकस्य चतुर्थांशं गन्धं दत्वा विमर्दयेत् ।
उरुवूकस्य तैलेन ततःकुर्य्यात्सुचक्रिकाम् ॥ २११ ॥
शरावसम्पुटे कृत्वा पुटेद्गजपुटेन तु ।
सिन्दूराभं भवेद्भस्म माक्षिकस्य न संशयः ॥२१२॥

( इति माक्षिकशोधनम् )

भस्मीकरणमाह माक्षिकस्येति-उरुबूकस्य = ऐरण्डस्य, गजपुट-लक्षणं ( ५६ श्लो० ) प्रागुक्तम्। यावद्वारितरं भवेत् तावत्पुटनीयम् ॥ २११-२१२ ॥

सोनामाखी चार भाग, शुद्ध गन्धक १ भाग, दोनों को मिला ऐरण्डतैल से मर्दन कर टिकियां बना शरावसम्पुट में रख गजपुट में फूंक दे। इससे सिन्दूर के समान लाल रंग की भस्म हो जाती है, इसमें सन्देह नहीं ॥ २११-२१२ ॥

माक्षिकं तिक्तमधुरं मेहार्शःक्रिमिकुष्ठनुत् ।
कफपित्तहरं बल्यं योगवाहि रसायनम् ॥ २१३ ॥

माक्षिकस्य गुणानाह माक्षिकमिति—मात्रा चास्यार्धगुञ्जातः गुञ्जां यावत् बलकालमपेक्ष्य देया। काञ्चनाभावे स्वर्णमाक्षिकं दीयते, किञ्चित्स्वर्णयोगसत्त्वात्। योगवाहीति-रोगानुरूपानुपानेन तत्तद्गुणकरम्।

माक्षिकधातुः सकलामयघ्नः प्राणो रसेन्द्रस्य परं हि वृष्यः।
दुर्मेललोहद्वयमेलकश्च गुणोत्तरः सर्वरसायनाग्र्यः ॥
। र. इ. चू. १०-१२८ ।

अस्य सत्त्वस्य गुणाः—संसेवितं क्षौद्रयुतं निहन्ति जरां सरोगामपमृत्युमेव। दुःसाध्यरोगानपि सप्तरात्रैस्तेनतुल्योऽस्ति सुधारसोऽपि। इति तत्रैव। मधुमेहे—माक्षिकधातुमप्येवं गुञ्ज्याज्ञास्याप्ययं गुणः। गदनिग्रहे। प्रमेहे ६७. १३७। निद्रानयनार्थं च वृन्ताकपुटपाकानुपानेन, अलाबुस्वरसेन, कूष्माण्डस्वरसेन वा सितायुतेन प्रयुज्यते। गर्भाविनादरसश्च गर्भपोषणार्थं बलार्थे च

क्षीयते । काञ्चनारत्वक्काथेन न्तःप्रविष्टां मसूरिकां बहिः कुर्यात् । सुपवीपत्ररसहरिद्राचूर्णमधुना निम्बपत्ररसेन वा सेवितं शीतलायाः सर्वास्ववस्थासु हितम् । रसजलनिधौ तु-कुलत्थस्य कषायेण माक्षीकविकृतिं जयेत् । दाड़िमस्य त्वचा वापि मौक्ष्य विकृतिनाशिनी । इति माक्षिकसेवनजन्यविकारभेषजमुक्तम् । रसहृदया दषु गर्भद्रुत्यर्थं माक्षिकसत्त्वस्य उत्कर्ष उक्तः। अस्य विषये विशेषजिज्ञासुभिः–सु. चि. अ. १३–श्लो. १५ तः र. अ. प. ७. श्लो ४ तः। र. र. स. अ. २–७७। भा. र. शा लोहखण्डे। आ. वे. प्र. अ. १२.। र. त. त. २१.। एते ग्रन्था द्रष्टव्याः। अन्त्ययोस्तु विशिष्टं वर्णनं विद्यते॥ २१३॥

स्वर्णमाक्षिक भस्म तिक्त, मधुर होता है। प्रमेह, बवासीर, क्रिमि तथा कुष्ठ को नष्ट करती है और कफपित्त को दूर करती है। यह बलदायक, योगवाही और रसायन है। मा० ½ १ र. ॥ २१३॥

अथ काशीशशोधनम्—

काशीशे धातुकाशीशं खेचरं दन्तरञ्जनम् ।
सकृद्भृंगाम्बुना स्विन्नं काशीशं निर्मलं भवेत्॥२१४॥

(इति काशीशशोधनम्)

काशीशमाह*—काशीश इति काशतेः काश्यतेर्वा दीप्त्यर्थाद् रूपसिद्धिः। व्यवहारे तु–काशीशः कासीसः काशीस इति रूपत्रयं

*. Sulphate of Iron. उत्पत्तिस्तु नयनीताल प्रान्तस्य गर्जि-गाख्ये स्थाने कौशल्यानद्यास्तटे ऽपि सम्भवति ।

दृश्यते। शोधनं तु भृङ्गराजरसेन घटिकात्रयं सकृदेकबारमेव कदलीपत्रे निधाय दोलायन्त्रे स्वेदितं निर्मलं भवेत्। स्विन्नमम्लक्लिन्नमिति पाठे तु भावना देया। काशीशं कृत्रिमं खानिजं च भवति। तत्र खानिजे क्वचित्तुत्थयोगोपि सम्भवति। अतः कासीसं चीनपात्रे जलेनालोड्य तत्र लोहकीलकं देयम्। सति तुत्थयोगे ताम्ररूपं चूर्णं तुत्थस्याधो वसति, उपरिस्थं जलमपनीय रौद्रयन्त्रे स्थापना त्कासीसरवका भवन्ति ॥ २१४॥

काशीश, धातुकाशीश, खेचर, दन्तरञ्जन; ये नाम कसीस के हैं। एक बार भांगरे के रस में स्वेदन करने से कसीस शुद्ध हो जाता है ॥ २१४ ॥

काशीशं निर्म्मलं स्निग्धं श्वित्रनेत्ररुजापहम्।
पित्तापस्मारशमनं रसवद्गुणकारकम् ॥ २१५॥

तद्गुणानाह कासीसमिति—रसवत् = पारदवत्, श्वित्रमत्र चित्तेति पाठान्तरं बहुग्रन्थसम्वादाद्धेयमेव। र० अ० तु 'कासीसं त्रिविधं शुक्लं कृष्णं पीतमिति प्रिये'। प० ७-८१। इत्युक्तम् ॥ २१५ ॥

इति काशीशम्।

शुद्ध कसीस स्निग्ध होता है, श्वेत कोढ़ और नेत्ररोगों को दूर करता है, पित्तापस्मार का नाशक है और पारे के समान गुण करता है। मा० १ र. ॥ २१५ ॥

अथ कान्तपाषाणनामानि—

राजपट्टं महापट्टं शिखिग्रीवं विराटकम् ॥ २१६ ॥

अथ कान्तपाषाणनामानि—राजपट्टं इति स्पष्टम् ॥ २१६ ॥

†. चुम्बकपत्थर।

राजपट्ट, महापट्ट, शिखग्रीव, विराटक, कान्तपाषाण; ये सब चुम्बुक पत्थर के नाम हैं ॥ २१६ ॥

अथ कान्तपाषाणशुद्धिः—

चूर्णितं कान्तपाषाणं महिषीक्षीरसंयुतम् ।
विपचेदायसे पात्रे गोघृतेन समन्वितम् ॥ २१७ ॥
लवणे च तथा क्षारे शोभाञ्जनरसे क्षिपेत् ।
अम्लवर्गस्य तोयेन दिनं घर्मे विभावयेत् ॥ २१८ ॥
तथैवदोलिकायन्त्रे दिवसं पाचयेत् सुधीः ।
कान्तपाषाणशुद्धौ तु रसकर्म समाचरेत् ॥ २१९ ॥

( इति कान्तपाषाणशोधनम् । अस्यैव नामान्तरं राजपट्ट इति )

चूर्णितमिति—कान्तपाषाणं चूर्णयित्वा गोघृतेनालोड्य तन्मज्जनावधि महिषीक्षीरं दत्वा-आयसे=लोहे पात्रे पचेत् तदनु बालशोभाञ्जनमूलरसे सैन्धवं यवक्षारं च किञ्चिद्दत्वा तत्र कान्तपाषाणं सायं क्षिपेत । प्रातः ततः पृथक् कृत्वा यथालाभ—मिलिताम्लवर्गस्य (१०२ श्लो०) तोयेनैकं दिनं घर्मे भावना पुनः पूर्वोक्तरीत्या लवणक्षाराम्लयुतशोभाञ्जनरसे दिवसं स्वेदयेदयमेवाशयो र. र. आ. उ. ७ श्लो. ३७-४१ दर्शितः । माहिषीक्षीरघृतादौ स्वेदयेत । कान्तपाषाणशुद्धिः स्यात् । कान्तपाषाणशुद्धौ=कान्तलोहे शोधिते सति रसकर्म पारदक्रियाः-यत उक्तम-रसार्णवे—

न सूतेन विना कान्तो न कान्तः सूतवर्जितः ।
कान्तसूतसमायुक्तः प्रयोगो देहधारकः । प० ६ श्लो० ५७ ।
मदोन्मत्तगजः सूतः कान्तमंकुशमुच्यते । प० ६ श्लो. ४६

समाचरेत् कुर्यात ।

अथवा—क्रमं कान्तस्य सिद्ध्यर्थं कर्तव्यं मन्त्रपूर्वकम् ( आ. कं. क्रि. क. वि. ५-५० ) इति यथा पारदकर्म मन्त्रपूर्वकं क्रियते तद्वत्-आनन्दकन्दोक्तक्रमेण पूजनं कुर्यात् । समन्वितमत्र समाहितम् । लवणे चेत्यत्र लवणानि, क्षार इत्यत्र क्षारौ, तथैवे-त्यत्र तद्द्रवैरिति दिवसमत्र द्विवारमिति पाठांतराणि । तद्द्रवैरिति पाठे अम्लद्रवैः स्वेदनम् । कान्तपाषाणादेव कान्तलोहोत्पत्तिर्ज्ञेया ॥
॥ २१७-२१६ ॥

इति कान्त पाषाणः ।

कान्तपाषाण के चूर्ण को, लोहे की कड़ाही में भैस का दूध तथा गौ का घी डालकर पकावें । इस प्रकार कान्तपाषाण शुद्ध हो जाता है ॥ २१७ ॥

सौंजने के रस में लवण क्षार अम्ल डाल १ दिन धूप में भावना दे । फिर उक्त द्रव में ही १ दिन दोला यन्त्र में स्वेदन करे । इस प्रकार शुद्ध कान्तपाषाण को पारद के कार्यों में प्रयुक्त करे । मा० ६ र० ॥ २१८-२१६ ॥

अथ वराटिकालक्षणानि—

पीताभा ग्रन्थिला पृष्ठे दीर्घवृत्ता वराटिका ।
रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका ॥ २२० ॥

सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ।
पादोननिष्कभारा च कनिष्ठा परिकीर्त्तिता ॥ २२१ ॥

वराटिका लक्षणमाह- पीताभेति—पीताभा=पीता पिङ्गलवर्णा आभा कान्तिर्यस्याः सा पीतवर्णा इत्यर्थः । ग्रन्थिला=पृष्ठे उच्चावचग्रन्थीयुता, दीर्घवृत्ता= दीर्घा च सा वृत्ता वर्त्तुला चेति दीर्घवृत्ता, सार्धनिष्कभरा=षण्माषकमाना, निष्कभारा=चतुर्माषकमाना, पादोननिष्कभारा=त्रिमाषमाना । वराटकेत्यत्र चराचरेति पाठान्तरम् ॥ २२०-२२१ ॥

कौड़ी वह अच्छी होती है जो पीले से रंग की हो, पीठ पर गांठदार हो, जिस के वृत्त दीर्घ हों । रसवैद्यों ने इसे चराचर नाम से भी कहा है । डेढ़ निष्क भर भार में हो तो श्रेष्ठ, निष्क भर की हो तो मध्यम, पौने निष्क की हो तो कनिष्ठा ॥२२०-२२१॥

अथ वराटिकाशुद्धिः—

वराटी काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयात् ।

गुणाः—

परिणामादिशूलघ्नी क्षयहा ग्रहणीहरा ।
कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ॥२२२॥

मारणम्—

भूगर्त्ते च समे शुद्धे पत्तनं स्थापयेत् सुधीः ।
तुषेण पूरयेत् तस्य किञ्चिन्मध्यं भिषग्वरः ॥२२३॥

वराटपूरितां मूषां तन्मध्ये विनिवेशयेत् ।
करीषाग्निं ततो दद्यात् पालिकायन्त्रमुत्तमम् ।
अनेन म्रियते नूनं वराटं सर्वरोगजित् ॥२२४॥

( इति वराटिकाशुद्धिः )

शोधनमाह वराटीति—निम्बूकरसे घटिकामात्रं स्थिता जलेन क्षालिताऽपि शुद्ध्यति ।

वराटं तक्रचाङ्गेरीजम्बीराणां रसेन वा ।
अन्येषामपि चाम्लानां यावत्पीतं न गच्छति ॥
पश्चादुद्धृत्य प्रक्षाल्य गृह्णीयाच्च वराटकम् ।

पुस्तकान्तरे मूलेऽयं पाठो दृश्यते । मारणमाह भूगर्त्त इति—भूमौ मृदङ्गाकृति-ऊर्ध्वं मुखं मृत्तिकापात्रं तत्प्रवेशयोग्यगर्त्ते स्थापयित्वा तन्मध्यं किञ्चित्तुषेण पूरयेत् । तत्र वराटपूरितसम्पुटं निधाय तदुपरि करीषैरापूरणं कुर्यादिदमेव पालिकायन्त्रं नाम । तत्र वह्निर्देयः ।

कपर्दस्य सरलमारणम्—

अङ्गाराग्नौ स्थिता ध्माता सम्यक्प्रोत्फुल्लिता यदा ।
स्वाङ्गशीता मृता सा तु पिष्ट्वा सम्यक् प्रयोजयेत् ॥
आ. वे. प्र १० । ७ ।

अथ गुणाः—परिणामादि इति ।

आमाशयक्षतोत्थं यत्तदन्नद्रवसंज्ञकम् । ग्रहणीक्षतजं शूलं परिणामाह्वयं मतम् । सिद्धान्त निदाने ।

क्षयहेति—लोकनाथपोट्टली, लोकनाथरसादयः कपर्दयोगादेव क्षये उपकारकाः।

अन्यत्तत्र लोहत्रिकटुयोगेन वराटभस्मनो विशेषोपकारकत्वं दृष्टम्। रोगान्तदौर्बल्ये च विशेषतो हृदयदौर्बल्ये लोहकुचीलुयोगेन गुणकरत्वं रक्तवर्धकत्वं च। मात्रा १-२ र० ॥२२२-२२४॥

( इति वराटिका )

कौड़ी को कांजी में एक प्रहर दोलायन्त्र से स्वेदन करें तो शुद्ध हो जाती है।

कौड़ी की भस्म परिणामशूल आदि शूलों की नाशक है। क्षय और ग्रहणी को दूर करती है। यह कटु, उष्ण, दीपन, वृष्य, तथा आंखों को हितकर है। वातकफ को नष्ट करती है।

भूमि में एक समतल गढ़ा खोद शुद्ध कर ले। विज्ञ वैद्य उसमें पत्तन=मृदङ्गाकृति-तन्दूर को रख उस तन्दूर में कुछ तुष भर शुद्ध कौड़ियों से भरा मूषा-सम्पुट रक्खे। ऊपर से उपले भर आग लगादे। इसे पालिकयन्त्र कहते हैं। इससे कौड़ी की भस्म हो जाती है। यह भस्म सब रोगों को नष्ट करती है। मात्रा २ रत्ती ॥ २२२-२२४ ॥

अथाञ्जनशुद्धिः—

नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम्।
दिनैकमातपे शुद्धं ततः कार्येषु योजयेत् ॥२२५॥

अञ्जनम्—यद्यपि मूले नीलाञ्जनमेवोक्तम् तथापि पञ्चाञ्जनानि यथा—सौवीराञ्जनम्, रसाञ्जनम्, स्रोतोञ्जनम्, पुष्पाञ्जनम्, नीला-

ञ्जनं चेति। तत्र सौवीराञ्जनं सुवीरदेशोद्भवम्* रसांजनं दार्वीक्वाथोद्भवमिति रसप्रकाशसुधाकरादौ। स्रोतोञ्जनं स्रोतोद्भवत्वेन एतन्नाम वरनागखनिजम्। यस्मादैन्टिमनी धातु निष्पद्यते। पुष्पाञ्जनं† खर्परो (यशद) द्भवमिति बहुसम्मतं मतम्। नीलाञ्जनं कृष्णाञ्जनं (काला सुर्मा इति) यतः सीसकस्योत्पत्तिर्भवति। एतेषां लक्षणानि गुणाश्च र. इ. चू. ११५८। भा. वे. प्र. ७. १. इत्यादि ग्रन्थेभ्यो ज्ञेयाः।

नीलाञ्जनमिति—नीलाञ्जनस्य चूर्णं विधाय एकं दिनमातपे भावयित्वा जलेन प्रक्षालनीयम्। अथवा भृङ्गजद्रावे क्षिप्तानि सकलान्यपि। अञ्जनानि विशुद्ध्यन्ति सत्वं तेषां शिलासमम्। भा.वे.प्र. ७-१५। रसाञ्जनपर्यायेषु रसगर्भम्, रसाग्रजम, रसोद्भम्, अग्निसारम् इत्यादिशब्ददर्शनाद्दार्वीक्वाथोद्भवरसाञ्जने सन्दिह्यन्ते दार्वीक्वाथस्य पारदानुपकारकत्वाच्च‡ तच्च पारदस्य पीतभस्म स्यादिति॥ २२५॥

काला सुरमा को चूर्ण करके जम्बीर के रस से एक दिन भावना देवे, फिर धूप में शुष्क करले तो शुद्ध हो जाता है। इसे अञ्जन आदि कार्यों में प्रयुक्त करे। अञ्जन में बराबर गन्धक मिला फूंक भस्म करले इसके प्रयोग से Kala Azar में लाभ होता है। मा० ½-१ र०॥ २२५॥

---

* सुवीरदेशश्च पश्चिमोत्तरप्रान्ते सिन्धुनदस्य पोषकभूताया सुवीरनद्याः प्रदेशः। † Zinc Oxide, Zno. ‡ Yellow Oxide of Mercury, Hgo.

अथ हिङ्गुलपर्य्यायाः—

हिङ्गुले हिङ्गुलर्याति दरदः शुकतुण्डकः।
रसगन्धकसम्भूतो हिङ्गूलो दैत्यरक्तकः॥ २२६॥

अथ हिङ्गुलपर्यायानाह—वि.गु.८. काठिन्यम् २३ क्षुरिकया कर्त्तितुं शक्यते। हिंगुल इति—दरदो दरददेशोद्भवत्वात स च पश्चिमोत्तरभारते चित्रलनदीप्रदेशः, शुकतुण्डकः शुकचञ्चुवद्रक्तवर्णत्वात्। हिंगुलुहि द्विविधः खनिजः कृत्रिमश्च तत्र रसगन्धकसम्भूतः कृत्रिमः। सति सम्भवे कृत्रिमो नादेयः। 'एतस्मादाहृतः सूतो जीर्णगन्धसमो गुणै' रिति वचनं खन्युद्भवहिंगुलपरं ज्ञेयम्। तत्र हि पारदगन्धयोर्बहोः कालात् प्राकृतिकः संयोगः। मूले यातीत्यत्र रक्तमितिपाठः सुगमः स्यात्॥२२६॥

हिंगुल, हिंगुलु, दरद, शुकतुण्ड, रसगन्धकसम्भूत, हिंगूल, दैत्यरक्तक; ये सब शिंगरफ के नाम हैं॥ २२६॥

अथ हिंगुलशोधनम्—

अम्लवर्गद्रवैः पिष्ट्वा दरदो माहिषेण च।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो विशुध्यति॥२२७॥

दरदशोधनमाह—अम्लेति-अम्लवर्गश्च (१०२–१०३ श्लो०) प्रागुक्तः। यथासम्भवमिलितैरम्लवर्गरसैः सप्तवारं पिष्ट्वा भावितः, एवं महिषी दुग्धेनापि शुद्धो भवति॥२२७॥

हिंगुल को अम्लवर्ग के रसों से पीस पुनः भैंस के दूध से सात वार पीसे। सूखने पर शुद्ध हो जाता है॥ २२७॥

अन्यच्च----

मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥२२८॥

प्रकारान्तरे--मेषीदुग्धेनेति--मेषी = छागी । शेषंस्पष्टम् ॥२२८॥
हिंगुल को भेड़ के दूध से सात वार भावित कर अम्लवर्ग से सात वार भावित करे तो निश्चित शुद्ध हो जाता है ॥ २२८ ॥

अन्यमतम्--

दरदं दोलिकायन्त्रे पक्वं जम्बीरजैर्द्रवैः ।
सप्तवारमजामूत्रैर्भावितं शुद्धिमेति हि ॥२२६॥

मतान्तरे- --दरदमिति----हिंगुलुं चूर्णयित्वा पोट्टलीं विधाय दोलायन्त्रे (श्लो. २०८ टी.) जम्बीररसेन दिनमेकं स्वेदयेत् ततः सप्तवारं अजामूत्रेण भावना देया ॥ २२६ ॥
हिंगुल को दोलायन्त्र में जम्बीर के रस से स्वेदन कर फिर सात वार बकरी के मूत्र से भावना दे तो शुद्ध हो जाता है ॥२२६॥

अथान्यत्----

आर्द्रकैर्लकुचद्रावैः सप्तधा भावितो यदि ।
हिंगुलः शुद्धतां याति निर्दोषो जायते खलु ॥ २३० ॥

प्रकारान्तरेण शोधने--आर्द्रकैरिति--आर्द्रकं प्रसिद्धम्, लकुचः लुचकुच इति--एतयोः स्वरसेन प्रत्येकं सप्त भावनाः ॥ २३० ॥
हिंगुल को अदरक के रस से अथवा लुचकुच के रस से सात भावाना दें तो शुद्ध एवं निर्दोष हो जाता है ॥ २३० ॥

अथ शुद्धहिंगुललक्षणं गुणाश्च---

बिम्ब्याभं हिंगुलं दिव्यं रसगन्धकसम्भवम् ।
मेहकुष्ठहरं रुच्यं बल्यं मेधाग्निवर्द्धनम् ॥ २३१ ॥

हिंगुलः

चर्मार शुकतुण्ड हंसपादभेदात् त्रिविधस्तत्र हंसपादः ( रूमी शिंगरफ ) श्रेष्ठः । हिंगुललक्षणमाह विम्ब्याभमिति— विम्ब्याभं पक्वविम्बीफलसदृशम् । रसगन्धकसम्भवं -खनौ रसगन्धकयोगेन निवृत्तं दिव्यमुत्तमम् -अब्भक्षो वायुभक्षः इत्यत्र यथा-एवशब्दाध्याहारो भवति-एवं रसगन्धकशब्देऽपि-एव-शब्दाध्याहारे रसगन्धकसम्भवमेव हिंगुलं दिव्यं न कृत्रिममित्यर्थो बोध्यः । मेहकुष्ठहरं मेहहरं-कुष्ठहरं चेत्यर्थः, रुच्यं-रुचिकरम्, बल्यं बलकरम् मेधा—धारणाशक्तिः मात्रा रससिन्दूरवत् । ॥ २३१ ॥

पारे और गन्धक से उत्पन्न हिंगुल बिम्बीफल के समान लाल रङ्ग का श्रेष्ठ होता है । यह प्रमेह और कुष्ठ को दूर करता है । रुचिवर्धक, बलकारक, मेधावर्धक तथा अग्निवर्धक है ।

विशेष वचन — रसार्णव तथा रसेन्द्रचिन्तामणि में 'बिम्ब्याभं' के स्थान पर 'तिक्तोष्णं' पाठ है । वहां यह श्लोक केवल गुणपरक है । इसके अनुसार हिंगुल तिक्त एवं उष्ण होता है और उसमें दिव्यगुण होते हैं । मात्रा आधो रत्ती से १ रत्ती तक ॥ २३१ ॥

गेरू का प्रकरण मूल में नहीं दिया गया है टीका में उसका विस्तारपूर्वक वर्णन है ।

## गैरिकम्

पाषाणगैरिकं चैकं द्वितीयं स्वर्णगैरिकम् ।
पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् ॥
अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ॥ र. र. स. ३-४६

आ. वे. प्र. तु--द्विविधं गैरिकं प्राहुः स्वर्णं सामान्यगैरिकम् ।
परैस्तृतीयमप्युक्तं पाषाणाख्यं हि गैरिकम् ॥
सुवर्णगैरिकं रक्ततरं शिष्टं तु रक्तकम् ॥ ८-२७

सुवर्णगैरिकं स्निग्धं मसृणं त्वतिकोमलम् ।
पाषाणगैरिकं रूक्षं कठिनं नातिलोहितम् ।
पाषाणगैरिकात् श्रेष्ठं कथितं स्वर्णगैरिकम् । र. त. २२-१२-१३

स्वर्णगैरिकमत्यन्तरक्तं सुवर्णवर्णकरं भवति; ततो हीनं सामान्यगैरिकम् । स्निग्धमसृणते चोभयत्र समाने, घर्षणेन च रञ्जयतो हस्तम् । पाषाणगैरिकं तु ताम्रवर्णं लोहाधिक्यात्कठिनतरमतो घर्षणेन न रञ्जयति । सर्वस्मिन्गैरिके लौहं प्राणवायुस्तत्तुखनिमृत्तिकांशश्च भवति ।

### शोधनम्

गैरिकं किञ्चिदाज्येन भृष्टं शुद्धं प्रजायते ।
त्रिगोदुग्धभावनयापि शुद्ध्यति ।
स्वादुस्निग्धहिमं नेत्र्यं कषायं रक्तपित्तनुत् ।
हिक्कावमिविषघ्नञ्च रक्तघ्नं स्वर्णगैरिकम् ॥
पाषाणगैरिकं चान्यत्पूर्वस्मादल्पकं गुणे । र. र. स. ३-४७-४८
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ।
अतिकण्डूहरं रूक्षं तथा प्रोक्तमुदर्दनुत् ॥

पाषाणगैरिकं त्वन्यद्धिकालक्ष्मीविषापहम् ।
सुवर्णगैरिकं श्रेष्ठं गैरिकद्वितयात्परम् ॥ आ. वे. प्र ८-२८-१
प्रदरघ्नं व्रणरोपणं ज्वरघ्नं वह्निदाहापहम् ।
सुवर्णगैरिकं गुञ्जाद्वयं मधुसमन्वितम् ॥
भक्षितं विनिहन्त्याशु शीतपित्ताह्वयं गदम् ।
सुवर्णगैरिकं शुद्धं निशया परिलेपितम् ॥
शीतपित्तं तथोदर्दं नाशयत्यविकल्पतः । र. त. २८-१२३-१२४
कैरव्युक्तं पतेत्सत्त्वं क्षाराम्लस्विन्नगैरिकात्
उपतिष्ठति सूतेन्द्रमेकत्वं गुणवत्तरम् । र. र. स. ३-५० ।
रसार्णवे तु--गैरिकं त्रिविधं रक्तहेमकेवलभेदतः ।
क्रमात् सितं च रक्तं च सत्वं पतति शोभनम् । ७-८४

इति गैरिकाधिकारः ।

फिटकड़ी-- स्फटिका च स्फटी प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।
· दृढरङ्गा रङ्गदृढा रङ्गाङ्गा चापि कथ्यते ॥
गुणाः · स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् ।
निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणी ॥
स्फटिका निर्मला श्वेता श्रेष्ठा स्याच्छोधनं क्वचित् ।
न दृष्टं शास्त्रतो, लोका वह्नावुत्फुल्लयन्ति हि ॥

स्तन्येन नेत्राञ्जिता पुराणमपि पुष्पकं नाशयति । द्विरत्ति मात्रया त्रिः प्रत्यहं प्रयुक्ता विषमं सोमलेन सहोत्फुल्लिता च समूल वातं हन्ति त्रिभिर्दिनैः । मा० ½ र० ।

Calcium **खटिका गुणाः**

मृदुपाषाणसदृशी खटी शुभ्राऽधिका गुरुः ।

खटी दाहास्रनुच्छीता मधुरा विषशोथजित् ॥
कफघ्नी नेत्रयोः पथ्या लेखने बालकोचिता ।
तद्वत्पाषाणखटिका व्रणपित्तास्रजिद्धिमा ॥
लेपादेते गुणाः प्रोक्ता भक्षिता मृत्तिका समा ।
खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्तिते ॥

बोल गुणाः – बोलं तु त्रिविधं प्रोक्तं रक्तं श्यामं मनुष्यजम् ॥
बोलं रक्तहरं शीतं मेध्यं दीपनपाचनम् ।
मधुरं कटुकं तिक्तं ग्रहखेदत्रिदोषनुत् ॥
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशोधनम् ।
चक्षुष्यं च सरं प्रोक्तं रक्तबोलं भिषग्वरैः ॥

इति रक्तबोलम् (दम्बुलअखवायन)

श्यामबोलं तीक्ष्णगन्धं दद्रुकण्डूविषापहम् ।
कुष्ठापस्मारब्रध्नार्शोरक्तग्रन्थिं च नाशयेत् ॥ घृतकुमारीजं (मुसब्बर इति) २ र. मात्रया यकृतं प्लीहानं च हन्ति । तृतीयमानुषबोल-गुणा ऊह्याः ।

नवसार गुणाः—क्षारेषु गणना तस्य स्वर्णशोधनकः परः ।
शङ्खद्रावरसे पूज्यो मुखकर्मणि पारदे ।
विड्द्रव्योपयोगी च क्षारवत्तद्गुणाः स्मृताः ॥ आ. वै. प्र. मा. २-४ र. ।

नवसारस्त्रिदोषघ्नः स्निग्धः सूक्ष्मो लघुस्तथा ।
पाचकः सारकस्तीक्ष्णो जठराग्निप्रदीपनः ॥
उष्णः प्लीहप्रशमनो मांसाजीर्णनिवारणः ।

गुल्माध्मानप्रहरणः कफविश्लेषणः परम् ॥
वृश्चिकोत्थविषघ्नश्च लोहद्रावणकस्तथा ।
हृदामयहरो नेत्र्यः श्वित्रकुष्ठहरस्तथा ॥र. त १४-५-७।

अथ शिलाजतु नामानि—

शिलाजतुनि शैलेयमद्र्यं गिरिजमश्मजम् ।
धातुजमश्मजतुकं शैलजं चाश्मसम्भवम् ॥ २३२ ॥

सर्वरोगहरशिलाजतु[१]विधानमाह--शिलाजतुनीति-शिलाया जतु-लाक्षा शिलाजतु, 'राक्षा लाक्षा जतु क्लीवे', इत्यमरः । तत्र शैलेयम्, अद्र्यम्, गिरिजम्, अश्मजम्, धातुजम्, अश्मजतुकम्, शैलजम्, अश्मसम्भवम् , व्यवहारार्थमेते पर्य्यायशब्दा ज्ञेयाः। शैलेयमिति शिला इव शैलेयम् शिलाया ढः ५-३-१०२ इति योगविभागाड्ढञ् । अद्रौ भवम् अद्र्यम् । धातुभ्यो हेमादिषड्भ्यो जातं धातुजम् । अश्मनो जतु-निर्यास एव अश्मजतुकम् । गैरेयम्, अर्थ्यम् , इत्यपरे नामद्वयम् । चरके-हेम्नो रजतात् ताम्रात् कृष्णायसात् शिलाजतूत्पत्तिर्वर्णिता । सुश्रुते--त्रपु शीसाभ्यामपि तदुत्पत्तिः । हेमादिषड्धातुरसम् इति वाग्भट्टोऽपि । रसेन्द्रचूड़ामण्यादौ कर्पूरादि-शिलाजतु विशेषतयोक्तम् ।

---

१. ACK BTUMEN. MINERALPITCH. JEW'S PITCH का० मोमिआई ने० कालोमित, आरब-हेजर उलमूसा कुफर अल् यहूदी, ईरान-मोमिआई फन रूमी ।

तत्र-द्वितीयं सोरकाख्यं स्यात् श्वेतवर्णं शिलाजतु ।
अग्निबाणोपयुक्तं[1] तद्धितं मूत्रामयेषु च ॥
पाण्डुरं सिकताकारं कर्पूराभं शिलाजतु ।
मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ॥
एलातोयेन संभिन्नं सिद्धं शुद्धिमुपैति तत् ।
नैतस्य-मारणं सत्वपातनं विहितं बुधैः ॥

उत्पत्तिस्तु:—

मृत्तिकाविशेषाज्जलविशेषात् जायते । आ. वे. प्र. १२-१२५-१२७ ।
एतदतीवोपकारकमर्बुदगिरेर्लभ्यते[2] ॥ २३२ ॥

शिलाजतु, शैलेय, अद्रय, गिरिज, अश्मज, धातुज, अश्म-जतुक, शैलज, अश्मसम्भव, ये शिलाजीत के नाम हैं ॥ २३२ ॥

तच्छुद्धिः—

गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु ।
दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयम् ॥२३३॥

शुद्धिप्रकारः आयुर्वेदप्रकाशे अग्निवेशात्—
उष्णेऽथ काले रवितापयुक्ते व्यभ्रे निवाते समभूमिभागे ।
चत्वारि पात्राण्यसितायसानि न्यस्यातपे तत्र कृतावधानः ॥
शिलाजतु श्रेष्ठमवाप्य पात्रे प्रक्षिप्य तस्माद्द्विगुणं च तोयम् ।
उष्णं तदर्धं कथितं च दत्वा विशोधयेत्तन्मृदितं यथावत् ॥
सुवस्त्रपूतं प्रविधाय तत्तु संस्थापनीयं पुनरेव तत्र ।

---

१. अग्निशस्त्राग्नि बारूद । २. आबू पहाड़ ।

ततस्तु यत्कृष्णमुपैति चोर्ध्वं संतानिकावद्रविरश्मितप्तम् ॥
पात्रे तदन्यत्र ततो विदध्यात्तस्यान्तरे कोष्णजलं निधाय ।
ततश्च तस्मादपरत्र पात्रे तस्माच्च पात्रादपरत्र भूयः ॥
पुनस्ततोऽन्यत्र निधाय कृष्णं यत्संहृतं तत् पुनराहरेच्च ।
यदा विशुद्धं जलमच्छमूर्ध्वं प्रसन्नभावान्मलमेत्यधस्तात् ॥
तदा त्यजेत्तत्सलिलं मलं च शिलाजतु स्याज्जलशुद्धमेवम् ।
चतुर्थपात्राद्गलितं हि सर्वं परीक्षणं तस्य वदामि भूयः ॥
यथा—वह्नौ क्षिप्तं तु निर्धूमं पक्त्वा लिङ्गोपमं भवेत् ।
तृणाग्रेणाम्भसि क्षिप्तमधो गलति तन्तुवत् ॥
गोमूत्रगन्धिमलिनं शुद्धं ज्ञेयं शिलाजतु ।

कृत्रिम शिलाजतु—

तन्तुगलनगोमूत्रगन्धित्वादिकं गोमूत्रेण सहोष्णीकृतघने वाभ्क[1]-निर्यासेऽपि भवति, लिङ्गाकृति चाकचक्यं च विशेषेण, इदं चोष्णीकृतं न मृदुतामेति शुष्यति काठिन्यं भजते दह्यते च सधूमम्।
शिलाजतु तु सूर्यतापेनापि मृदु भवति ।

अत्रेदं च बोध्यम्—

उष्णतायां प्रवाते च घनतामेति, सज्जति निर्यासवद्यत्र कुत्रापि, वर्णश्च तैलवच्चाकचक्ययुतः कृष्णात्कृष्णतरो वा भवति, शुष्कं

---

१. वाभ्कवृक्षः पर्वतीयः । पञ्च सहस्रफीट 'उन्नतपर्वतेषु शिमला-शैलादौ महान् बहुवर्षायुः सर्वजनपरिचितो यत्फलानि ल्यक्माल, ल्यकाल वेति ख्यातानि चन्दनवज्जलेन घृष्टानि वान्तिघ्नानि भल्लूक भक्ष्याणि ।

सत्काठिन्यमेति, कटुकटुतरास्वादवत् पर्युषितं गोमूत्रगन्धि, जले घृतादौ च तादात्म्यमेति, उष्णीकृतं यावत्पञ्चदश संख्यां, (CENTIGRADE) उष्णायते,तदनुद्रवति, आधमति च पुनर्निर्धूमं ज्वलति, किट्टं चाधस्तन्तून्सृजन् जले तरति, अस्मत्कुलपरम्परायान्तु सर्वशुद्धं तदायसमिति आयसं गृहीत्वा बहिर्मलमपाकृत्य सूक्ष्मखण्ड-प्रकल्पितं शिलाजतु--शिलामायसे काष्ठे मृत्पात्रे वा सायमत्युष्णजलेनालोड्य प्रातर्वस्त्रेण गालयित्वा तज्जलं पात्रान्तरे स्थापनीयम् । वस्त्रोपरिस्थानि शिलाजतुखण्डानि

पुनः सायमुष्णजलेनालोड्य प्रातर्गालयेत् । एव पुनः पुनः कृष्णरक्तवर्णे ईषन्मधुरकटुकास्वादगोमूत्रगन्धिजलनिस्सरणान्तं कुर्यात् ।

वस्त्रस्था मृत्तिका चाऽभिघातजेषु शूलशोथेषु लेपसेकमादिकार्यार्थमुदुम्बर दुग्धवत्, तत्पत्रजसारवच्च संरक्षणीया ।

एकत्रीकृतं मुक्तजलं सोपानवदुपर्यधोधःस्थापितानां पञ्च लोहादिपात्राणां प्रथमपात्रे पूरयेत् । ततः पूर्वपात्रात् पात्रान्तरं क्रमेण समकालमेव वस्त्रनिर्मितशिथिलवर्त्तिकाभिरन्त्यपात्रे नयेत् । एवं विन्दुरूपेण सञ्चितस्योपरिस्थः सरः प्रत्यहं काचपात्रे स्थापनीयः । अवशिष्टजले सायं दुग्धमिश्रितजलावसेचनं प्रातर्वर्त्तिकादानमेवं द्विमासाभ्यां शिलाजतु मृत्तिकारहितं भवति । दुग्धमिश्रितजलावसेचनेन पात्रतले मृत्तिका पृथक् सञ्चिता दृश्यते ।

एवं मृत्तिकारहितं शिलाजतु गोदुग्धेन, त्रिफलया, भृङ्गरसेन च प्रत्येकमेकं दिनं लौहजे कृष्णायसे पात्रे पिष्टं शुद्ध्यति ॥ २३॥

शिलाजीत को गोदूध, त्रिफला के क्वाथ तथा भांगरे के रस से एक दिन लोहे के पात्र में पीसे तो निश्चय शुद्ध हो जाता है।

शिलाजीत में बालू पत्ते आदि अनेक वस्तु रहती हैं। अतः दूध आदि से पीसने से पूर्व उष्ण जल द्वारा निर्मल कर लेना आवश्यक है। शिलाजीत के छोटे छोटे टुकड़े करके अत्युष्ण द्विगुण जल में घोल और वस्त्र से छान वा नितार एक लोहपात्र में डाल देते हैं। इसे धूप में रख देते हैं। जब ऊपर घना भाग आ जाता है तब उसको ऊपर से लेकर दूसरे पात्र में डालते हैं और उससे दुगुना गरम जल भी डाल देते हैं। पुनः धूप में रखने पर जो घन भाग आ जाता है उसे दुगुने गरम जल के साथ तीसरे पात्र में डालते हैं। इसी प्रकार तीसरे से चौथे में डाला जाता है। अन्त में घन भाग को लेकर पृथक् पात्र में सुखा ले। इस प्रकार तब तक करते जाना चाहिये जब तक सारी शिलाजीत पृथक् न हो जाय। इस जलशुद्ध शिलाजीत को गोदुग्ध आदि से मर्दन कर विशेष शोधन करना चाहिये ॥२३३॥

अथ शुद्धशिलाजतुगुणाः—

शिलाजतु भवेत् तिक्तं कटुकञ्च रसायनम्।
क्षयशोथोदरार्शांसि हन्ति वस्तिरुजां जयेत् ॥२३४॥

अशुद्धशिलादोषमाह—अशुद्धं दाहमूर्च्छाय भ्रमपित्तास्रशोषकृत्।
शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम् ॥ आ वे. प्र. १००।

तद्गुणानाह शिलाजतुइति-तिक्तमिति कटुपाकविशिष्टानम्लकषाय-[1]

---

१. इदं च सप्त पदार्थान्तर्गतनवद्रव्येषु गन्धवत्त्वात्पृथिव्यामन्तर्भवति। वैज्ञानिकानाञ्च कार्बन् तत्वान्तः पतति।

जत्वाभमृदुमृत्स्नाभं यन्मल तच्छिलाजतु इति चरकाभिप्रायः।

सुश्रुते तु—तत्सर्वं तिक्तकटुकं कषायानुरसं सरम्।
कटुपाक्युष्णवीर्यं च शोषणं छेदनं तथा॥

इति तिक्तकटुकरसस्य प्राधान्यं कषायस्यानुरसत्वं सरत्वं च विशेषतयोच्यते। रसायनं जराव्याधिविध्वंसी। "क्षये गिरिजतु" इति विशेषतया क्षये प्रयुज्यते। शोथो हि भवति प्राधान्येन हृदय-यकृद्वृक्काणां विकृत्या, तत्र एकदोषजे त्रिदोषजे वा शोथे केवल-दुग्धपथ्यसेविनां क्रमवृद्धमात्रया प्रशस्तम्। एवमुदरेऽर्शःसु च बोध्यम्। बस्तिरुजासिति विशेषतस्तु "बस्तिरोगेषु गिरिजम्" इति भावः। एवमश्मरीशर्करोन्मादापस्मारकृमिषु च ज्ञेयम्।

अन्ये च गुणाः संक्षेपेण—

न सोऽस्ति रोगो भुवि साध्यरूपः।
शिलाह्वयो यं न जयेत्प्रसह्य॥
तत्कालयोगैर्विधिभिः प्रयुक्तम्।
स्वस्थस्य चोर्जां विपुलां ददाति॥ इति चरकः।

सर्वव्याधिविनाशनम्—इति सुश्रुतः।

सर्वेषु रोगेषु शिलाह्वयं वा। इति वाग्भटः।

रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः वसन्ति ते शिलाधातौ जरामृत्यु जिगीषया। र. इ. चू.।

मुहम्मदीयास्तु—आभ्यन्तरेषु दाहजनितशोथेषु बस्तिप्रदाहा-दिषु प्रयुञ्जते।

मधुमेहे[१]--तद्भावितं सारगणैः तदोषो दिनोदये ।
पिबेत्सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम् ॥
जाङ्गलेन रसेनान्नं तस्मिन् जीर्णे तु भोजयेत् ।
उपयुज्य तुलामेवं गिरिजादमृतोपमात् ॥
वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ॥
जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः ।

( सु-चि-१२-८-११ )

भावना च तत्तद्रोगहरौषधानामष्टमांशावशेषेण क्वाथेन देया ।

गर्भाशयशोथे कण्ठमालायां वातरक्ते (GOUT) उष्णवाते (GONORRHOEA) कुष्ठे कासे श्वासे कामलायां सर्वविध-शूले च तैस्तैरनुपानैर्योगवाहित्वाद्योज्यम् । वृक्कशोथे पाठाक्वाथेन, वस्तिशोथे पुनर्नवाक्वाथेन, वातव्याधा, वजीर्णे, त्वग्रोगे च ।

मात्रा च-पलमर्धपलं कर्षो मात्रा तस्य त्रिधा मता । इति चरकः । इयं प्राचां मात्रा । रक्तिकाद्वयमारभ्य वृद्धिक्रमेण मधुना दुग्धानुपानेन ।

---

१. यत्तु कर्नल आर. एन. चोपरा महोदयेन स्वीय इन्डिजिनस ड्रग्स पुस्तकस्य ४३९ पृ० पं० १.

Shilajeet has no effect either on the blood suger or the urine suger in Diabetes.

शिलाजतु मधुमेहस्य रक्तगतशर्करायां मूत्रगतशर्करायां च न किमप्युपकरोति इति लिखितम् । मया तु यथालाभं सारगणैर्भावितं एलन्युमिन ऐसीटोनादियुतेषु मेहिषु प्रयुक्तं विशेषलाभश्च दृष्टः । नातिचिराय पथ्यसेविन उपद्रवा अपि निवृत्ताः । अत्र परीक्षकाः प्रमाणम् ।

परिहारस्तु—

व्यायामातप मारुत चेतःसन्ताप गुरुविदाह्यादिः ।
उपयोगादपि परतो द्विगुणं परिवर्जयेत् कालम् ॥

आ. वे. प्र. ११८ ।

अपथ्यमत्र--विदाहीनि गुरूणि कुलत्थाश्च। शिलाजतुविषये[1] विशेषजिज्ञासुभिः-च. चि. अ. १. १४६, सु. चि. अ. १३। वा. भ. उत्तरस्थाने, अ. ३९, अस्य सर्वाङ्गसुन्दराव्याख्यायां खारनादवाक्यानि, विशेषतः संग्रहोद्धृतानि ज्वरादिषु शिलाजत्वनुपानानि शिवा गुटिका च। र, इ चू, १० । ६३, र. र. स. अ. २-१०६,र. अ. प. ७-१८, । र. इ. चि. ८. २२५ । आ. वे. प्र. १२, ८८। र. त. २२-६० । अत्रापि द्रष्टव्यो विशेषः । भा. र. शा. पृ. ६६ ( महाराष्ट्रभाषायां मुद्रितम् ) इण्डिजिनस ड्रग्स इङ्गलिशभाषायां मुद्रितम् । र. प. टी. श्लो. ४४ । र. प्र. सु. ५-६० । एते ग्रन्था द्रष्टव्याः ॥ २३४ ॥

शिलाजीत तिक्त, कटु, तथा रसायन है । क्षय, शोथ, उदर, बवासीर तथा बस्ति रोगों को दूर करता है ॥ २३४ ॥

अथ सौवीरादिशोधनम्—

सौवीरं टङ्कणं शङ्खं कङ्कुष्ठं गैरिकं तथा ।
एते वराटवच्छोध्या भवेयुर्दोषवर्जिताः ॥ २३५ ॥

सौवीरमिति-वराटवत् इति काञ्जिके (२२४ श्लो) स्वेद्याः ।२३५।

---

१. शिलाजतुस्थो 'बैन्जोइक ऐसिड' 'हिप्पूरिक ऐसिड' चैतान्गुणान्करोतीति नव्याः । रोगिणां वैद्यानां च सुलभतया प्राप्तये-उत्तरापथादानाय्य-शिलाजतु-संग्रहोऽप्यस्माभिः क्रियते ।

सौवीराञ्जन, सुहागा, शङ्ख, कंकुष्ठ, गेरू ये कौड़ी के समान शुद्ध करने से दोषरहित हो जाते हैं ॥ २३५ ॥

कंकुष्ठादीनां शोधनम्—

कङ्कुष्ठं गैरिकं शङ्खं काशीशं टङ्कणं तथा ।
नीलाञ्जनं शुक्तिभेदाः खुल्वकाः सवराटकाः ॥ २३६
जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा ।
शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये ॥२३७॥

कंकुष्ठमिति—नीलाञ्जनं=शीसकभूः । शुक्तिभेदाः—विविधाः शुक्तयः, खुल्वका इति नाभिशङ्खपरः खुल्वशब्दः जम्बीरवारिणा जम्बीरफलरसेन, स्विन्ना, दोलायन्त्र इति शेषः । तत ईषदुष्ण-जलेन क्षालनम् । त्वरितकार्यार्थं जम्बीरस्वरसे, अम्लान्तरे वाऽऽतपे घटिकामात्रं स्थापयित्वोष्णजलेन क्षालयेत् ॥२३६-२३७॥

कंकुष्ठ, गेरू, शङ्ख, कसीस, सुहागा, नीला अंजन, शम्बूक घोंघे, नाभिशङ्ख कौड़ी सबको जम्बीर के रस से १ याम स्वेदन कर उष्ण जल से धो दें तो शुद्ध होते हैं। इन्हें शुद्ध करके ही योगों में डालें ॥ २३६--२३७ ॥

अथ टङ्कणपर्यायाः—

टङ्कणं[1] क्षामणष्टङ्कः सम्यक्क्षारश्च पाचनः ।
सुभगो मालतीजातो द्रावी लौहविशुद्धिदः ॥ २३८ ॥

टङ्कणपर्यायमाह-टङ्कणमिति-टङ्कणो द्विविधः स्वयम्भूः कृत्रिमश्च

१. रासायनिक नाम सोडियम बोरेट (NO २ B ४ O ७,१० H २-O)

क्रामणः पारदस्य लेपावापाद्युपयुक्तस्य लोहधातवन्तः प्रवेशाभिव्याप्तिकारकः । र. र. स. चिन्तामणि टीका ३-६५ ।

क्रामणन्नाम-ताम्रादि परमाणूनामपि सुवर्णादि धातुवर्णादिरूपेण परिणामनम् ॥ मणि टी. र. इ. चि. ३-१६० ॥

सम्यक्क्षार, इत्येकं पदं, पाचनो भुक्तान्नादि जारणः, मालतीजातो[1]-मालती तदाख्या नदी तन्नीरात्तीराद्वा जातः । सम्भवेन्नदी-एषा तिब्बतप्रदेशे वा लद्दाक् प्रदेशे रुलङ्चू नदी, या सिन्धुना सह मिलति । द्रावी लोहद्रावकः । सुवर्णरजतादि द्रावणे हि स्वर्णकारा टङ्कणं ददते । लौहविशुद्धिदः लौहानां स्वर्णादीनां मलनाशकः रङ्गक्षारः, रङ्गदः इत्यन्वर्थं नामद्वयमपि ज्ञेयम् । रङ्गकरणे-उपयुक्तत्वात् । टङ्कणयोगेन हरिद्राया रङ्गपरिवर्तनं भवति, ज्वलने च हरिता ज्वाला समुत्पद्यते । ऊर्णावस्त्रप्रक्षालनार्थं चास्योपयोगो भवति ॥ २३८ ॥

टङ्कण, क्रामण, टङ्क, सम्यक् क्षार, पाचन, सुभग, मालतीजात, द्रावी, लोहविशुद्धिद ये सुहागे के नाम हैं ॥ २३८ ॥

अथ टङ्कणशुद्धिः—

आदौ टङ्कणमादाय काञ्जिकाम्ले विनिक्षिपेत् ।
एकरात्रात् समुद्धृत्य रौद्रयन्त्रे विभावयेत् ॥ २३९ ॥
नरमूत्रगतं टङ्कं गवां मूत्रगतं तथा ।
दिनान्ते तत् समुद्धृत्य जम्बीराम्बुगतं ततः ॥ २४० ॥

---

१. सिन्धुमालतीतीरसम्भवमिति टङ्कणपर्यायो दृश्यते । र. नि. व. १०

जम्बीराम्लात् समुद्धृत्य नारिकेलस्य पात्रके।
मरीचचूर्णसंयुक्तं क्षालयेच्छीतलाम्बुना।
एवं टङ्कं समादाय सर्वरोगेषु योजयेत् ॥ २४१ ॥

आदाविति—टङ्कणशोधनं वर्ण्यते-शोध्यं टङ्कणं किञ्चिन्मरीचचूर्णयुक्तं नारिकेलस्य पात्रके नारिकेलखर्परे एकरात्रं काञ्जिकाम्ले-काञ्जिकनिर्मिताम्ले, अत्यम्लकाञ्जिके इत्यर्थः, कृत्वा ततो रौद्रयन्त्रे आतपे विभावयेत्--शोषयेत्। अत्र टङ्कणशोधने सर्वत्र काञ्जिकादिकं टङ्कणत्रिगुणं यावता वा टङ्कणं द्रवति तावद्देयम् ॥ २३९ ॥ ततो नरमूत्रे गोमूत्रे जम्बीरस्वरसे च प्रत्येकमेकं दिनं विभाव्य प्रशोष्य च काञ्जिकादिलग्नमलदूरीकरणाय शीतलजलेन प्रक्षालयेत्, आतपे शोषयेच्च। एवं विशुद्धः स्वच्छो वर्णगन्धहीनः लवणक्षारस्वादयुतो रबकरूपो जले द्रवति च।

सरल शोधन प्रकारश्च--

अशुद्धटङ्कणो वान्तिभ्रान्तिकारी प्रयोजितः।
अतस्तं शोधयेदेव- वह्नावुत्फुल्लितशुचिः ॥

आ. वे. प्र. ८.२।

प्रथम टङ्कण जले विद्राव्य वस्त्रपूतं विधाय तदनुवह्नावुत्फुल्लनं यावत्पचेत् ॥२३९-२४१॥

सुहागा लेकर खट्टी कांजी में डाले। एक रात्रि के पीछे निकाल कर धूप में सुखावे। फिर क्रमशः पुरुष के सूत्र और गौ के मूत्र में डालकर शाम के समय निकाल ले पुनः जम्बीरी के रस में डाले फिर इससे निकाल कर नारियल के पात्र में मरिच-

चूर्ण के साथ शीतल जल से धोवे। इस प्रकार शुद्ध सुहागे को सब योगों में बर्ते। मात्रा--२ रत्ती ॥ २३६—२४१ ॥

गुणाः—

टङ्कणोऽग्निकरो रूक्षः कफघ्नो रेचनो लघुः ॥२४२॥

गुणाः—अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणक्षार उच्यते। सु. सू.४६-१४। अग्निकरः—क्षुत्कारी, कफघ्नोऽत एव श्वासकासादौ मधुना प्रयुज्यते। बालानां मुखरोगे, अष्टगुणमधुना, पारदातियोगजमुखस्रावे विंशतिगुणजलेन कवलधारणम्। स्तनक्षते च दुग्धपानात्प्राक् पश्चाच्च मधुना स्तने लेपः, योनिदाहे षोडषगुणजलेन वस्तिदानम्। त्वग्रोगेषु कण्डूप्रदाहादिषु षोडषगुणजलार्द्रवस्त्रेणावेष्टनम्। अम्लपित्ते सौभाग्यसमुद्रफेनचूर्णस्याचूषणम्।

अथ टङ्कणसत्वप्रकारः—टङ्कणं जले द्रावयित्वा तत्र दाहजलं देयम्, एतेन टङ्कणसत्वमधः पतति उपरिस्थं जलमपसारयेत् तलस्थं द्रव्यं शोषयेच्च इदं सौभाग्यसत्वं[1] नाम, व्रणे नेत्राभिष्यन्दादौ उष्णवाते च जलेन वस्तिप्रयोगार्थमुपयुज्यते ॥ २४२ ॥

सुहागा अग्निवर्धक, रूखा, कफनाशक, रेचन और लघु है ॥ २४२ ॥

अथ शङ्खमारणम्—

अन्धमूषागतं शङ्खं पलमेकं विचक्षणः।
माषार्द्ध टङ्कणैर्मिश्रं दशद्यन्त्रेण मारयेत् ॥ २४३ ॥

---

१ BORIC ACID.

शङ्खमाह अन्धेति—शङ्खो द्विविधः वामावर्त्तो दक्षिणावर्त्तश्च। दक्षिणावर्त्तः पूजनीयो रक्षणीयश्च। अन्धमूषा वज्रमूषा ( ८६-८७-८८ ) चन्द्रकान्तिसमप्रभं विमलवामावर्त्तं शङ्खमादाय केनचिदम्लेन स्वेदयित्वा, सम्प्रदायश्च-अम्लयुतजले घटिकामात्रं स्थापयित्वा बहिर्निर्गतमलादिकं प्रक्षाल्य शरावसम्पुटे कृत्वा पुटेत्। पलमेकमिति मारणीयशङ्खप्रमाणस्योपलक्षणम् तत्र एकपलशङ्खभस्मनि माषार्धटङ्कणं दत्त्वा दृषद्यन्त्रेण=दण्डेन मारयेत्=पेषयेत् ॥ २४३॥

अन्धमूषा में एक पल शुद्ध शङ्ख को तथा आधा माशा सुहागे को मिलाकर पुट दे। फिर खरल में दण्ड से पीस ले। यह शंखभस्म है ॥ २४३ ॥

अथ शुद्धशङ्खगुणाः—

शङ्खः सर्वरुजो हन्ति विशेषादुदरामयम्।
शूलाम्लपित्तविष्टम्भ—मेहहृत् वह्निदीपनः ॥ २४४ ॥

( इत्युपरसशोधनाद्यधिकारः )

तद्गुणानाह—शङ्ख इति-सर्वरुज=इति—तत्तदनुपानयोगेन तत्तद्रोगहरः। यथा निम्बूकरसेनातिसारम्, त्रिकटुना वन्हिमांद्यम्, भार्गीचूर्णेन श्वासमित्यादि ज्ञेयम्। विशेषादुदरामयमिति जीर्णग्रहण्यादौ मुस्तकस्वरसेन देयः। शूलमिति परिणामशूलस्योपलक्षणम् अम्लपित्ते धात्रीचूर्णेन स्वरसेन वा देयः। विष्टम्भे शुण्ठीयवानीचूर्णेन। मेहे गुडूचीस्वरसेन। वह्निदीपनार्थं चित्रकत्रिकटुना, शङ्खवटी तु पाचनार्थे प्रसिद्धैव। शङ्खटङ्कणयोरधिकगुणान्यग्रान्तरेभ्यो ज्ञेयाः। शा. २ र०।

चपलः[1] वरनागः अग्निजारः मृदारशृंगम् ।

मूलेऽनुक्ता अपि चपलवरनागअग्निजारा वर्ण्यन्ते ।

गौरश्वेतोऽरुणःकृष्णश्चपलस्तु चतुर्विधः ।

हेमाभश्चैव ताराभो विशेषाद्रसबन्धनः ॥ १४३ ॥

चपलो लेखनः स्निग्धो देहलोहकरो मतः ।

रसराजसहायः स्यात् तिक्तोष्णो मधुरो मतः ॥ १४५ ॥

...... त्रिदोषघ्नोऽतिवृष्यश्च । र. र. स. अ: २ ।

सर्वविधामाशयदोषेऽग्निमान्द्ये, आमाशयार्बुदे वमने प्रयुज्यते महत्या मात्रया चातिसारं हरति । इति चपलः ।

वरनागः[2] ( नीलाञ्जनसत्वम् )

तीक्ष्णं नीलाञ्जनोपेतं, ध्मातं हि बहुशो दृढम् ।

मृदुकृष्णं द्रुतद्रावं वरनागं तदुच्यते ॥ (रसेन्द्र चूड़ामणिः)

अ. ४. श्लो. ५१ ( र. र. स. अ. ८ श्लो. ३८ )

नागेन सह प्रायो वरनागः सम्भवति भूगर्भे; सोमदेवोक्तप्रकारेण गन्धश्च लोहेन मिलति नागश्च भस्मतामेति वरनागश्च मूषिकाधस्तिष्ठति-नीलाञ्जनादिति विभावनीयम् । वरनागप्रयोगेण "काला अजार" ज्वरः प्रतिनिवर्त्तते । तद्यथा-मन्धकेनास्य भस्म कृत्वा मात्रया देयः । अञ्जनं तीक्ष्णसंयुक्तं तत्समं टंकणं कुरु । अन्धमूषागतं ध्मातम्, वरनाग इति स्मृतः ॥ ( रससारे. प. ७ श्लो. ५ ) इति च ॥

---

१ Bismuth. २ Antimony.

### अग्निजारः (अम्बर)[1]

अग्निजारस्त्रिदोषघ्नो, धनुर्वातादिवातनुत् ।
वर्धनो रसवीर्य्यस्य दीपनो जारणस्तथा ॥ र. र. स. अ. ३ श्लो. १३६ ) ।

अग्निजारो नाम मत्स्यविशेषस्य शुष्का विट् । स हि यदा आनाह-रोगेण म्रियते गलति च तन्मांसं ततः पृथग्भूता विट् सागरतरङ्ग-क्षोभेण दक्षिणसागरस्य पश्चिमतटं लालसागरतटञ्च समाश्रयति ।

### मृद्दारश्रृङ्गम् ।

सीससत्वं गुरु श्लेष्मशमनं पुंगदापहम् ।
रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम् ॥ (र. र. स. अ. ३ श्लो. १४६) इत्युपरसाधिकारः ॥ २४४ ॥

शंख सब पीड़ाओं को दूर करता है । विशेषकर वस्तों में लाभकर है । यह शूल, अम्लपित्त, विष्टम्भ और प्रमेह को हरने वाला तथा अग्निदीपक है । मात्रा २ रत्ती ॥ २४४ ॥

## अथ स्वर्णादिशोधनम् ।

हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु ।
तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे ॥ २४५ ॥
तप्ततप्तानि सिञ्चेत तत्तद्द्रावे च सप्तधा ।
एवं स्वर्णादिलोहानि शुद्धिमायान्त्यसंशयम् ॥ २४६ ॥

---

१ Ambergris.

स्वर्णादिशोधनमाह—हेमादीति—१ शुद्धलोहं स्वराग्नौ न विकृतिमेति । पृष्ठे चाकचक्यम् गुरुता घनघातेन पत्राणि, आकर्षणेन सूत्राणि च भवन्ति, तापविद्युतोश्चालकत्वमपि धातु-सामान्यलक्षणानि ।

अथ धातूनां विशिष्टद्रवणाङ्काः ।

| | विशिष्ट गुरुत्वम् । | द्रवणाङ्काः । |
|---|---|---|
| सुवर्णस्य | १९. ४ | १०६४ |
| रजतस्य | १०. ५ | ९६० |
| ताम्रस्य | ९. ० | १०५७ |
| लौहस्य | ७. ७ | १५२० |
| नागस्य | ११. ४ | ३२५ |
| वङ्गस्य | ७. २८ | २३३ |
| यशदस्य | ७. १ | ४१० |

ग्राह्यसुवर्णलक्षणानि—दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् ।

तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत् ॥

यच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम् ।

दाहे छेदे सितं श्वेतं कषे त्याज्यं लघुस्फुटम् ॥

यद्घनाहतं स्फुटति तद्दलम् ।

तत्र सुवर्णरजतताम्रलौहानां शोधनार्थं पत्राणि चूर्णं वा क्रियते । नागवङ्गयशदा मनाग्गलितास्तैलादिषु निषिच्यन्ते । कांस्यं पित्तलं प्रकृतमेव, एवं लौहकिट्टम् । तैले तिलोद्भवे । तैलादीनां मात्रा च । मनाक् तप्तलौहपत्राणि द्विगुणे तद्द्रवे क्षिपेदिति—शोध्य-

द्रव्यमानाद् द्विगुणे त्रिगुणे वेति ज्ञेयम् । ततोऽधिकेऽपि न क्षतिः। तैलादिकं च प्रतिवारं नूतनं देयम् । कुलत्थजे=कुलथीत्याख्य-द्विदलधान्यक्वाथे । तप्ततप्तानि=एकवारं तप्तानि निषिक्तानि पुनस्तप्तानि निषिक्तानि चेत्यर्थः । विशेषज्ञास्तु—अग्नौ वह्निसमानि कृत्वा निषिञ्चेदित्याहुः । तत्तद्रावे=तैलतक्रादिद्रवपदार्थे, सप्तधा=सप्तवारम् । त्रिवारमिति शा. ध. । शुद्धिमायान्ति—मलनिर्मुक्ताः स्वनेः सहजातधात्वन्तरसंसर्गरहिताश्च भवन्ति । अन्यच्च तप्तानि सर्वलोहानि कदलीमूलवारिणि सप्तधाऽभिनिषिक्तानि शुद्धिमायान्त्यथोत्तमाम् । आ.वे.प्र. ।

अत्र केचित्---सुवर्णशोधनं न तैलतक्रादिषु,

किन्तु--सुवर्णमुत्तमं वह्नौ विद्रुतं निक्षिपेत्त्रिशः ।

काञ्चनाररसे शुद्धं काञ्चनं जायते भृशम् । आ.वे.प्र. ११-१८.।

रसरत्नसमुच्चये तु-तैले तक्रे, इत्युपक्रम्य 'स्वर्णादि लोहपत्राणां शुद्धिरेषा प्रशस्यते' इति तैलादिष्वपि स्वर्णशोधनमुक्तम् ।

॥ २४५-२४६ ॥

स्वर्ण, चांदी, तांबा आदि धातुओं से लेकर लोहे के मल तक सब का शोधन और मारण इस अधिकार में लिखते हैं—

इन स्वर्ण आदि धातुओं को आग में गरम कर तिलतैल, तक्र, गोमूत्र, कांजी तथा कुलथी के क्वाथ में सात २ वार बुझावे तो निःसन्देह शुद्धि होती है॥ २४५-२४६ ॥

सौख्यं वीर्यं बलं हन्ति नानारोगं करोति च ।
अशुद्धममृतं स्वर्णं तस्मात् शुद्धन्तु मारयेत् ॥ २४७ ॥

अशुद्धस्यामृतस्य च स्वर्णस्य सेवने दोषमाह—

सौख्यमिति सौख्यं सुखस्य भावः, वीरे साधु वीर्यम् अतिशयिताध्यवसायकरणसामर्थ्यम् । बलम् पराक्रमः (पारदे श्लो. ११०) अशुद्धं शोधनहीनम्, अमृतमसम्यक् मारितम् । अशुद्धं सम्यक् मृतमपि न योज्यमित्यर्थः । शुद्धन्तित्यत्र तु शब्दोऽवधारणे तेन शुद्धमेव मारयेदित्यर्थः ॥ २४७ ॥

अशुद्ध तथा बिना मरा स्वर्ण, सुख, वीर्य और बल का नाश करता है और नाना रोगों को उत्पन्न करता है। इसलिये शुद्ध स्वर्ण का ही भस्म करे ॥ २४७ ॥

मृत्तिकामातुलुङ्गाम्लैर्भावितं पञ्चवासरम् ।
सभस्मलवणैर्हेम शोधयेत् पुटपाकतः ॥ २४८ ॥

स्वर्णस्य विशेषशुद्धिमाह मृत्तिकेति--अत्र साधुपाठस्तु—

मृत्तिका मातुलुङ्गाम्लैः पञ्चवासरभाविता ।
सभस्मलवणा हेम शोधयेत्पुटपाकतः ॥ इति रसार्णवे ७-१०२

सभस्मलवणा=भस्मना सैन्धवेन च युता मृत्तिका=वल्मीकमृत्तिका मातुलुङ्गाम्लैः पञ्चवासरभाविता ततोऽनया मृत्तिकया कण्टकवेध्यानि हेमपत्राण्यालेप्य पुटपाकतः शोधयेत् । मृत्तिकेति कर्तृपदं हेमेति कर्म । पुटपाकत इति सार्वविभक्तिकस्तृतीयान्तात्तसिः । मूलपाठो रसार्णवादुद्धृतः प्रतिभाति ॥ २४८ ॥

वल्मीकमृत्तिका, राल, सेन्धानमक, इन्हें एकत्र मिला बजौरे के रस से ५ दिन भावना दे। इससे कण्टकवेध्य स्वर्णपत्र को लिप्तकर कुक्कुट पुट दें तो स्वर्ण शुद्ध हो जाता है। अथवा लेप करके शुष्क होने पर पुट दे॥ २४८॥

मतान्तरम्—

वल्मीकमृत्तिका धूमं गैरिकं चेष्टका पटु।
इत्येता मृत्तिकाः पञ्च जम्बीरैरारनालकैः॥ २४९॥
पिष्ट्वा लेप्यं स्वर्णपत्रं पुटेन तु विशुध्यति।
धारयेत् स्वर्णपत्रीभिस्त्रिदिनं पञ्चमृत्तिकाः॥ २५०॥

(इति स्वर्णशोधनम्)

उक्तार्थमेव तन्त्रान्तरोद्धृतेन प्रकारान्तरेण स्पष्टयति—बल्मीकेति—धूमं कृष्णमृत्तिका, गृहधूममित्यन्ये। पटु सैन्धवलवणम् आरनालकैः काञ्जिकैः। पुटेन=त्रिंशदुत्पल पुटेन। स्वर्णताररङ्गसीसकमारणे तावदेवाग्निः प्रदेयो यावता एते विद्रुता न भवेयुः। तदनु ताभिः स्वर्णपत्रीभिस्त्रिदिनं पञ्चमृत्तिका धारयेत्=पञ्चमृत्तिकामध्ये स्वर्णपत्रीः स्थापयेत्। एतेन स्वर्णं विशुद्धं जायते। अथर्ववेदे तु सुवर्णस्य हरित मिति नाम॥२४९-२५०॥

बमई की मिट्टी, गृहधूम, गेरू, ईंट का चूर्ण, लवण इन पांच मिट्टियों को जम्बीर के रस अथवा कांजी से पीसकर स्वर्ण पत्र को लीप ३० उपलों की पुट दे तो शुद्ध हो जाता है। तीन दिन तक पञ्चमृत्तिका स्वर्णपत्रों पर लगी रहने दे॥२४९-२५०॥

एवं शुद्धस्याऽपक्वसेवनस्य प्रकारद्वयम्—

अपक्वं हेम संघृष्टं शिलायां जलयोगतः।
द्रवरूपं तु तत्पेयं मधुना गुणदायकम्॥
यद्वापि तवका (वरका) ख्यन्तु स्वर्णपत्रं विचूर्णितम्।
मधुना संगृहीतं चेत् सद्यो हन्ति विषादिकम्॥
आ. वे. प्र. अ. ११-३२-३३

स्वर्ण कल्पे तु—

सर्वौषधिप्रयोगैर्ये व्याधयो न विनिर्जिताः।
कर्मभिः पञ्चभिश्चापि सुवर्णं तेषु योजयेत्॥
शिलाजतुप्रयोगैश्च ताप्यसूतकयोस्तथा।
अन्यै रसायनैश्चापि प्रयोगो हेम्न उत्तमः॥
यववृद्ध्या प्रयोक्तव्यम् ............ ॥ ग. नि.॥

काश्यप संहितायां च—

विघृष्य धौते दृषदि प्राङ्मुखी लघुनाम्बुना।
आमथ्य मधुसर्पिर्भ्यां लेहयेत्कनकं शिशुम्॥
सुवर्णप्राशनं ह्येतन्मेधाग्निबलवर्धनम्।
आयुष्यं मङ्गलं पुण्यं वृष्यं वर्ण्यं ग्रहापहम्॥
मासात्परममेधावी व्याधिभिर्न च धृष्यते।
षड्भिर्मासैः श्रुतधरः सुवर्णप्राशनाद्भवेत्॥
लेहाध्यायः पृ० ३ ॥ २४९-२५०॥

अथ स्वर्णमारणम्—

माक्षिकं नागचूर्णञ्च पिष्टमर्करसेन च।
हेमपत्रं पुटेनैव म्रियते क्षणमात्रतः॥२५१॥

इत्थं विशुद्धस्य सुवर्णस्य मारणमाह माक्षिक मिति–

लोहानां मारणं श्रेष्ठं सर्वेषां रस भस्मना।
मूलीभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः॥
अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम्॥ र. र. स. ५-१४॥
शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सप्तधातवः।
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा॥ र. इ. चि. ६-२०॥

शुद्धं माक्षिकं सुवर्णसमं, शुद्धं नागचूर्णंसुवर्णषोड-शांशमर्करसेनाऽर्कपञ्चाङ्गरसेन तद्दुग्धेन वा पिष्टं-मसृणीकृत मित्यर्थः। तेन कण्टकवेध्य शुद्धं हेम पत्रं प्रलिम्पेत्, ततः शरावसम्पुटे कृत्वा लघुपुटे [ त्रिंशद्वनोपलैः ] पुटेत्। त्रिवारमिति सम्प्रदायः। पुनस्त्रिवारं नागनिवृत्तये-नवसादरजम्बीररसेन पुटेत्॥ २५१॥

शोधित स्वर्णमाक्षिक चूर्ण तथा शुद्ध सीसे के चूर्ण को आक के रस वा दूध से पीस शुद्ध सोने के कंटकवेध्य पत्रों पर लेप कर एक पुट देने से ही स्वर्ण की भस्म हो जाती है॥ २५१॥

मतान्तरम्—

स्वर्णार्द्धं पारदं दत्वा कुर्यात् यत्नेन पिष्टिकाम्।
दत्त्वोर्ध्वाधो नागचूर्णं पुटेन म्रियते ध्रुवम्॥२५२॥

प्रकारान्तरमाह सुशुद्धमिति--सुवर्णेन=समानं सूतं त्रिदिनं मर्दयित्वा सुवर्णषोडशांशमूर्ध्वाधो नागचूर्णं दत्वा पूर्ववत्पुटेत्। सुशुद्ध-मत्रस्वर्णार्द्धमिति पीठिकामत्र पिष्टिकामिति पाठः॥ २५२॥

शुद्ध स्वर्णपत्र शोधित पारद समभाग खरल में डाल यत्नपूर्वक मर्दन कर शराव में आधा ऊपर आधा नीचे स्वर्ण का १६वां भाग शुद्ध सीसे का चूर्ण रखे और बीच मे स्वर्ण की टिक्की को रख सम्पुट कर पुटं दे तो स्वर्ण की भस्म हो जाती है ॥ २५२ ॥

मतान्तरम्--

गलितस्य सुवर्णस्य षोडशांशेन सीसकम् ।
योजयित्वा समुद्धृत्य निम्बुनीरेण मर्दयेत् ॥ २५३ ॥
गोलं कृत्वा गन्धचूर्णं समं दत्त्वाधरोत्तरम् ।
शरावसम्पुटे कृत्वा पुटेत् त्रिंशद्वनोपलैः ।
एवं मुनिपुटैर्हेम नोत्थानं लभते पुनः ॥ २५४ ॥

पुनः प्रकारान्तरमाह गलितस्येति—
मुनिपुटैः सप्तभिर्मृदुपुटैः । नोत्थानं लभते-म्रियतेइत्यर्थः ।

अत्र र. इ.चि. ।

'पुनः पुटेत्त्रिवारं तन्म्लेच्छतो नागहानये' । ६-२४ ॥ २५३-२५४ ॥

शुद्ध स्वर्ण को पिघलाकर उसका सोलहवाँ भाग शुद्ध सीसा डाल मिल जाने पर नीचे उतार ले और खरल में डाल नीबू के रस से भली प्रकार मर्दन कर गोला बनावे । गोले के समान शुद्ध गन्धक का चूर्ण ले । एक शराव में उस गन्धक को आधा नीचे और आधा ऊपर दें । बीच में गोले को रख दें । दूसरा शराव ऊपर देकर सम्पुट कर दें । इस शराव सम्पुट को तीस जङ्गली उपलों की आग दे । इस प्रकार नीबू के रस से मर्दन

कर गन्धक के साथ सात पुट देने से स्वर्ण भस्म फिर जीवित नहीं होता ॥ २५३-२५४ ॥

मतान्तरम्—

शुद्धसूतसमं स्वर्णं खल्ले कृत्वा तु गोलकम् ।
ऊर्ध्वाधो गन्धकं दत्त्वा सर्वतुल्यं निरुध्य च ॥ २५५ ॥
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्दश ।
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥ २५६ ॥

लोहानां सरसं भस्म सर्वोत्कृष्टं प्रकल्पयेत् इत्युक्तेः, सूतयोगेनोत्तमं सुवर्णभस्माह--शुद्धेति- कण्टकवेध्यानि शुद्धानि स्वर्णपत्राणि समानमानेन हिंगुलनिसृतपारदेन त्रिदिनं जम्बीररसेन मर्दयित्वा गोलं विधाय । सर्वतुल्यं-पारदसुवर्णतुल्यं शुद्धगन्धकं जम्बीररसेन मर्दितं वहिः प्रलिप्योर्ध्वाधो वा गन्धको देयः । निरुध्य सम्पुटे कृत्वा लघु पुटेत् । द्वितीयपुटादिषु-ईषत्पारदो देयः । बालुकायन्त्रे चेद्रससिन्दूरविधिनाऽस्य पाकः क्रियते तदोपरिस्थं रससिन्दूरमपि कार्यकारि भवति । निरुत्थमपुनर्भवम् । अत्र. आ. वे. प्र.—

अत्रानुक्तमपि ज्ञेयं गोलकीकरणे बुधैः ।
जम्बीरद्रवदानन्तु सर्वत्रैवं विनिश्चयः । ११-६० ।

प्रतिवारं गन्धो जम्बीरद्रवेण मर्दनीयः ॥ २५५-२५६ ॥

शुद्ध पारे के समान शुद्ध स्वर्ण ले खरल में घोट गोला बना दोनों के समान शुद्ध गन्धक ले शराव में ऊपर नीचे आधी आधी गंन्धक दे बीच में इस गोले को रख सम्पुट कर दे । फिर मध्यम

प्रमाण तीस जङ्गली उपलों की आग दे। इस प्रकार चौदह पुट देने से निरुत्थ स्वर्ण भस्म हो जाता है। इस में प्रत्येक वार गन्धक डालनी चाहिये ॥ २५५-२५६ ॥

अथ शुद्धस्वर्ण गुणाः—

कषायतिक्तमधुरं सुवर्णं गुरु लेखनम् ।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि ॥ २५७ ॥
आयुर्मेधावयःस्थैर्य-वाग्विशुद्धिस्मृतिप्रदम् ।
क्षयोन्मादगरार्णाञ्च कुष्ठानां नाशनं परम् ॥ २५८ ॥

( इति स्वर्ण मारणम् )

सुवर्णस्य गुणानाह—कषायेति-कषायं तिक्तं मधुर मिति रस-त्रययुतमित्यर्थः। गुर्विति—सर्वधात्वपेक्षयेत्यर्थः। हृद्यमिति-हृदयाय हितं हृद्यम्। चक्षुष्यं-चक्षुषे हितम्। कान्तिदं-सौन्दर्यकरम। आयुः-शरीरेन्द्रियसत्वात्मसंयोगः। मेधा-धारणा शक्तिः। वयस्थैर्य-वयोदाढ़र्य करम्। वाग्विशुद्धिः-अस्पष्टवाङ्निवर्त्तकम्। स्मृतिः-स्मरणम्। क्षयेति-क्षये गण्डमालायां च विशेषतः प्रयुज्यते। एवमान्त्रक्षये फिरङ्गतृतीयावस्थायामपि ज्ञेयम्। उन्मादेति-अपस्मारापतन्त्रकादि मानसरोगाणामुपलक्षणम्। गरः=कृत्रिमविषम्। परमिति प्रयोगो हेम्न उत्तम इत्युक्तः।

अत्र—एतद्भस्म सुवर्णजं कटुघृतोपेतं द्विगुञ्जोन्मितम् ।
लीढं हन्ति नृणां क्षयाग्निसदनं श्वासं च कासारुचिम् ॥
ओजो धातुविवर्धनं बलकरं पाण्ड्वामयध्वंसनम् ।

पथ्यं सर्वविषापहं गरहरं दुष्टग्रहण्यादिनुत् ॥
र. र. स. अ. ५--श्लो. १८ ।

मात्रा च--$\frac{१}{८}$ र. $\frac{१}{४}$ यववृद्ध्या प्रयोक्तव्यं हेम । आ.वे. प्र. ११-४० ।

चरके च विषनाशाय-शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ।
हेम सर्वं विषाण्याशु गरांश्च विनियच्छति ॥
हेमपस्य सजत्यङ्गे न हि पद्मेऽम्बुवद्विषम् ।
॥ चि. २५-२३६ ॥

अत्र विषनाशाय शाणप्रमाणा मात्रा निर्दिष्टा । सम्प्रति परीक्षका अपि सुवर्णस्य विषनाशनशक्ति साधु मन्यन्ते ।

सुश्रुते च-सुवर्णं स्वादु हृद्यं च बृंहणीयं रसायनम् ।
दोषत्रयघ्नं शीतं च चक्षुष्यं विषसूदनम् ॥ सू. ४६-१५ ॥
सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ।
मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम् ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा ।
हेमचूर्णानि कैटर्य्यः श्वेता दूर्वा घृतं मधु ॥
चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि ।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः ॥ शा. १०-६२ ॥

अत्र सुवर्णलवणम्—
विशोधितं पावकभागिकन्तु स्वर्णन्तु सत्काचशरावसंस्थम् ।
सुराप्रदीपे विनिधाय चाथ मन्दानलेनेह पचेद्रसज्ञः ॥
शनैः शनैः सन्ततमल्पमल्पं तुर्यांशसोराम्लकमिश्रितन्तु ।
क्षिपेद्विशुद्धं लवणाम्लभाराद्यावत्सुवर्णं द्रवतामुपैति ॥

द्रुतं सुवर्णन्तु विलोक्य शुद्धं दिग्भागिकं सिन्धुभवं क्षिपेच्च।
नारङ्गरङ्गन्तु जले विशुष्के सुवर्णपूर्वं लवणं हरेद्वै॥
ततः सुवर्णलवणं काचकुप्यां निधापयेत्।
अथनिर्दिष्टकार्येषु जले सन्द्राव्य योजयेत्॥ र. त. १५-३४॥

मात्रा चास्य १/४० र. १/२० र.। जले आसवादिषु विद्राव्य मधुमेह-फिरङ्गादिषु योज्या।

अथ रसजलनिधेः स्वर्णानुपानानि—

> मत्स्यपित्तस्य योगेन स्वर्णं तत्कालदाहजित्।
> भृङ्गयोगाच्च तद्दृष्यं दुग्धयोगाद्बलप्रदम्॥
> पुनर्नवायुत नेत्र्यं घृतयोगे रसायनम्।
> स्मृत्यादिकृत् वचायोगात् कान्तिकृत्कुंकुमेन च॥
> पयसा राजयक्ष्मघ्नं निर्विष्या च विषं हरेत्।
> शुण्ठीलवङ्गमरिचैस्त्रिदोषोन्मादनाशकृत्॥

अतिमात्रया सुवर्णप्रयोगे—वन्हिमान्द्यमतीसारः श्वासः पारदाति-योगे, इव लाला स्रवति न चात्र मुखपाकः। भक्षितं सुवर्णं मूत्रेण बहिर्निर्गच्छति। भारते सुवर्णखनिस्तु मैसूरराज्ये कोलाराख्या, मद्रासप्रान्ते अनन्तपुरखनिः। एवं संयुक्तप्रान्तादिनदीनां वालुकासु सुवर्णकणा भवन्ति।

सुवर्णविषये विशेषस्तु—र. र. आ. उ. ७ श्लोक ६। आ. वे. प्र. ११. ६। र. इ. चू. १४. २। र. र. स. ५—२। र. इ. चि. ६-२३। र. त. १५-६। र. प. श्लो. २१. टीका च। आ. कं. ७-५०। क्रि. क. वि. १. ५.। र. अ. ७-६८। भा. र. शा. प्रकरणे

३८ । र. का. वे. धातु संग्रह पादे २ ॥ २५७-२५८ ॥

॥ इत्यानन्दी टीकायां सुवर्णाधिकारः ॥

स्वर्ण भस्म कसैला, तिक्त, मधुर, भारी, लेखन, हृदय के लिये हितकारी, रसायन, बलदायक, चक्षुहितकारी, कान्तिदायक, पवित्र होता है। स्वर्ण आयु, मेधा, वयस् की स्थिरता, वाणी की शुद्धि और स्मृति का भी देने वाला है। क्षयरोग, उन्माद, गरविष तथा कुष्ठरोगों का परम नाशक है। भा. १ र० ॥ २५७-२५८ ॥

अथ शुद्धरजतलक्षणम्—

दग्धोत्तीर्णं सुशीतं यन्निर्मलं कुंदसन्निभम् ।
गुरु स्निग्धं कुमारञ्च तारमुत्तममिष्यते ॥२५९॥

रजतलक्षणमाह दग्धेति—

रजतस्य सुवर्णस्य च दलानि क्रियन्ते तानि च पर्णवीटिकानां मिष्टान्नादीनां च बहिरप्याध्रियन्ते, औषधादिषु च प्रयोगे प्रोक्तफलानि भवन्ति। दग्धोत्तीर्णमिति दग्धञ्च तदुत्तीर्णं दग्धोत्तीर्णम्=अग्नितापित मित्यर्थः तदनु सुशीतं शीतीकृतं सत् यन्निर्मलं मलशून्यमत एव कुन्दसन्निभं=कुन्दपुष्पसदृशशुभ्रं, शीतकाले हि कुन्दपुष्पाणि जायन्ते, अत एव कुन्दस्य माघे भवं माघ्यमिति पर्य्यायान्तरम्। गुरु=गौरवयुतं, कुमारं=मृदु-एवंविधं तारं=रौप्यमुत्तममौषधप्रयोगार्हम् भवति

रसार्णवे तु-शुक्लं च तारं कृष्णं च द्विविधं रजतं प्रिये । ७-१०३ । अत्र तारकृष्णं महारजतम् Platinum प्लाटीनम इति भा. र. शा. पृ. ४४१ ॥ २५९ ॥

चांदी अग्नि में दग्ध करने के पश्चात् शीतल होने पर कुन्द फूल के समान श्वेत एवं निर्मल हो, तथा जो भारी चिकनी और मुलायम हो वह उत्तम होती है ॥ २५६ ॥

अथ अशुद्धरजतदोषाः—

आयुः शुक्रं बलं हन्ति रोगसङ्घं करोति च।

अशुद्धञ्चामृतं तारं शुद्धं मार्य्यमतो बुधैः ॥२६०॥

अशोधितरजतस्य दोषानाह—आयुरिति—रोगसङ्घं=रोगसमुदायम्। अशुद्धं चामृतमिति=अशुद्धं मृतमपि न योज्यम्।

अपि च—घनं स्निग्धं मृदु स्वच्छं दाहे छेदे सितं गुरु।

शङ्खाभं मसृणं स्फोटरहितं रजतं शुभम् ॥

दाहे रक्तं च पीतं च कृष्णं रूक्षं स्फुटं लघु।

स्थूलाङ्गं कर्कशाङ्गं च रजतं[1] त्याज्यमष्टधा ॥

। र. इ. चू. १४-२६-३० ।

शुद्धरजतस्य तनुतराणि पत्राणि सूत्राणि च भवन्ति। नाऽशुद्धस्य।

उक्त गुणोपयुक्तं दोषरहितं च बुधैः रसशास्त्रकुशलैः मार्यं=भस्मीकरणार्थं योज्यम् ॥ २६० ॥

अशुद्ध तथा भलीभांति भस्म न किया चांदी आयु, वीर्य तथा बल का नाश करता है और अनेक रोगों का कारण होता है।

---

१ ताम्रयोगश्चेद्रजते शलाकया शोरकाम्लस्य बिन्दुक्षेपेण नीलहरितं चिह्नं भवति। रजतखनिस्तु बर्मा, मैक्सीको, पेरू, नार्वे, आष्ट्रेलिया दिषु, भारते च तत्र तत्राल्पमानेन लभ्यते।

इसलिये चांदी को शुद्ध करके ही मारना चाहिये ॥ २६० ॥

अथ रजतशोधनम्—

नागेन क्षारराजेन द्रावितं शुद्धिमृच्छति ।
रजतं, दोषनिर्मुक्तं किंवा क्षाराम्लपाचितम् ॥ २६१

( इति रजतशोधनम् )

रजतशोधनमाह नागेनेति[1]—तारं हि भूमौ केवलं तारमेवोत्पद्यते, अन्यत्र गन्धेन सहैकीभूत तदन्यत्र सुवर्णशीसकादिभिर्मिलितं प्राप्यते। यच्च शुद्धं लभ्यते तस्य क्षाराम्लपाचनाच्छुद्धिः। यत्र च धात्वन्तर संसर्गः तत्रनागेन=शीशकेन, क्षारराजेन=टङ्कणेन रजतसमानमानेन द्रावितं=मूषायां ध्मापितं शुद्धिमृच्छति=गच्छति। जातसीसक्षयं यावत् धमेत्तावत्पुनः पुनरित्युक्तेः । टङ्कणेन सह मूषायामतिशय-धमनात् नागो विलयं याति धात्वन्तरसंसर्गश्च नश्यति। सम्प्रति तु रजतविक्रेतॄणां ( सराफ ) विपणिषु 'नम्बरी चांदी' इति नाम्ना यल्लभ्यते तदेव मारणायोग्यम् ॥ २६१ ॥

चांदी को सीसा तथा सुहागे से मिलाकर पिघलावें तो शुद्ध हो जाती है। अथवा क्षार और अम्ल में पकाने से भी चांदी दोषरहित हो जाता है ॥ २६१ ॥

अथ रजतमारणम्—

माक्षिकं गन्धकञ्चैवमर्कक्षीरेण मर्दयेत् ।
तेन लिप्तं रूप्यपत्रं पुटेन म्रियते ध्रुवम् ॥ २६२ ॥

---

१ पूर्वार्धोऽस्य रसार्णवेऽपि दृश्यते। ७-१०४।

रजतमारणमाह— माक्षिकमिति—शुद्धं माक्षिकं गन्धकं च अर्कक्षीरेण मसृणं मर्दयेत् तेन रूप्यपत्रं कर्त्तर्या सूक्ष्मरूपेण कर्तितं चूर्णं वा लिप्तं मिश्रितं वा शरावसम्पुटे पुटेन त्रिंशद्वनोपलपुटेन—स्वर्णरूप्यवधे ज्ञेयं पुटं कुक्कुटकादिकम् ।

तास्रे काष्ठादिजो वह्निर्लोहे गजपुटानि च ॥ इत्युक्तेः पुटनप्रयोजनञ्च—रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।

नेष्टो न्यूनाधिकः पाकः सुपाकहितमौषधम् ॥
पुटनात् स्याल्लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
जारितादपि सूतेन्द्राल्लोहानामधिको गुणः ॥

आ. वे. प्र. ११-४५. ४६ ।

माक्षिकयोगादिदं यकृत्प्लीहादिषु विशेषेण योज्यम् ॥ २६२ ॥

स्वर्णमाक्षिक गन्धकचूर्ण सम भाग दोनों को आक के दूध से मर्दन कर शुद्ध चांदी के पत्तों पर लेप कर शरावसम्पुट में रख पुट दे । इसप्रकार पुट देने से चांदी की भस्म हो जाती है ।

पुनः पुटें देने में माक्षिक न डालें और केवल गन्धक से ही पुटें दें ॥ २६२ ॥

मतान्तरम्—

कण्टवेध्ये तारपत्रे दत्त्वा द्विगुणहिङ्गुलम् ।
पातयन्त्रे रसो ग्राह्यो रजतं मृतमुच्यते ॥ २६३ ॥

हिंगुलयोगेन सर्वोत्तमं तारभस्माह-कण्टवेध्ये इति-कण्टवेध्ये= कण्टकेन वेधनयोग्ये तारपत्रे-रौप्यपत्रे रौप्यद्विगुणं हिंगुलं दत्त्वा

केनचिदम्लेन मर्दयित्वा च पातयन्त्रे-ऊर्ध्वपातनयन्त्रे रससिन्दूर-वत् वालुकायन्त्रे पाकं कृत्वा रस ऊर्ध्वलग्नो ग्राह्यः। अधस्थं रजतं त्रिः पुनरपि पुटनीयम् ॥ २६३ ॥

काँटे से बींधने योग्य पतले चांदी के पत्र बना उसमें दुगुना हिंगुल मिला ऊर्ध्वपातन-यन्त्र में पकावे। ऐसा चार पांच बार करे। नीचे चांदी की भस्म मिलेगी। ऊपर के पात्र में पारा मिलेगा ॥ २६३ ॥

मतान्तरम्—

तालं गन्धं रौप्यपत्रं मर्दयेत् निम्बुकद्रवैः।
त्रिपुटैश्च भवेद्भस्म योज्यमेतद्रसादिषु ॥ २६४ ॥

प्रकारान्तरेण रोगविशेषे गुणकरं रजतभस्माह तालमिति—शुद्धं तालं गन्धं च रौप्यमानं निम्बुकरसेन मसृणं मर्दयित्वा तत्र रौप्यपत्रं चूर्णं वा दत्त्वा शरावसम्पुटे त्रिंशद्वनोपलैः त्रिः पुटेत्। एतद्भस्म च रसादिषु जयमङ्गलवृहद्वातगजांकुशादिषु योज्यम्। निम्बुकद्रवैरित्यम्लस्योपलक्षणम्।

एतदेव स्पष्टीकृतं यथा—

विधाय पिष्टिं सूतेन रजतस्याथ मेलयेत्।
तालं गन्धं समं पश्चान्मर्दयेन्निम्बुकद्रवैः ॥
त्रिंशैः पुटैर्भवेद्भस्म योज्यमेतद्रसादिषु।

सूतेन—समेनेत्यर्थः। अत्र सूतरक्षार्थं गन्धः पुनः पुनरधिको देयः।

र. इ. चि. ६. ३० ॥ २६४ ॥

शुद्ध हड़ताल, शुद्ध गन्धक, शुद्ध चांदी के पत्र, तीनों समभाग ले नीबू के रस से मर्दन कर तीन पुट दे। इससे चाँदी का भस्म हो जाता है। इसे सब रसादिकों में वर्ते॥ २६४॥

मतान्तरम्—

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम्।
मद्य जम्बीरजैद्र वैस्तारपत्राणि लेपयेत्॥ २६५॥
रुध्वा त्रिभिः पुटैः पाच्यं पञ्चविंशद्वनोपलैः।
म्रियते नात्र सन्देहो गन्धो देयः पुनः पुनः॥ २६६॥

किञ्च—तारपत्रमिति—तालकं जम्बीरद्रवेण विमर्द्य तेन तारपत्राणि लेपयेत्। शरावे च तारपत्राणामुपर्यधः तारमानं गन्धं दत्त्वा 'गन्धो देयः पुनः पुनः' इति गमकात्। सम्पुटं रुध्वा त्रिः पुटेत्। तालं तु प्रथमवारमेव देयम्। यद्यपि केवलगन्धकयोगेनापि तारभस्म सम्पद्यते तालादियोगस्तु विशेषगुणाधानाय॥ २६५-२६६॥

शुद्ध चांदी के पत्र चार भाग, शुद्ध हड़ताल एक भाग। हड़ताल को जम्बीरी के रस से घोट चाँदी के पत्रों पर लेप कर शुष्क होने पर पत्रों को शराव सम्पुट में रख २५ जङ्गली उपलों की आग दे। इस प्रकार तीन पुट देने से चांदी की भस्म हो जाती है। गन्धक प्रत्येक बार देना चाहिये॥ २६५-२६६॥

अथ शुद्धरजतगुणाः—

शीतं कषायं मधुरमम्लं वातप्रकोपजित्।
दीपनं बलकृत् स्निग्धं गुल्माजीर्णविनाशनम्।

आयुष्यं दीर्घरोगघ्नं रजतं लेखनं स्मृतम् ॥ २६७ ॥

( इति रजतमारणम् )

शुद्धस्य मृतस्य च तारस्य गुणानाह-शीतमिति--शीतत्वाद् गुटिकाऽस्य धृता वक्त्रे तृष्णाशोथविनाशिनी । आ. वे. प्र. ११-८४.। कषायं-कषायस्वादम् । मधुरमम्लं चेतित्रयोरसास्तारे । वातप्रकोपजित् इति पंगुकलायखञ्ज गृध्रसीध्वजभङ्ग, शुक्रदोषडर:पीड़ादिषु-अस्य विशेषेणोपयोगो भवति । वातघ्नमहालक्ष्मीविलासादावप्यस्योपयोगोस्ति । बलकृद्=बल्यम् । गुल्माजीर्णविनाशनम् गुल्मेति-यकृत्प्लीहादीनामप्युपलक्षणम् । अजीर्णे-यवानिकालवङ्गचूर्णेन देयम् ।

आयुष्यम्=आयुषे हितम् । दीर्घरोगघ्नम्=रजतयोगसाध्या ये दीर्घा-जीर्णा रोगास्तत्तद्रोगहारानुपानेन तान् हन्ति इत्यर्थः । यथा क्षयजश्वासक्लेशे रजतयोगात्काञ्चनाभ्रं प्रदीयते ।

यत्तु -रसपद्धति टीकायां-'अपकरजतं नैव योज्यं'''श्वेतकुष्ठकरं च तत् इत्युक्तं तत्प्राथिकम् । मिष्टान्नमोदकादिषु रजतपत्राणां बहुप्रयोगदर्शनात् । प्रमेहे विशेषत उष्णवाते फिरङ्गरोगे सुवर्णमिव चमत्करोति । स्निग्धं सरं वमनकरं वयः स्थापकं प्रमेहहरं वातपित्तनाशकं च । गन्धकयोगेन साधितमस्य भस्म कृष्णवर्णं तत्र शतभागे ८४ भागा रौप्यस्य १६ भागा गन्धस्याप्यवशिष्यन्ते । मात्रा ½-१ र. ॥ २६७ ॥

शुद्ध चांदी का भस्म शीतल कसैला मधुर खट्टा होता है। वायु के प्रकोप को जीतता है । दीपन और बलदायक है, स्निग्ध

है, गुल्म तथा अजीर्ण का विनाशक है, आयुवर्धक है, दीर्घ-काल से उत्पन्न रोगों को नाश करता है। लेखन ६ मात्रा आधी रत्ती से एक रत्ती ॥ २६७ ॥

अथ अशुद्धताम्रदोषाः—

न विषं विषमित्याहुस्ताम्रन्तु विषमुच्यते ।
एको दोषो विषे त्वष्टौ दोषास्ताम्रे प्रकीर्त्तिताः ।२६८।
भ्रमो मूर्च्छा विदाहश्च उत्क्लेदशोषवान्तयः ।
अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ।
तस्माद्विशुद्धं ताम्रं हि ग्राह्यं रोगोपशान्तये ॥२६९॥

क्रमप्राप्तं ताम्रमाह[१]—न विषमिति—तच्च द्विविधं नेपाल म्लेच्छ-भेदात् तत्र म्लेच्छं धात्वन्तरसंयोगात् कृष्णं कठिनम् । अपि च—

कृष्णं रूक्षमतिस्तब्धं श्वेतं चापि घनासहम् ।
लोहनागयुतं शुल्वं म्लेच्छं दुष्टं मृतौ त्यजेत् ॥

ग्राह्यं तु---जपाकुसुमसङ्काशं स्निग्धं मृदु घनक्षमम् ।
लोहनागोज्झितं ताम्रं नेपालं मृत्यवे शुभम् ॥

आ. वे. प्र. ११-१०७ ।

अपि च--शुकतुण्डकिंशुकाभं छेदे रक्तं तथा मृदुस्निग्धम् ।
तापे भवति न कृष्णं तच्छुल्वं कालिकारहितम् । र.का.धे. प्रा.२-३१६

इदञ्च ज्ञेयम्---चाकचक्ययुतातिशोणस्य ताम्रस्य घनघातेन पत्राणि, आकर्षणेन सूत्राणि च भवन्ति तापविद्युद्वाहकता च ।

१. अथर्ववेदे तु ताम्रस्य लोहितमय लोह इति नाम दृश्यते ।

ताम्रखनिस्तु कूर्माद्रिपर्वतस्य (कुमायूं) गंगोली प्रदेशे-राँई का लड़ा इत्याख्ये, एवं विहारप्रदेशस्य सिंहभूम, हजारीबाग मण्डले चास्ति। स्वर्णमाक्षिकात् तुत्थाच्चास्योत्पत्तिर्भवति।[1]

विषं न विषं ताम्रं तु विषमिति--विषापेक्षया ताम्रस्य बहुदोषकरत्वमेतेन प्रतिपादितम्। अतिमात्रसेविते विषे-एक एव मारणात्मको दोषः, अशुद्धामृतताम्रे तु भ्रमादयोऽष्टौ दोषाः-अतश्चिकित्सकैस्ताम्रस्य शोधनं मारणञ्च सावधानतया कर्त्तव्यमिति भावः। अतिमात्रया सेविते-अशुद्ध भस्म प्रयोगे च भ्रमादिषु शीतलं खण्डदुग्धसेवनं शीतलजलेन स्नानं प्रत्यहं कोष्ठशुद्धिस्त्रिफलादिना, गन्धकगुडूचीसत्वयोगश्च धारोष्णदुग्धेन। एवं सप्तदिनाभ्यन्तरे भ्रमादयोऽपगच्छन्ति। अन्येषां वमनविरेकविदाहक्लमस्वेदोत्क्लेशादीनां स्वं स्वं चिकित्सितम्॥ २६८-२६९॥

विष नाम से प्रसिद्ध द्रव्य विष नहीं हैं। परन्तु तांबा विष है। क्योंकि विष में तो एक ही दोष होता है परन्तु तांबे में आठ दोष हैं॥ २६८॥

भ्रम, मूर्च्छा, विदाह, देह का गीलापन, शोष, वान्ति, अरुचि, चित्तसन्ताप ये विषों के समान आठ दोष ताम्र में रहते हैं। अतएव रोगों की शान्ति के लिए विशुद्ध तांबा ही लेना चाहिए॥ २६९॥

---

१. तुत्थात्ताम्रनिश्कासन प्रकारस्तु तुत्थप्रकरणे प्रोक्तः।

अथ ताम्रशुद्धिः—

पटुना रविदुग्धेन ताम्रपत्राणि लेपयेत् ।
अग्नौ सन्ताप्य निर्गुण्डीरसे सिञ्चेत् पुनः पुनः ॥२७०॥

तस्य शोधनमाह पटुनेति---पटुना-सैन्धवेन, रविदुग्धेन-अर्क-दुग्धेन तत्पत्रस्वरसेन वा, कण्टकवेध्यानि ताम्रपत्राणि सूत्राणि चूर्णं वा लिप्तानि-मिश्रितानि वा-अग्नौ सन्ताप्य निर्गुण्डी रसे क्वाथे वा सप्तवारं सिञ्चेत् ॥ २७० ॥

सेंधानमक आक का दूध दोनों को मिला तांबे के पत्रों पर लेप करे। पत्रों को अग्नि में सन्तप्त कर सात बार निर्गुण्डी के रस में बुझावे। तांबा शुद्ध होता है ॥ २७० ॥

मतान्तरम्—

गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥ २७१ ॥
( इति ताम्रशोधनम् )

प्रकारान्तरेण शोधन माह गोमूत्रेणेति—त्रिदिनं लवणलिप्तं ताम्रपत्रं यामंप्रहरमात्रं दृढाग्निना-तीव्राग्निना पचेत् । ताम्रस्य शुद्धिः स्यात् ।॥ २७१ ॥

उत्तम ताम्रपत्रों को गोमूत्र में एक पहर तक तीव्र आंच से पकावें। इस से निःसन्देह तांबा शुद्ध हो जाता है। आगे मारने की विधि लिखते हैं ॥ २७१ ॥

अथ ताम्रमारणम्—

सूतमेकं द्विधा गन्धं यामं मर्द्यन्तु कन्यया ।

द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निरोधयेत् ॥२७२॥
सम्यक्शूरणजैः सार्द्धं पार्श्वे भस्म निधाय च ।
चतुर्यामं पचेच्चुल्ल्यां पात्रपृष्ठे सगोमये ॥ २७३ ॥
जलं पुनः पुनर्देयं स्वाङ्गशीतं विमर्दयेत् ।
म्रियते नात्र सन्देहः सर्वरोगेषु योजयेत् ॥ २७४ ॥

ताम्रस्य मारणमाह-सूतमिति—द्विधा गन्धं पारदस्यैको भागो गन्धस्य भागद्वयं कन्यारसेन प्रहरमेकं मर्दयित्वा तेन ताम्रपत्राणि लिप्त्वा सूरणजैः खण्डैश्चूर्णैर्वा सार्धं=सह स्थाल्यां सम्यग्निधाय पार्श्वे च तस्य सति सम्भवे चिञ्चात्वग्भस्म साधारणभस्म वा पूरयेत् । मुखं च स्थाल्या स्थालीमुखप्रवेशयोग्यपरिणाहपात्रेण पिधाय चतुर्यामं चुल्यां पचेत् । पात्रपृष्ठे=स्थालीमुखस्थपात्रपृष्ठे सगोमये गोमयेनालवालं विधायेत्यर्थः । तत्र पुनः पुनः जलं देयम् । उष्णं हेयम् । शीतजलार्द्रीकृतवस्त्रं वा देयम् । स्वाङ्गशीतं=चुल्यामेव क्रमेण स्वयं शीतम् । निर्वापयेत्--शूरणजैः, रोगेषु अत्र क्रमेण रोधयेत्, मृल्लवणैः, योगेषु इति पाठान्तराणि । शूरणयोगेन सहैवाऽमृतीकरणमपि भवत्यतः सर्वयोगेषु योजयेदित्युक्तम् ।
॥ २७२-२७४ ॥

पारद १ भा० गन्धक २ भा० की कज्जली को १ प्रहर घीक्वार के रस से मर्दन कर ३ भाग ताम्रपत्रों में लेप कर सूख जाने पर हांडी के भीतर तले में रख करके ऊपर सूरण के छोटे छोटे टुकड़े भर शूरण के चारों तरफ राख भर दे । फिर हाँडी के मुख

प्रवेश योग्य मुख वाली अन्य हाँडी से ढक्कन दे मुख बन्द कर आग में चार पहर पाक करे। पाक समय ऊपर की हांडी के ऊपर तल में गोबर से बाड़ बना ठण्डा जल बार बार दे गरम निकालता जाय स्वाङ्ग शीतल होने पर महीन पीस ले। यह ताम्र-भस्म शूरण के साथ चार प्रहर योग होने से अमृतीकृत हो गई। इसको सब प्रयोगों में दे ॥ २७२--२७४ ॥

मतान्तरम्—

जम्भाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापयशुल्वपत्रम्।
पङ्कायमानं पुटयेत्सुयुक्त्यावान्त्यादिकंयावदुपैति शान्ति २७५

प्रकारान्तरेण मारणमाह जम्भाम्भसेति—ताम्रतुल्यं गन्धकं सैन्धवं च जम्भाम्भसा=जम्बीरफलरसेन मर्दयित्वा तेन शुल्व-पत्रं=ताम्रपत्रं विलिप्य तच्च ताम्रपत्रं पङ्कायमानमेव स्थालिकातले-निधाय शरावेणाच्छाद्य ततस्तदुपरि वालुकां दत्त्वा यामचतुष्टयं विपचेत्। ततश्चूर्णयित्वा दधिक्षीर-घृतगोमूत्रगोमयरसेन पञ्चागव्यारव्येन यावद्वान्तिभ्रान्तिकरत्वमपगच्छेत् तावत्पुटेदिति सम्प्रदायः। पङ्कायमानमिति लिप्तं ताम्रपत्रं सूत्रं ताराणि वा आर्द्रा-वस्थायामेव स्थाल्यां स्थापयेदिति पङ्कायमानशब्दार्थः। अथवा वान्त्यादि दोषनिवृत्यर्थं शूरणकाथेन मर्दयित्वा गोलं विधाय शूरणान्तः कृत्वा बहिः पङ्केनालिप्य गजपुटे पचेत् शूरणकाथमर्दन-पुटदानेनापि वान्त्यादिर्रहितं भवति। ताम्रभस्मकरणे हि प्रकृत्यैव तत्र तुत्थमपि किञ्चिज्जायते ऽतस्तत् (ताम्रभस्म) जलेन प्रक्षालनीयं

यावन्नीलजलदर्शनम्, वान्तिभ्रान्तिरहितं भवति । पङ्क्यमान मत्र पक्वायमान मिति पाठोऽपपाठः ॥ २७५ ॥

सैंधानमक गन्धक ताम्रसमान ले जम्बीरी नीबू के रस से घोट ताम्रपत्रों पर लेप कर गोला ही युक्ति पूर्वक पुटपाक करे। पुनः जबतक वान्ति भ्रान्ति आदि दोष दूर न हों तब तक पूर्वोक्त विधि से पुट दे ॥ २७५ ॥

मतान्तरम्---

शुद्धं ताम्रदलं विमर्द्य पटुना क्षारेण जम्बीरजै-
र्नीरैर्घस्रमिदं स्नुगर्कपयसा लिप्तं धमेत् सप्तधा।
निर्गुण्ड्यम्बुहिमं रसेन्द्रकलितं दुग्धाज्यगन्धेन तत्
तुल्येनाथ मृतं भवेत् सुपुटितं पञ्चामृतेन त्रिधा॥२७६॥

रसयोगेनोक्तमं ताम्रभस्माह—शुद्धमिति—शुद्धं ताम्रदलं पटुना क्षारेण जीम्बीरजैर्नीरैर्घस्रं विमर्द्य-इदं स्नुगर्कपयसा लिप्तं निर्गुण्डयम्बुहिमं सप्तधा धमेत्। अथ रसेन्द्रकलितं तत् तुल्येन दुग्धाज्यगन्धेन त्रिधा पञ्चामृतेन सुपुटितं मृतं भवेदित्यन्वयः। पटुना क्षारेणेत्यत्र जातावेकवचनम्। तेन यथालाभमिलितैर्लवणै-स्त्रिक्षारैश्च यद्वा पटुना सैन्धवेन क्षारेण=यवक्षारेण, जम्बीरजै नीरैः=जलैर्घस्रमेकं दिनम् अत्यन्तसंयोगे द्वितीया। विमर्द्य-इदं विमृदितं स्नुगर्कपयसा स्नुहीदुग्धेन-अर्कदुग्धेन च लिप्तं निर्गुण्डयम्बुहिमं निर्गुण्डीरसे क्वाथे वा हिमं सिक्तमित्यर्थः सप्तधा सप्तवारं धमेत् । अथ सप्तवारन्निर्गु-

वडी काथसिक्तं तत् ताम्रदलं रसेन्द्रकलितं रसेन्द्रेण=सूतेन समान-मानेनार्धेन वा कलितं=युक्तम् । तुल्येन=ताम्रतुल्येन दुग्धाज्यगन्धेन दुग्धेनाऽज्येन=घृतेन गन्धेन=गन्धकेन पुटितमिति शेषः । तदनु त्रिधा=त्रिवारं पञ्चामृतेन=दुग्धशर्करादधिघृतमधुना, सुपुटितं= सम्यक् पुटितं मृतं भवेत् ।

अत्र हिममित्यन्तेन ताम्रस्य शुद्धिरभिहिता । रसेन्द्रकलित-मित्यादिना मारणम् ।

यथोक्तम्—

स्नुह्यर्कक्षीरलवणैस्ताम्रपत्राणि लेपयेत् ।
अग्नौ प्रताप्य निर्गुण्डीरसे संसेचयेत्त्रिशः ॥
स्नुह्यर्कक्षीरसेकैर्वा शुल्वशुद्धिः प्रजायते ।

॥ आ. वे. प्र. ११-११२ ॥

मृतताम्रलक्षणं च—

बर्हीकण्ठप्रभं ताम्रं मृतं भवति केवलम् ।
पिष्टं चूर्णत्वमायाति सरसं चेत्स चन्द्रिकम् ॥ इति तत्रैव ॥

समानपाठश्च—

त्रिः क्षारैः पटुभिः स्नुगर्कजनुषां क्षीरेण पिष्टैर्यथा ।
लाभं चाम्लगणद्रवेण दशधा ध्माता विलिप्यानले ॥
शेफालीसलिलेऽम्लवर्गसलिले निर्वापिता भूरिशः ।
पूर्वप्रक्रियया त्रिगन्धतुलिता भस्म स्युरर्कच्छदाः ॥

॥ र. प. २७ ॥

पूर्वप्रक्रियया—पूर्वश्लोकोक्तसंस्तरप्रक्रियया।
ब्रह्मदण्डीस्वरसेन पुटनाद्रक्तवर्णं भवति ताम्रभस्म।

अथ सोमनाथीय ताम्रम्—

शुल्वतुल्येन सूतेन वलिना तत्समेन च।
तदर्धांशेन तालेन शिलया च तदर्धया॥
विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसंनिभाम्।
यन्त्राध्यायविनिर्दिष्ट गर्भयन्त्रोदरान्तरे॥
कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत्।
प्रपचेद्यामपर्यन्तं स्वाङ्गशीतं समुद्धरेत्॥

अस्य गुणाः—

तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितम्।
संलीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरम्॥
गुल्मप्लीह यकृत्क्षयाग्निसदनं मेदश्च मेहामयम्।
दुष्टां संग्रहणीं हरेद्ध्रुवमिदं तत्सोमनाथाभिधम्॥

॥ र. का. धे.॥

स्वकृतसरलताम्रभस्म प्रकारः—ताम्रस्य तनूनि पत्राणि सूत्राणि[१] वा काचपात्रे ताम्रार्धगन्धकचूर्णेन मेलयित्वा निम्बूकरसेना प्लाव्याऽतपे प्रत्यहमालोडयन्नासप्तदिनं स्थापयेत् ततो गलितं ताम्रं शूरणकाथैस्त्रिः पुटेत्।

चक्रिकाः शूरणस्यान्तः खाते संस्थाप्य बहिर्मृदावलिप्य गजपुटदानाद्वा वान्त्यादिकं न करोति॥ २७६॥

१. सूत्राणि तु शुद्धस्य ताम्रस्यैव भवन्ति न तत्र धात्वन्तरसंसर्गः।

शुद्ध तांबे के पत्रों को नमक क्षार तथा जम्बीरी के रस से एक दिन मर्दन कर थोहर और आक के दूध से लिप्त कर आग में धौंकनी से तपा कर संभालू के रस में सातवार बुझाने के बाद ताम्र पत्र के समान शुद्ध पारा ले और उसके साथ मर्दन करे। पश्चात् तांबे के समान गन्धक के साथ घोटे। फिर गौ का दूध और घी पृथक् तांबे के समान ले मर्दन करे। जब सूख जाय तब पुट दें। इस प्रकार जब भस्म हो जाय तो तीन पुट पञ्चामृत से दे। यह ताम्र को निर्दोष भस्म होती है ॥ २७६ ॥

अथ शुद्धताम्रगुणाः

वान्तिभ्रान्तिविवर्जितं क्षयरुजाकुष्ठानि पाण्ड्वामयँ
शूलं मेहगुदाङ्कुरानिलगदान्युक्तानुपानै र्जयेत्।
गुञ्जामात्रमिदं ततो द्विगुणितं तच्छुद्धकायेन चेत्
भुक्तं स्थौल्यजराऽपमृत्युशमनं पथ्याशिना वत्सरात्
॥ २७७ ॥

( इति ताम्रमारणम् )

ताम्रभस्म सूक्ष्मकृष्णवर्णं जले न विलीयते किन्तु वारिणि हंसवत्तरति।

ताम्रस्य प्रकारविशेषः—

पलोन्मितस्य शुल्वस्य सूक्ष्म पत्राणि कारयेत्।
तत्समं गन्धकं दत्त्वा खल्वे सर्वं विनिक्षिपेत् ॥

जम्बीररससंयुक्तं दिनं घर्मे निधापयेत् ।
ततः शुल्वे द्रवीभूते रसकर्षं नियोजयेत् ॥
तत्सिद्ध मुदरे योज्यं शोफे चैव भगन्दरे ।
नाम्नातूदरमार्तण्डो रस एष प्रकीर्त्तितः ॥

र. र. स. १६-३०-३२।

ताम्रभस्मगुणानाह-वान्तीत्यादिः—वान्तिर्वमनं, भ्रान्ति श्चक्रारूढस्यैव भ्रमणं, ताभ्यां विवर्जितं रहितम्. पाण्ड्वामयं=पाण्डुरोगं रक्तविकृतिरूपम्। गुदांकुरा=अर्शांसि, अनिलगदा=पक्षाघातादयो वातकृताः। उक्तानुपानैः=तत्तद्रोगहरानुपानैः। गुञ्जामात्रमिति=एकगुञ्जामात्रयेत्यर्थः।

जनपदोध्वंसकरूपेण प्रसृतविषूचिका निवारणाय स्वस्थेन प्रातः ½ र. मात्रया प्रत्यहं सेव्यम्। विषूचिका[1] रोगिभ्यस्तु यथोक्तरसोनपलाण्डुलवङ्गादिभिरन्यैश्च तत्तदुपद्रवहरानुपानैरल्पमात्रयाऽर्धघटिकाकालेन सत्यावश्यके रससिन्दूरादिना सह च देयम्।

वैज्ञानिका अपि ताम्रं विषूचिका बीजनाशनमिति कथयन्ति। सञ्जाते मौक्तिकज्वरे[2] प्रथमतो यथासमये वा प्रत्यहं त्रिः ताम्राभ्रप्रयोगे प्रायो न प्रादुर्भवन्ति तदुपद्रवाः। हृद्बलाधानशक्तिश्च ताम्रस्याचिन्त्या। स्पष्टीकृतं चैतदस्माभिः प्रतिसंस्कृतनिदानस्य मौक्तिकप्रकरणे।

ग्रन्थिकज्वरे (PLAGUE) रत्तिकाष्टमांशमात्रया षड्डुत्तर-

---

१. CHOLERA. २. TYPHOID.

शतं गतेऽपि तापे निगुण्डीधान्यकहिमानुपानेन घण्टाद्वयं मर्यादीकृत्य दत्तं ताम्रभस्म सन्तोषाय समभवत्। अन्यत्र रससिन्दूरस्य २. र.। अभ्रस्य १ र. ताम्रस्य १ र.। सर्वस्याष्टौ मात्रा हृद्व्यापत्तौ विशेषतोऽस्य प्रयोगः।

तदन्यत्र--गुडूची विल्वत्वक् गोक्षुर तुलसी मुस्तक काथानुपानेन ग्रन्थिकज्वरे ताम्रस्य प्रयोगो विशेषकार्यकरः। ग्रन्थौ च पुनः पुनः धत्तूरनिम्बवल्कलरसोनानां लेपः। इति टीकाकृतोऽनुभवः। विशेषस्त्वत्र महामारीपुस्तकाज्ज्ञेयः।

ज्वालामुखी--प्रलेपे ज्वालाकरत्वात्। जलधनियां, काश्यान्तु देवकांडर इति भाषा, या प्रायः शीते जलासन्नदेशे पीतपुष्पा स्फुटितचाकचक्ययुतपत्रा प्रायो हस्तमात्रोन्नता चर्वणे च कटुतरास्वादा भवति, अस्याः पानेन, लेपेन च ग्रन्थौ, बहवो रोगिणः ग्रन्थिकज्वरनिर्मुक्ता इति वाराणसीस्थस्य महात्मनो चौवे जी महोदयस्यानुभवः तदन्यैश्च समर्थितः। ज्वालामुखी रसानुपानेन च विशिष्टं फलति महामार्यामिति जनश्रुतिः। रसायनार्थं तु--शुद्धकायेन कृतपञ्चकर्मणा पथ्याशिना ततो द्विगुणितं=द्विरक्तिमात्रयेत्यर्थः, भुक्तं चेत् स्थौल्यजराऽपमृत्यु शमनं=स्थौल्यस्य=स्थूलतायाः, जरायाः=वृद्धत्वस्य, अपमृत्योः=अकालमृत्योः, शमनं=नाशनं वत्सराद्भवति॥ २७७॥

वान्ति भ्रान्ति से रहित ताम्रभस्म को भिन्न भिन्न रोगनाशक अनुपानों के साथ सेवन करने से क्षयरोग, कुष्ठ, पाण्डुरोग, शूल, प्रमेह, बवासीर के मस्से, वायु के रोग दूर होते हैं। ताम्रभस्म को देह

का संशोधन कर एक रत्ति से क्रमशः दो रत्ति तक बढा पथ्य सहित एक वर्ष तक सेवन किया जाय तो स्थूलता, बुढ़ापा और अकाल मृत्यु दूर होते हैं ॥ २७७॥

ताम्रमुष्णं गरहरं यकृत्प्लीहोदरापहम् ।
क्रिमिशूलामवातघ्नं ग्रहण्यर्शोऽम्लपित्तजित् ॥२७८॥

पुनरपि गुणानाह-ताम्रमिति—उष्णमिति उष दाहे, ओषति= दहतीति उषेः कर्तरि 'इणसिञ्' इत्यादिना नक् । यकृत्प्लीहोदरापहं= वृद्धे यकृति प्लीहि च मृदु यकृद्विरेचनेन त्रिफलादिना प्रयुक्तं चमत्करोति । गुल्मे च एकगुञ्जामात्रया पर्णपत्ररसेन । अम्लपित्त-जित् इति धात्रीचूर्णानुपानेन अम्लपित्ते प्रयोज्यम् ।

रसायनं, रक्तजननं, जीवाणुनाशकं, श्वासहरं, सङ्कोचकृत्, अल्पमात्रया हृद्यम्, अधिकमात्रया उभयतो दोषहरम् । आमाशयस्य अन्त्राणाञ्च श्लैष्मिककलया शोषितं सूक्ष्मरूपेण, विशेषेण यकृति प्लीहि वृक्कयोश्चाल्पमात्रया दृश्यते । यकृतो वृक्काभ्यां, लालया अन्त्रग्रन्थिभ्यश्च बहिर्निगच्छति । मात्रा $\frac{1}{8}$-$\frac{1}{2}$ र. । वमनार्थं १० र. मात्रया मधुना युज्यते । स्वच्छन्दभैरव, सूर्यावर्त्त, हृदयार्णव, पञ्चानन रसादिषु युज्यते । ताम्रस्य विशेषगुणानुपानानि च ग्रन्थान्तरेभ्यो ज्ञेयानि ॥ २७८ ॥

इति ताम्रम्

ताम्रभस्म गरम है, कृत्रिम विष को दूर करता है, जिगर वा तिल्ली को दूर करता है । क्रिमि शूल, आमवात, ग्रहणी, बवासीर और अम्लपित्त को दूर करता है ॥ २७८ ॥

अथ पित्तलकांस्ययोः शोधनादिकम्-

पित्तलञ्च तथा कांस्यं ताम्रवन्मारयेत् पृथक् ।
ताम्रवच्छोधनं तेषां ताम्रवद् गुणकारकम् ॥२७६॥

[ इति पित्तलकांस्यशोधनमारणम् ]

ताम्रप्रभवत्वात् पित्तलकांस्ये-आह-पित्तलमिति—ताम्रस्य भागद्वयमेको भागो यशदस्य द्वयं मिलितं पित्तलं भवति, अत एव रुद्रयामले—'शुल्वखर्परसंयोगे जायते पित्तलं शुभ'मित्युक्तम् ।

रीतिका युगलं रूक्षं सतिक्तं लवणं सरम् ।
शोधनं पाण्डुरोगघ्नं कृमिघ्नं लेखनं हिमम् ॥
अष्टभागेन ताम्रेण द्विभागखुरकेण च ।
विद्रुतेन भवेत्कांस्यं तत्सौराष्ट्रभवं शुभम् ॥

र. र. स. अ. ५. २०५ ।

कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम् ।
रूक्षं गुरु च चक्षुष्यं कफपित्तहरं परम् ।

यशदप्रकरणेऽपि पित्तलविधानमुक्तम् । ताम्रस्य यशदस्य ये गुणास्ते पित्तले ज्ञेयाः । ताम्रवङ्गयोर्मिलिता गुणाः कांस्ये ज्ञेया इति ताम्रवच्छब्दार्थः । मा० ½ र. । रीतिविषये विशेषस्तु. र. का. धे द्रष्टव्यः धा. सं र. ॥ २७६ ॥

पित्तल तथा कांसे को तांबे के समान ही भस्म करे तथा तांबे के समान ही उनका शोधन करे । इनके गुण भी तांबे के समान ही हैं । मा० ½ र. ॥ २७६ ॥

अथ नागवङ्गयोः शोधनम्—

नागवङ्गे च गलिते रविदुग्धेन सेचिते ।
त्रिवारान् शुद्धिमायातः सच्छिद्रे हण्डिकान्तरे ।२८०।

नागवङ्गशोधनमाह—नागवङ्गे इति-पूर्वं तैलतक्रादिके शोधयित्वा पुनः नागवङ्गे गलिते कृत्वा त्रिः, रविदुग्धेन रविदुग्धा-भाव-अर्कपत्ररसेन सेचयेत् । इत्थमत्र प्रक्रिया-नागवङ्गे नातिद्रुते कृत्वा हण्डिकायामर्कदुग्धं दत्त्वा हण्डिकामुखे सच्छिद्रमावरणं च दत्त्वा-आवरछिद्रद्वारेण (नलिकया वा छिद्रयुक्तया) अर्कदुग्धे प्रक्षिपेत् । अतितप्तं प्रकाशसिक्तं च चिटचिटायते दहति चोड्डीय सेक्तुरङ्गानीति-अत उक्तम् सच्छिद्रे हण्डिकान्तर इति ।।२८०।।

नागवङ्ग को आग में पिघला आक के दूध में सींचें । इस प्रकार तीन वार सींचने से ये शुद्ध हो जाते हैं । सींचने से पूर्व एक हांडी में आक का दूध डाल दें और उसके मुख पर सछिद्र भारी शराव रखें । छिद्र में से इन्हें दूध में डालें । नहीं तो वे उछल कर बाहर आते हैं और हाथ मुँह आदि को जला देते हैं ।। २८० ।।

मतान्तरम्—

वङ्गं चूर्णोदके स्विन्नं यामार्द्धेन विशुध्यति ।।२८१।।

(इति नागवङ्गशुद्धिः)

वङ्गशोधनस्य प्रकारान्तरमाहवङ्गमिति—चूर्णोदके = सुधा चूर्णजले-प्रस्थमितजले द्वितोलं सुधाचूर्णमवाप्य आलोड्य च घटिकानन्तरमुपरिस्थं स्वच्छं चूर्णोदकं गृहीत्वा तेन वङ्गमत्रायामार्धयामं दोलायन्त्रे स्वेदयेत् ।। २८१ ।।

रांग के अत्यन्त बारीक पत्र को चूने के जल में दोलायन्त्र से आधा पहर तक स्वेदन करें तो शुद्ध हो जाता है ॥ २८१ ॥

अथ सीसकमारणम्—

भूभुजङ्गमगस्तिश्च पिष्ट्वा पत्रं प्रलेपयेत् ।
तत्र संविद्रुते नागे वासापामार्गसम्भवम् ॥ २८२ ॥
क्षारं विमिश्रयेत् तत्र चतुर्थांशंगुरूक्तितः ।
प्रहरं पाचयेच्चुल्ल्यां वासादर्व्या च चालयेत् ॥२८३॥
तत उद्धृत्य तच्चूर्णं वासानीरेण मर्दयेत् ।
( पुटेत्पुनः समुद्धृत्य तेनैव परिमर्दयेत् )
एवं सप्तपुटैर्नागं सिन्दूरं जायते ध्रुवम् ॥ २८४ ॥

नागमारणमाह—भूभुजङ्गमिति—नीलाञ्जनान्मृद्दार-शृङ्गादपि नागोत्पत्तिर्भवति । खनिश्चास्य ब्रह्मदेशस्य बौडविन-मण्डलेऽस्ति ।[1]

परिचयः—नागो हि मलिनश्वेतवर्णो नखेन कर्तितुं शक्यते, घर्षणेन पत्रे कृष्णरेखां करोति घनघातेन पत्राणि स्फुटन्ति वातयोगे न कोप्यस्य विशेषो भवति, अशुद्धजले ईषद् द्रवति तज्जलपानेन संधिपीडापक्षवधशूलादयो बहुविधा रोगा भवन्ति । भूभुजङ्गो=भूनागः, अगस्तिर्मुनिद्रुमः तत्पर्णरसम् द्वयमपि मिश्रयित्वा पत्रं=नागपत्रं प्रलेपयेत् । नागे सम्विद्रुते=गलिते

१. GALENA काला सुर्मा इति भाषा

वासापामार्गाभ्यां सम्भवो निष्पत्तिर्यस्य तं क्षारं चतुर्थांशं=द्वयं मिलितं नाग चतुर्थांशं गुरूक्तिशोऽल्पाल्पतया विमिश्रयेत्। प्रहरमिति-यावताऽखिलं भस्मीभवति तावतेत्यर्थः । वासा-दार्व्या=वासा दण्डेन । भस्मीभूतञ्च शरावेण पिधाय तीव्राग्निना दहेत् । तदनु स्वाङ्गशीते च वासानीरैर्मर्दनं पुटनं च एवं सप्तपुटैः=सप्तवारपुटदानेन सिन्दूरं=सिन्दूरवर्णम् । रसमञ्जरीत उद्धृतेऽस्मिन्पाठे आ. वे. प्रकाशे तु-भूभुजङ्गमगस्ति च पिष्ट्वाऽहेः पत्रमादिहेदिति समानः पाठः । एवं र. र. आ. पिष्ट्वाऽगस्तिञ्च भूनागम्'''इति पाठः ॥ ८.८६ ॥ २८२-२८४ ॥

भूनाग और अगस्ति के पत्र को पीस मृत्पात्र को लिप्त कर उस पात्र में सीसे को पिघला समभाग बांसा अपामार्ग के क्षार सीसे के चतुर्थांश चुटकी २ भर छोड़ते जावें । नीचे से आग दे साथ ही बांसे के डण्डे से सीसे को हिलाते जावें। एक पहर आग दे चुकने के पीछे जब सीसे का भस्म हो जावे तब नीचे उतार कर उस चूर्ण को बांसे के रस से मर्दन कर पुट देवें। इस प्रकार सातवार करने से सिन्दूर के समान लाल रंग की सीसे की भस्म प्राप्त होगा. ॥ २८२--२८४ ॥

अन्यमतम्—

त्रिभिः कुम्भीपुटैर्नागो वासारसविमर्दितः ।
सशिलो भस्मतामेति तद्रजः सर्वमेहजित् ॥ २८५ ॥

प्रकारान्तरेण नागमारणमाह—त्रिभिरिति-कुम्भीपुटैः=गजपुटैः

सार्धसप्तशतवनोपलपुटैरित्यर्थः । सशिलोऽष्टमांशशुद्धमनःशिलाचूर्णयुतः, सम्पुटस्थइत्यपि ज्ञेयम् । मात्रा च ¼-½ र. । सर्वमेहजित् इति मेहे धात्रीरसानुपानेन देयः ॥ २८५ ॥

शुद्ध सीसा और शुद्ध मनसिल समभाग ले बांसे के रस से मर्दन कर तीन वार गजपुट दे, इससे सीसा भस्म हो जाता है। यह भस्म सब प्रकार के प्रमेहों को दूर करता है ॥ २८५ ॥

दशनागबलं धत्ते वीर्य्यायुःकान्तिवर्द्धनम् ।
मेहान् हन्ति हतं नागं, सेव्यं वङ्गञ्च तद्गुणम् ॥ २८६ ॥

दशेति—नागोऽत्र हस्ती । नागगुणान् वंगेऽतिदिशति । वङ्गञ्च तद्गुणमिति–तद्गुणं=नागगुणम् ॥ २८६ ॥

सीसे की भस्म को सेवन करने से दश हाथियों का बल होता है, वीर्य आयु तथा कान्ति की वृद्धि होती है, **प्रमेह** नष्ट होते हैं। बङ्ग भस्म सेवन के भी ये ही गुण हैं ॥ २८६ ॥

अथ शुद्धनागगुणाः—

तारस्य रञ्जनो नागो वातपित्तकफापहः ।
ग्रहणीकुष्ठगुल्मार्शः शोषव्रणविषापहः ॥ २८७ ॥

[ इति नागमारणम् ]

नागगुणानाह तारस्येति—तारस्य रौप्यस्य रञ्जनः, एतत्तु वादप्रकरणे द्रष्टव्यम् । शोषे=अन्त्रक्षये वरुणत्वक् क्वाथेन व्रणे च क्लिन्नव्रणे शुष्कचूर्णं देयम् । अन्यत्र घृतेन लेपः कार्यश्चमत्करोति ।
॥ २८७ ॥

वासापामार्गाभ्यां सम्भवो निष्पत्तिर्यस्य तं क्षारं चतुर्थांशं= द्रव्यं मिलितं नाग चतुर्थांशं गुरूक्तिसोऽल्पाल्पतया विमिश्रयेत्। प्रहरमिति-यावताऽखिलं भस्मीभवति तावतेत्यर्थः । वासा-दार्व्या=वासा दण्डेन । भस्मीभूतञ्च शरावेण पिधाय तीव्राग्निना दहेत् । तदनु स्वाङ्गशीते च वासानीरैर्मर्दनं पुटनं च एवं सप्तपुटैः=सप्तवारपुटदानेन सिन्दूरं=सिन्दूरवर्णम्। रसमञ्जरीत उद्धृतेऽस्मिन्पाठे आ. वे. प्रकाशे तु-भूभुजङ्गमगस्ति च पिष्ट्वा-ऽहेः पत्रमादिहेर्दिति समानः पाठः। एवं र. र. आ. पिष्ट्वाऽगस्तिञ्च भूनागंम्'''इति पाठः ॥ ८.८६ ॥ २८२-२८४ ॥

भूनाग और अगस्ति के पत्र को पीस मृत्पात्र को लिप्त कर उस पात्र में सीसे को पिघला समभाग बांसा अपामार्ग के क्षार सीसे के चतुर्थांश चुटकी २ भर छोड़ते जावें । नीचे से आग दे साथ ही बांसे के डण्डे से सीसे को हिलाते जावें। एक पहर आग दे चुकने के पीछे जब सीसे का भस्म हो जावे तब नीचे उतार कर उस चूर्ण को बांसे के रस से मर्दन कर पुट देवें। इस प्रकार सातवार करने से सिन्दूर के समान लाल रंग की सीसे की भस्म प्राप्त होगा. ॥ २८२--२८४ ॥

अन्यमतम्—

त्रिभिः कुम्भीपुटैर्नागो वासारसविमर्दितः ।
सशिलो भस्मतामेति तद्रजः सर्वमेहजित् ॥ २८५ ॥

प्रकारान्तरेण नागमारणमाह—त्रिभिरिति-कुम्भीपुटैः=गजपुटैः

सार्धसप्तशतवनोपलपुटैरित्यर्थः । सशिलोऽष्टमांशशुद्धमनःशिला-चूर्णयुतः, सम्पुटस्थइत्यपि ज्ञेयम् । मात्रा च ¼-½ र. । सर्वमेह-जित् इति मेहे धात्रीरसानुपानेन देयः ॥ २८५ ॥

शुद्ध सीसा और शुद्ध मनसिल समभाग ले बांसे के रस से मर्दन कर तीन वार गजपुट दे, इससे सीसा भस्म हो जाता है। यह भस्म सब प्रकार के प्रमेहों को दूर करता है ॥ २८५ ॥

दशनागबलं धत्ते वीर्य्यायुःकान्तिवर्द्धनम् ।
मेहान् हन्ति हतं नागं, सेव्यं वङ्गञ्च तद्गुणम् ॥ २८६ ॥

दशेति—नागोऽत्र हस्ती । नागगुणान् वंगेऽतिदिशति । वङ्गञ्च तद्गुणमिति–तद्गुणं=नागगुणम् ॥ २८६ ॥

सीसे की भस्म को सेवन करने से दश हाथियों का बल होता है, वीर्य आयु तथा कान्ति की वृद्धि होती है, प्रमेह नष्ट होते हैं। बङ्ग भस्म सेवन के भी ये ही गुण हैं ॥ २८६ ॥

अथ शुद्धनागगुणाः—

तारस्य रञ्जनो नागो वातपित्तकफापहः ।
ग्रहणीकुष्ठगुल्मार्शः शोषव्रणविषापहः ॥ २८७ ॥

[ इति नागमारणम् ]

नागगुणानाह तारस्येति—तारस्य रौप्यस्य रञ्जनः, एतत्तु वाद-प्रकरणे द्रष्टव्यम् । शोषे=अन्त्रक्षये वरुणत्वक् क्वाथेन व्रणे च क्लिन्नव्रणे शुष्कचूर्णं देयम् । अन्यत्र घृतेन लेपः कार्यश्चमत्करोति । ॥ २८७ ॥

सीसा चांदी को रँग देता है। वात पित्त और कफ दोष को दूर करता है। ग्रहणी कुष्ट गुल्म बवासीर शोथ व्रण तथा विषों का नाशक है।

नाग की भस्म जो मनःशिला वा गन्धक के संयोग से की जाती है वही सर्वोत्तम जाननी चाहिए॥ २८७॥

अथ वङ्गमारणम्—

वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन सम्पुटेत्।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां नयेत्॥ २८८॥

वङ्गमारणमाह—वङ्गमिति-वङ्गं द्विविधं खुरकं मिश्रकं चेति, अत्र मिश्रके नागगन्धताम्रलोहसोमलानां योगः खनेरेव भवति। विक्रेतारस्तु पुनरपि नागमत्र मेलयन्ति, तन्नागयुतं श्यामशुभ्रकं त्वरितं द्रवति कालिकायुतम्। खुरकं च धवलं मृदुलं स्निग्धं छेदे च चाकचक्ययुतं निःशब्दं द्रुतद्रावं सगौरवमाघातेन वर्धनीयं (अस्य पत्राणि भवन्ति न तु सूत्राणि) सीसकात्कठिनं कर्तितुं शक्यम् न चात्र जलेन वायुना वा कश्चिद्विशेषो भवति, अतो लोह ताम्रपित्तलादिपात्रेषु ऊष्णीकृतेषु नवसादरचूर्णं प्रक्षिप्य तत्र द्रुत वङ्गस्य प्रलेपनं ततो वस्त्रेण प्रोञ्छनम्। मिश्रकलेपस्तु कालान्तरेण श्यामायते तल्लेपकृतपात्रस्थपदार्थसेवनं बहुरोगकरम्। शुद्धं वङ्ग समानं शुद्धतालमर्कस्य=रवेः=दुग्धेन पिष्ट्वा तेन वङ्गपत्राणि प्रलिप्य सम्पुटे कृत्वा शुष्कैरश्वत्थस्य=पिप्पलवृक्षस्य भवैः, वल्कैः= त्वग्भिः, सप्तधा=सप्तवारम्। भस्मतां नयेत्॥ २८८॥

शुद्ध वङ्ग शुद्ध हड़ताल को समभाग ले आक के दूध से पीस उस पर पीपल वृक्ष की सूखी छाल का सम्पुट दे कर पुट दे। इस प्रकार सात वार में वङ्ग की उत्तम भस्म हो जाती है। भांग के पत्तों का, इमली वा पीपल कीं छाल का चूर्ण पुराने कपड़े के टुकड़े में विछा उसमें वङ्ग के पत्र रख ऊपर से भी चूर्ण डाल लपेट बत्ती बनाकर जलाने से स्वच्छ बङ्ग भस्म होती है। यह बङ्गभस्म का सरल प्रकार है। रससिन्दूर की कज्जली के साथ बङ्ग मिलाने से शीशी के तले में जो बङ्गभस्म मिलती है वह उत्तम है।

बर्त्तन में कलई। बर्त्तन को गरम कर नौसादर का चूर्ण फेर दे ऊपर से पिघला राङ्ग फेर कर फिर रगड़ कर पोंछने से कलई हो जाती है॥ २८८॥

अपामार्गोद्भवंचूर्णं तत्तुल्यं तत्र मेलयेत् ॥ २८९ ॥
स्थूलाग्रया लौहदर्व्या शनैस्तदभिमर्दयेत् ।
यावद्भस्मत्वमाप्नोति तावन्मर्द्यन्तु पूर्ववत् ॥ २९०॥
ततस्त्वेकीकृतंचूर्णं कृत्वा चाङ्गारवर्जितम् ।
नूतनेन शरावेण रोधयेच्च भिषग्वरः ।
पश्चात् तीव्राग्निना पक्वं वङ्गभस्म भवेद् ध्रुवम् ।२९१।

प्रकारान्तरेणाह—अपामार्गेति—द्रुते वंगे-अपामार्गोद्भवं चूर्णं क्षारं वा तत्तुल्यं—वङ्गतुल्यम् क्वचिच्चतुर्थांशापामार्गचूर्णदानविधिः। स्वल्पं स्वल्पं तत्र शनैः शनैः क्षिपन् स्थूलाग्रलौहदर्व्या—अभितो

मर्दयेत् । भस्मीभूते चैकीकृतं चूर्णं शरावेण पिधाय तीव्राग्निं दद्यात् वङ्गभस्म भवेत् । ततः सम्प्रदायात्-पुनः पुनः जलेन प्रक्षाल्य संशोष्य च शरावसम्पुटे कृत्वा तीव्राग्निना पचेत् यावद्वारितरं पुनः पुटेत् ॥ २८६--२६१ ॥

विशुद्ध वङ्ग के पत्रों को हांडी वा कड़ाही में रख आग पर पिघला समान भाग अपामार्ग का चूर्ण थोड़ा थोड़ा डालता जावे और लोहे की कड़छी से--जिसका अगला भाग मोटा हो-,धीरे धीरे मर्दन करता जाय। जब सम्पूर्ण भस्म हो जाय अपामार्ग के अङ्गारे न रहें तब इस भस्म को एकत्र कर एक नये शराव से ढक दे और नीचे तीव्र आग दे तो निश्चय वङ्गभस्म हो जाती है ॥ २८६ --२६१ ॥

मतान्तरम्—

वङ्गं खर्परके कृत्वा चुल्ल्यां संस्थापयेत् सुधीः ।
द्रवीभूते पुनस्तस्मिन् चूर्णान्येतानि दापयेत् ॥ २६२ ॥
प्रथमे रजनीचूर्णं द्वितीये च यमानिकाम् ।
तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम् ॥ २६३ ॥
अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिक्षिपेत् ।
एवं विधानतो वङ्गं म्रियते नात्र संशयः ॥ २६४ ॥

पुनः प्रकारान्तरेणाह—वङ्गमिति–खर्परके=कटाहे वा कृत्वा द्रवीभूते च रजन्यादिचूर्णं मिलितं वङ्गतुल्यं क्रमेण स्वल्पं स्वल्पं क्षिपन् दर्व्या चालयेत् । भस्मीभूते च शरावेण पिधाय तीव्राग्नि

दद्यात्। रजनी=हरिद्रा, यवानी=अजवायन इति, जीरकं=श्वेतजीरकम्। अथ सम्प्रदायात् वङ्गचतुर्थांशतालं दत्त्वा निम्बूकरसेन कन्यकारसेन वा दृढ़ं विमर्द्य चक्रिकां कृत्वा पिप्पलत्वक्चूर्णगर्भिते शरावसम्पुटे कृत्वा सप्तधा पुटेत्। तालन्तु प्रथमवारमेव देयम्।

अत्र त्रिलोहम्--शरावे नागवङ्गौ च रसकं प्रक्षिपेत्तथा।
ध्मात्वा चिरं द्रवीभूतं तदूर्ध्वं च मुहुर्मुहुः।
राजवृक्षत्वचश्चूर्णं विकिरेत्तेन मर्दयेत्।
इत्थं मुहुश्चिरं कुर्वन् त्रिलोहं भस्म जायते॥
रसकौमुदी २-२१॥

भस्मीभूते च शरावेण पिधानमधस्तीव्राग्निदानं च पूर्ववत्। पश्चात् आरग्वधत्वक्क्वाथेन मर्दनं तत्त्वक्चूर्णगर्भितंशरावसम्पुटे कृत्वा गजपुटदानात् चतुर्दशपुटैः, पीतं भस्म भवति। अर्धरक्तिमात्रया मधुना प्रातः सायं देयम्। त्रिभिर्दिनैर्मूत्रं प्रसादयति मधुमेहेप्युपयुज्यते।

अपिच—कासश्वासक्षयो रक्तपित्तं कुष्ठं प्रमेहकः।
आबाल्यं वह्निमांद्यं च मुक्त्वा गच्छन्ति रोगिणम्॥
र. सार.। ३-५।

आरग्वधत्वग्वन्निम्बपत्रैरपि त्रिलोहभस्म सम्पद्यते।

अन्यत्त्रिलोहम्--पञ्चविंशतिः स्वर्णस्य तथा रौप्यस्य षोडश।
ताम्रस्य दशभागाश्च त्रिलोहं मिलिता मतम्।
त्रिलोहं सर्वदोषघ्नं परमेव रसायनम्।
पाचनं दीपनं चैव सर्वव्याधिविनाशनम्॥

शोधनं मारणं च सुवर्णवत् ।
रक्तिकामानतो भस्म त्रिलोहस्य यथाविधि ।
सर्पिर्मधुवराव्योषसंयुक्तं यस्तु सेवते ।
पथ्याशी नियतं प्रातर्दीर्घायुः स सुखी सदा ।
वलीपलितनिर्मुक्तो भजते विपुलांश्रियम् । र. ज. ख. ३. अ. ३.

सुवर्णवङ्गम्—वङ्गस्य १२ भा. सूतस्य ६ भा. गन्धस्य ७ भा. नरसारस्य ६ भा. केचिन्मते सोरकस्य १ भा. ।

प्रक्रिया—द्रुते वङ्गे सूतं दत्त्वा विमृद्य तच्चूर्णं खल्वे कृत्वा सैन्धवजलेन विमर्दयेत् दिनद्वयं त्रिश्चतुर्वा मलिनं सैन्धवजलमपाकुर्यात् ततः शुष्के च गन्धादिकं दत्त्वा कज्जलीं विधाय वालुकायन्त्रे पाकः । निःशेषे च दुर्गन्धिवायौ तापमात्रा वर्धनीया, शलाकयाऽन्वेषिते सुवर्णवर्णे सति स्वाङ्गशीतलं काश्मीरकान्तिचाकचक्ययुतमङ्गुलीरेखाग्राहि मृदुभस्म यज्जले न विलीयते भवति मलिनं कठिनं च न युक्तम् । कूपिकागले च रससिन्दूरम् । एतच्च रसायनं बल्यं सौन्दर्यस्मृतिशक्तिकरं शुक्रजनकमग्निदीपनं मेहहरम् । मात्रा च १-२. र. तत्तदनुपानैः । कण्ठशालूकजन्यवधिरतायामपि भवत्यनेन लाभः । ध्वजभङ्गनाशाय बलाय च लज्जालुमूलचूर्णेन, तृष्णानिवारणाय आमलकीरसेन, स्मृतिवृद्ध्यर्थं ब्राह्मी-रसेन, प्रमेहे हरिद्रास्वरसेन, शुक्रमेहे सुरप्रिय (शीतलचीनी) चूर्णेन, श्वेतप्रदरे रक्तचन्दनक्वाथेन काकजङ्घारसेन वा ।

वङ्गभस्मनः सरलः प्रकारः—

तिलपिण्याकपिष्टेन कुर्याद्वाराहकं पुटम् ।

भस्मसाद्भवद्वङ्गं नानाकार्यार्थसाधकम् ॥ पारदयोगशास्त्रम् १-८४ । चिञ्चात्वक्चूर्णं विजयापत्रचूर्णं वा जीर्णवस्त्रखण्डे प्रसार्य तनूनि वङ्गपत्राणि तच्चूर्णेन सम्पुटीकृत्य गोलं विधाय दहेत् शुभ्रं भस्म भवति । ततस्तालयोगेन निरुत्थं कुर्यात् । मा. $\frac{1}{2}$–१ र. ।

॥ २६२-२६४ ॥

शुद्ध वङ्ग को कड़ाही में रख चूल्हे में पिघलावे । पिघलने पर आगे कहे हुए चूर्ण क्रमशः छोड़ता जाय । लोहे की कड़छी से हिलाता जाय । पहले हल्दी का चूर्ण, फिर अजवायन का चूर्ण, फिर श्वेत जीरे का चूर्ण, फिर इमली की छाल का चूर्ण और फिर पीपल वृक्ष की छाल का चूर्ण ॥ २६२–२६४ ॥

गुणाः—

वङ्गं तिक्ताेष्णकं रूक्षं किञ्चिद्वातप्रकोपणम् ।
मेदःश्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥२६५॥

( इति वङ्गमारणम् )

वङ्गभस्मगुणानाह वङ्गमिति—

तिक्ताम्लकमिति— तिक्तं च- अम्लं चेति-अल्पे ५-३-८५. इति अल्पार्थे कन् । किञ्चित्-ईषत्-वातप्रकोपणं रूक्षत्वादिति भावः । मेहनाशनमिति प्रमेहहरमित्यर्थः ।

यथा— सिंहो यथा हस्तिगणं निहन्ति ।
तथैव वङ्गो ऽखिलमेहवर्गम् ॥

'वङ्गं भक्षयतो नरस्य न भवेत्स्वप्नेऽपि शुक्रक्षयः' । इत्यादि वाक्यानि वङ्गप्रशस्तिपराणि । प्रमेहे मधुयुतेन गुडूचीसत्वेन

स्वरसेन वा, वीर्यपुष्ट्यर्थं लघुशाल्मलीमूलचूर्णेन विदारीमूलचूर्णेन वा । उष्णवाते-सुरप्रियफलचूर्णेन इत्यादिः, तत्तद्रोगहरानुपानैर्योज्यम् । विशेषस्तु अत्र ग्रन्थान्तरेभ्यो ज्ञेयः। तिक्ताम्लक्षमत्र तिक्तोष्णकमिति पाठान्तरम् ॥ २६५ ॥

वङ्गभस्म तिक्त, गरम रूक्ष है । कोष्ठ में वात का कुछ प्रकोप करता है । मेद और श्लेष्मा के रोगों का नाशक है क्रिमि और प्रमेह को दूर करता है ॥ २६५ ॥

अथ लौहशोधनादिकम्—

तप्तानि सर्वलोहानि कदलीमूलवारिणि ।
सप्तधा त्वभिषिक्तानि शुद्धिमायान्त्यनुत्तमाम् ॥२६६॥

क्रमप्राप्तं लौहमाह—तप्तानीति—लौहस्य प्रधान खनिजानितु गैरिक $F_2O_3$. चुम्बक-$Fe_3O_4$. रौप्यमाक्षिक $FeS$. विमल । $FeS_2$ स्वर्णमाक्षिकानि $CuFeS_2$. तत्र गैरिकं--गैरिक, स्वर्णपाषाणपीत-कपिलभेदेन पञ्चविधं लौहस्य प्रधानं खनिजमिति । लौहस्य द्रवणाङ्क १५०० क्वथनाङ्के २६५० प्रागप्युक्ते ।

सर्वलोहानि—'मुण्डं तीक्ष्णञ्च कान्तं च त्रिप्रकारमयस्मृत'-मिति त्रिविधानि--एषु यथोत्तरं गुणाधिक्यम् । सरलशोधनप्रकारोऽयं स्वर्णादिसर्वलोहानि कदली=मोचा (केला) तन्मूलवारिणि=तत्कन्दस्वरसे, तप्तानि=उष्णीकृतान्यग्निवर्णानीत्यर्थः, सप्तधा=सप्तवारं, अभिषिक्तानि=निषेचितानि, अनुत्तमाम्=सर्वोत्तमां, शुद्धिमायान्ति । इत्थमत्र प्रक्रिया तिलोत्सेधानि द्व्यंगुल—विस्तृतानि-

लोहपत्राणि-अष्टगुणे निमज्जन मात्रे वा कदलीरसे तप्तानि निषेचयेत्। कदलीस्वरसस्तु प्रतिवारं नवीन एव योज्यः। एवं तैलतक्रादिश्वपि-ज्ञेयम्। अद्यत्वे तु जीर्णशस्त्रादेः शाणाकृष्टं चूर्णं चुम्बकेन मलात्पृथक् कृत्य व्यवहरन्ति॥ २९६॥

सब लोहों को गरम कर केले की जड़ के रस में सात बार बुझायें तो वे उत्तम शुद्ध हो जाते हैं॥ २९६॥

क्वाथ्यमष्टगुणे तोये त्रिफला षोडशं पलम्।
तत्क्वाथे पादशेषे तु लौहस्य पलपञ्चकम्॥ २९७॥
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत्।
एवं प्रलीयते दोषो गिरिजे! लौहसम्भवः॥ २९८॥

(इति लौहशोधनम्)

प्रकारान्तरेण लौह शोधनमाह क्वाथ्यमिति—लौहस्य तच्चूर्णस्य पत्राणां वा पलपञ्चकं=पञ्चपलं यत्र शोधनीय तत्र त्रिफलायाः षोडशं पलमष्ट गुणे तोये-अष्टाविंशत्युत्तरशतपले क्वाथ्यं=क्वथनीयम्। पादशेषे=चतुर्थांशाऽवशिष्टे द्वात्रिंशत्पल इत्यर्थः। तत्क्वाथे पत्राणि=तिलोत्सेधसमानि लौहपत्राणि तप्तानि=अग्निवर्णानीत्यर्थः। कृत्वा सप्तवारं=सप्तधा निषेचयेत्। हे गिरिजे? एवं लोहसम्भवो=लोह-स्थितो दोषः प्रलीयते=नश्यति। क्वाथ्यमष्टगुणे-इत्यत्र-त्रिफलाष्टगुणे-इति बहुपुस्तकसम्मतोऽपि पाठोऽसम्बद्धत्वादपपाठ एव। गिरिजे-अत्र-गिरिज इति बहुपुस्तकसम्मतः पाठः॥ २९७—२९८॥

सोलह पल त्रिफला लेकर उसमें १२८ पल पानी डाले और इसे

मिट्टी के पात्र में पका कर शेष ३२ पल रहने पर छान ले। यह त्रिफलाक्वाथ है। इसमें लौह के पत्र पाँच पल लेकर गर्म करके सात वार बुझावे। ऐसा करने से हे पार्वति! लोहे का दोष दूर हो जाता है॥ २९७-२९८॥

भानुपाकात् तथा स्थालीपाकाच्चपुटपाकतः।
निरुत्थो जायते लौहो यथोक्तफलदो भवेत् ॥२९९॥

अथापि सरलप्रकारः—

चिञ्चापत्रजलक्वाथादयो दोषमुदस्यति।
यद्वा फलत्रयोपेतं गोमूत्रे क्वथितं खलु॥

शोधनानन्तरं निरुत्थीकृतस्यैव लौहस्य प्रयोगः फलदो भवति, अतः तदुपायानाह भानुपाकादिति--भानोः=सूर्यस्य प्रखरकिरणैः त्रिफलाक्वाथादौ यत्र लोहस्य पाकः क्रियते स भानुपाकः। एवं स्थाल्यामग्निना त्रिफलाकाथादौ पाकः स्थालीपाकः। पुटपाकः-- रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम्, तत्र पाकः=महापुटादौ पाकः, भानुपाकादिभिः लौहो निरुत्थोऽपुनर्भवो जायते॥ २९९॥

भानुपाक, स्थालीपाक, पुटपाक से लोहे की निरुत्थ भस्म यथोक्त फल देने वाली होती है॥ २९९॥

अथ भानुपाक विधि---

लौहे दृषदि लौहस्य मुद्गरेण हतं मुहुः।
कृत्वाम्बुगलितं शुद्धं जलेन त्रैफलेन वा॥ ३००॥
क्षालयेद्बहुशः पश्चात् कृत्वा द्रव्यान्तरं पृथक्।
शोषितं भानुभिर्भानोर्भानुपाके प्रयोजयेत्॥ ३०१॥

भानुपाकविधानमाह लौहमिति—भानुपाकार्थं लौहस्य चूर्णं कर्तव्यम् तत्प्रकारः प्रदीयते। लौहं पूर्वं त्रिफलादिना शोधितं लोहनिर्मिते खल्वे, लोहसदृशदृढे दृषदि, कृष्णपाषाणे वा लौहस्य मुद्गरेण=लोहमुशलेन मुहुः=पुनः पुनः, हतं=ताड़ितं चूर्णीकृतमिति यावत्। ततोऽम्बुना जितं त्रैफलेनाऽनुपदोक्तविधिना कृतेन त्रिफला-जलेन बहुशोऽनेकवारं क्षालयेत्। पश्चात् द्रव्यान्तरंलौहातिरिक्तं मलं लौहात्पृथक् कृत्वा भानोः=सूर्यस्य, भानुभिः=किरणैः शोषितं लौहचूर्णं भानुपाके प्रयोजयेत् ॥ ३००-३०१ ॥

लोहे में या पत्थर में लोहे की मूसली से लोह को बार बार कूट कर पानी में डाल अथवा त्रिफला क्वाथ में डाल अनेक वार धो लोहे में जो अन्य द्रव्य मिले हों उनको निकाल धूप में सुखा कर भानुपाक करे। लोहे को धोने और भानु पाक के लिए भी त्रिफला लोहे के समान ली जाती है क्वाथ में जल दुगुना डाल चौथा हिस्सा शेष रखे। इस प्रकार त्रिफला का क्वाथ और जल अनेक वार डाल निरन्तर तीन दिन धूप में सुखावे या लोहे में त्रिफला का क्वाथ अनेक वार दे वैद्य धूप में ७ वार लोह को सुखा ले ॥ ३००--३०१ ॥

क्षालने, भानुपाके तु लौहतुल्यं फलत्रिकम्।
जलं द्विगुणितं दत्त्वा चतुर्भागावशेषितम् ॥ ३०२ ॥

भानुपाके क्वाथार्थं त्रिफलामानमाह -क्षालन इति—भानुपाके कर्त्तव्ये लौहतुल्यं--यत्परिमाणस्य लौहस्य पाकः करणीयः तत्तुल्यं फलत्रिकं=त्रिफला ग्राह्या तत्र जलं त्रिफलाद्विगुणितं-दत्त्वा चतुर्भागा-

वशेषितं चतुर्थांशमवशिष्टं यथा-पञ्चपललौहे साध्ये पञ्चपला त्रिफला ग्राह्या जलस्य दशपलानि देयानि अवशेषञ्च सार्धद्विपलम् एवं क्षालने=लौहप्रक्षालनेऽपि ज्ञेयम् ॥ ३०२ ॥

लोहे के धोने के लिए भानुपाक में तो त्रिफलाक्वाथ बनाने को लोहे के समभाग ही त्रिफला लें, उसमें दुगुना जल डालकर क्वाथ करें। जब चौथाई जल बच जावे तो उतार लें ॥ ३०२ ॥

एवमुक्तं फलक्वाथ-जलं दत्त्वा पुनः पुनः ।
शोषयेत् सूर्यतेजोभिर्निरन्तरमहस्त्रयम् ॥ ३०३ ॥

भानुपाककालनियममाह—एवमिति--उक्तं पूर्वोक्तप्रकारेण कृतं फलक्वाथजलं=त्रिफलाक्वाथपानीयं पुनः पुनर्दत्त्वा निरन्तरं=अवसानमदत्वैव, अहस्त्रयं=त्रिदिनम्, सूर्यतेजोभिः=सूर्यकिरणैः शोषयेत्। ॥ ३०३ ॥

इस प्रकार से बने त्रिफला के क्वाथ को छान लोहे में डाल पुनः २ तीन दिन निरन्तर सूर्य की किरणों से सुखावें ॥ ३०३ ॥

अथवा तत्र तत्क्वाथं दत्त्वा दत्त्वा भिषग्वरः ।
सप्तसप्तिकरैरेव सप्तवारान् विशोषयेत् ॥ ३०४ ॥

( इति भानुपाकविधिः )

भानुपाकस्य प्रकारान्तरमाह--अथवेति-तत्र=लौहे तत्क्वाथमुक्त-त्रिफलाक्वाथं सप्तवारान् दत्त्वा सप्त सप्तयोऽश्वा यस्य सः तस्य सूर्यस्येत्यर्थः करैर्विशोषयेत् सप्तसप्तिकरैः ॥ ३०४ ॥

इति भानुपाकः ।

अथवा वैद्य इसप्रकार के बने त्रिफला के क्वाथ को ही लोहे में डाल धूप में सुखावे इसप्रकार सात बार करे ॥ ३०४ ॥

अथ स्थालीपाकविधिः—

इत्थमादित्यपाकान्ते स्थाल्यां पाकमुपाचरेत् ।
स्थालीपाके फलं ग्राह्यमयसस्त्रिगुणीकृतम् ।
तस्य षोडशिकं तोयमष्टभागावशेषितम् ॥ ३०५ ॥
मृदुमध्यकठोराणामन्येषामयसा समम् ।
क्वथनीयं समादाय चतुरष्टौ च षोडश ॥ ३०६ ॥
गुणानां स्थाप्यते तोयं शेषयेदयसा समम् ।
स्वरसस्यापि लौहेन स्थालीपाके समानता ॥३०७॥

इत्थमिति-आदित्यपाकान्ते=कृते भानुपाके स्थाल्यां=हण्डिकायां लौहकटाहेऽपि भवत्येव, पाकमुपाचरेत्=कुर्यात् । स्थालीपाके च फलं=त्रिफला, अयसः=साध्यस्य लौहस्य त्रिगुणीकृतं=त्रिगुणं, यथा-पञ्चपललौहे साध्ये पञ्चदशपलानि त्रिफलाया ग्राह्याणि, तस्य=त्रिफलायाः, षोडशिकं=षोडशगुणं तोयं=जलं दत्त्वा विपाच्याष्टभागावशेषितमष्टमांशमवशिष्टं तोयं जलं (क्वाथः) ग्राह्यम् त्रिफलातिरिक्तद्रव्याणां क्वाथे नियममाह मृद्विति-अन्येषां त्रिफलातिरिक्तानां द्रव्याणां क्वथनीयं=क्वाथ्यद्रव्यमयसा=लोहेन समं समानं समादाय तोयं च तत्र मृदूनां क्वथनीयस्य चतुर्गुणं मध्यानामष्टगुणं कठोराणां षोडशगुणं तोयं दत्त्वा क्वाथं विपाच्य अयसा समं=लोहमानं शेषयेत् ॥ ३०५-३०७ ॥

इसप्रकार भानुपाक के बाद स्थालीपाक करे। स्थालीपाक में लोहे से तिगुनी त्रिफला लेवे। उससे सोलह गुणा पानी डाल पकावे शेष आठवां भाग बचने पर उतार ले।

त्रिफलासे अन्य औषधियों का स्थालीपाक करना हो तो लोहे के समान ले। जो मृदु द्रव्य हों उनमें चार गुणा, मध्यम द्रव्यों में आठ गुणा तथा कठोर द्रव्यों में सोलह गुणा पानी डाल पकावें क्वाथ लोहे के बराबर शेष रखे। यदि किसी औषध का स्वरस लेना हो तो वह भी लोहे के समान ही लिया जाता है ॥३०५-३०७॥

स्थाल्यां क्वाथादिकं दत्त्वा यथाविधि विनिर्मितम्।
पाकेन क्षीयते यस्मात् स्थालीपाक इति स्मृतः ॥३०८॥

स्थालीपाके स्वरसेन कर्त्तव्ये लौहेन समानता कार्या। स्थालीपाकनिरुक्तिमाह-स्थाल्यामिति-क्वाथादिकमादिपदाल्लौहं बोध्यम्। यथाविधि=यथाशास्त्रं विनिर्मितं=कृतं पाकेन क्षीयते=शुष्यति, यस्मादतः स्थालीपाक इति स्मृतः=कथितः ॥ ३०८ ॥

लोहे के साथ यथाविधि बने त्रिफला आदि औषधियों के क्वाथ स्वरस आदि को यतः हांडी में डाल आग पर पका कर क्षीण कर दिया जाता है इसीलिये स्थालीपाक कहते हैं ॥ ३०८ ॥

हस्तिकर्णपलाशस्य मूलञ्च शतमूलिका।
भृङ्गकेशाख्यराजाश्च ह्येषां निजरसैः पृथक् ॥ ३०९ ॥
मिलित्वा वा विधातव्यः स्थालीपाकः फलादनु।
यथादोषौषधेनापि स्थालीपाको विधीयते ॥ ३१० ॥

( इति स्थालीपाकविधिः )

त्रिफलाक्वाथेन स्थालीपाकानन्तरं पाकद्रव्याण्याह हस्तिकर्णेति-फलात् = त्रिफलाक्वाथस्थालीपाकात्-अनु = पश्चादेव हस्तिकर्ण-पलाशस्य=हस्तिकर्णवत् पलाशं पत्रं यस्य तस्य मूलम्, शतमूलिका= शतावरी, भृङ्गराजाख्यराजानां श्वेतकृष्णपुष्पभेदेन द्विविधस्यापि भृङ्गराजस्येत्यर्थः। एषां त्रयाणां निजरसैः स्वरसैः सह = साकं मिलित्वा वेति-पृथक् पृथग् वा, स्थालीपाको विधातव्यः। तत्र मिलित-पक्षेऽपि पृथक् पृथक् स्वरसानामभयसा साम्यम्। यथादोषौषधेन = दोषमनतिक्रम्य यथादोषम्। वातपित्तकफ--द्विदोषादि- दोषहर-वक्ष्यमाणैरण्डादिगणौषधेनापि यथायथं क्वाथेन स्वरसेन वा लौहसमेन स्थालीपाको विधीयते = क्रियते, सच त्रिफलाहस्ति कर्णपलाशादिपाकानन्तरमेव विधेयः॥ ३०६-३१०॥

इति स्थाली पाकः।

स्थालीपाक में सबसे प्रथम त्रिफला के क्वाथ से लोहे का पाक किया जाता है फिर हस्तिकर्णपलाश की जड़ के रस से, अनन्तर शतावरी के रस से, और पश्चात् भांगरा और केशराज के रस से पाक करना चाहिये। इन पृथक् २ वा एकत्र सब रसों को लोहे में डाल पाक करे। यदि बनायी जाने वाली लौहभस्म को किसी दोषविशेष में प्रयोग करना होतो उस दोष को नाश करने वाले द्रव्यों के रस से भी स्थालीपाक कर लेना चाहिये॥ ३०६—३१०॥

अथ पुटपाकविधिः—

स्थालीपाके सुसंपक्वं प्रक्षाल्य स्वच्छवारिणा।
शुष्कं सञ्चूर्ण्य यत्नेन पुटपाके प्रयोजयेत्॥ ३११॥

पुटपाकमाह स्थालीति—स्थालीपाके कृते सति सुसम्पक्वं=स्थालीपाकेन सम्यक् पक्वं स्वच्छवारिणा निर्मलजलेन लौहं प्रक्षाल्य शुष्कं च सञ्चूर्ण्य पुटपाके प्रयोजयेत् ॥ ३११॥

स्थालीपाक में अच्छीप्रकार पके लोहे को स्वच्छ जल से धो सुखा यत्नपूर्वक चूर्ण कर पुटपाक योग्य समझे ॥ ३११ ॥

पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः।
म्रियते च पुटाल्लौहः पुटं तस्मात् समाचरेत् ।३१२।
यथा यथा प्रदीयन्ते पुटाः सुबहुशोऽयसि ।
तथा तथा प्रकुर्वन्ति गुणानेव सहस्रशः ॥ ३१३ ॥
पुटपाकेन पक्वस्तु शस्यते रसकर्म्मसु ।
दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः ॥ ३१४ ॥
शतादिस्तु सहस्रान्तः पुटो देयो रसायने ।
वाजीकर्मणि विज्ञेयो दशादिशतपञ्चकः ॥ ३१५ ॥

पुटदानस्य गुणमाह—पुटादिति—दोषविनाशो=दोषाश्च यथा,

गुरुता हृदयोत्क्लेदः, कश्मलं दाहकारिता । अश्म दोषः स दुर्गन्धो दोषा सप्तायसः स्मृताः । अ. वे. प्र. अ. ११. श्लो. २११
गुणोदयो=गुणोत्कर्षः ॥ ३१२-३१५ ॥

पुट देने से दोषों का नाश होता है तथा पुट देने से ही गुणों का उदय होता है । पुट देने से ही लौह मरता है । इसलिये पुट दे ॥ ३१२ ॥

जितने ही अधिक पुट देंगे उतने ही सहस्र गुण लोह में उदय होंगे। पुटपाक से पका ही लोहा रसकर्म्म में श्रेष्ठ माना है ॥ ३१३ ॥

रोग दूर करने के लिये दस से सौ पुट दे, रसायन कर्म में सौ से हजार, और बाजीकर्म में दस से पांच सौ पुट दे ॥ ३१४-३१५ ॥

तावद्देयः पुटेल्लौहं यावच्चूर्णीकृतं जले ।
निस्तरङ्गे लघुत्वेन समुत्तरति हंसवत् ॥ ३१६ ॥
पुटपाकौषधस्यापि क्वाथो वा स्वरसोऽपि वा ।
वक्ष्यमाणप्रमाणेन कर्त्तव्यो भिषजां वरैः ॥ ३१७ ॥
रसाभावे तु सर्वेषां क्वाथो ग्राह्यो मनीषिभिः ।
अभावात् स्वरसस्यापि क्वाथ एव फलत्रिकात् ।३१८

पुटनमानमाह—तावदिति-चूर्णीकृतम्,=मसृणीकृतम्, निस्तरङ्गे=तरङ्गरहिते स्थिरे जले,अङ्गुलिद्वयोर्ध्वदेशतः प्रक्षिप्तं लघुत्वेन जले हंसवत्समुत्तरति=सम्यक्प्रतरति नाधो गच्छति। यथा-काचपात्रे जलं स्थिरीकृत्य तत्र लौहचूर्णं दत्त्वा यदा तच्चूर्णं जलोपरि प्रसरति तदा गोधूमबीजानि तण्डुलानि वा प्रसरति लौहे प्रक्षेप्याणि तान्यपि तत्र प्रतरन्ति चेत्तदा लौहं वारितरं ज्ञेयम्।

अपि च—लौहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता ।
अनप्सुमज्जनं रेखापूर्णता पुटतो भवेत् ॥

पुटादुग्राव्णो लघुत्वञ्च शीघ्रव्याप्तिश्च दीपनम् ।
जारितादपि सूतेन्द्रा ल्लौहानामधिको गुणः ॥
यथाश्मनि विशेद्वह्निर्बहिस्थः पुटयोगतः ।

चूर्णत्वाद्धि गुणावाप्तिस्तथा लौहेषु निश्चितम् । र.र.स.१०-४८-५० ।
रेखापूर्णता=अङ्गुलिभ्यां मर्दिते लौहे तस्याणूनामंगुलिरेखासु प्रवेशः । वक्ष्यमाणप्रमाणेन=पुटपाके फलादीनामयसा ग्रहणं समम् । (३३५ श्लो०) इत्युक्तेन ॥ ३१६-३१८ ॥

वैद्य तब तक लोहे को पुट देता जाय जब तक उसका चूर्ण तरङ्गरहित जल पर हल्का होने के कारण हंस के समान तैरे ॥ ३१६ ॥

पुट पाक की औषधों का क्वाथ वा स्वरस भी आगे कहे जाने वाले (३३५ श्लोक में) प्रमाण के अनुसार करना चाहिये ॥ ३१७॥

यदि स्वरस न हो तो उस द्रव्य का क्वाथ ले । और यतः त्रिफला से स्वरस प्राप्त नहीं हो सकता अतः त्रिफला का क्वाथ ही लेना चाहिये ॥ ३१८ ॥

अथ त्रिफलादिगणः—

त्रिफला त्रिवृता दन्ती कटुकी तालमूलिका ।
वृद्धदारश्च वृश्चीर–वृषपत्रक–चित्रकाः ॥ ३१९ ॥
शृङ्गवेरविडङ्गौ च भृङ्गभल्लातकौषधम् ।
दाडिमस्य च पत्राणि शतपुत्री पुनर्नवा ॥ ३२० ॥

कुठार-क्रामकौ कन्दः तन्त्री भेकस्य पर्णिका।
हस्तिकर्णपलाशश्च कुलिशः केशराजकः ॥ ३२१ ॥
माणः खण्डितकर्णश्च गोजिह्वा लोहमारकः।
गिरिशान्तनकैः प्रोक्तस्त्रिफलादिरयं गणः।
सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः ॥ ३२२ ॥

त्रिफलेति-लौहस्य सामान्यपुटपाकार्थं त्रिफलादिगणस्य प्रयोगो भवति। त्रिवृता=निशोथ इति, दन्ती=जयपाल मूलं, तालमूलिका=मुशली, वृद्धदारकः=बिधारा इति, वृश्चीरः=श्वेतपुनर्नवा, वृषपत्रको=वासा, शृङ्गवेरः=आर्द्रकः, भृङ्गो=भृङ्गराजः, औषधं=शुण्ठी, शतपुत्री=शतावरी, कुठारः=कुठेरकवृक्षः-अथ पर्णासे कठिञ्जरकुठेरकावित्यमरः। क्रामकः कन्दः=सूरणकन्दः, तन्त्री=गुडूची, भेकस्य पर्णिका=मण्डूकपर्णी, हस्तिकर्णपलाशः=हस्तिकर्णवत्पत्रः, कुलिशः=अस्थिसंहारः, केशराजकः श्वेतपुष्पभृङ्गराजः, माणः=मानकन्दः, खण्डितकर्णः=शकरकन्द इति स च रक्तश्वेतवर्णेन द्विविधः, गोजिह्वा=धान्यविशेषः इति राजनिघण्टौ। गोजिह्वा गोभीपुष्पशाक इति कैयदेवनिघण्टुभाषा, संख्या १८३। ELEPHANTOPUS-SCABRE. स्वनामख्यातपत्रशाकक्षुपे बै. श. सि.। केचन गोजिह्वाशब्देन गावजुवां इति कथयन्ति। लोहमारकः=शालिञ्चशाकः। अयं त्रिफलादिगणो गिरिशान्तनकैः तदाख्यैराचार्यैः। र. ज. नि. तु. गिरिशैर्योगिभिः प्रोक्तं इति पाठः बहुषु पुस्तकेषु गिरिशान्तनक इति प्रथमान्त एव पाठः प्रोक्तः।

सूरयः=पण्डिताः सामान्यपुटपाकार्थं=साधारणपुटपाकाय। अनेन गणेन लौहस्य प्रथमं पुटपाकः करणीयः तदनु यथारोग-भैरण्डाद्यन्यतमगणौषधिभिरिति ज्ञेयम् ॥ ३१६-३२२ ॥

हरड़, बहेड़ा, आंवला, निसोत, दन्तीमूल, कुटकी, मूसली, विधारा, पुनर्नवा श्वेत, बांसा के पत्ते, चीता, अदरख, वायविडंग भांगरा, भिलावा, सोंठ, अनार के पत्ते, शतावर, लाल पुनर्नवा, कुडालिया, नागरमोथा, शूरणकन्द, गिलोय, मण्डूकपर्णी, हस्ति-कर्णपलाश, हडजोड़ा, केशराज, माणकन्द, खण्डितकर्ण, (बज्रकन्द-शकरकन्द), गोजिया, शालिञ्च शाक गिरिशान्तनक ने यह त्रिफलादिगण कहा है। सामान्य पुटपाक के लिए विद्वानों ने इसे निर्धारित किया है ॥ ३१६-३२२ ॥

अथ एरण्डादिगणः—

विशेषपुटपाकाय गणानन्यान् शृणूदितान्।
एरण्डः शारिवा द्राक्षा शिरीषश्च प्रसारणी ॥३२३॥
माषमुद्गाख्यपर्णिन्यौ विदारीकन्द-केतकी।
एरण्डादिगणो ह्येष सर्ववातविकारनुत् ॥ ३२४ ॥

विशेषेति—एरण्डादिगणो वातविकारिणां कृते लौहपुटपाकार्थ-मुच्यते शारिवा=अनन्तमूलम्, प्रसारणी=गन्धप्रसारणी, माष-मुद्गाख्यपर्णिन्यौ=माषपर्णी मुद्गपर्णीचेति । केतकी—केवड़ा इति ॥ ३२३-३२४ ॥

विशेष पुटें देने के लिए अन्य गण कहते हैं। एरण्ड, अनन्तमूल, द्राक्षा, शिरीष की छाल, गन्धप्रसारिणी, माषपर्णी, मुद्गपर्णी, विदारीकन्द, केतकी। यह एरण्डादिगण वात के सब विकारों का नाश करता है। इस गण की पुट देने से लोहभस्म भी वात विकार नाशक हो जाता है ॥ ३२३-३२४ ॥

अथ किरातादिगणः—

किरातममृतानिम्ब–कुस्तुम्बुरुशतावरी ।

पटोलं चन्दनं पद्मं शाल्मल्यौडुम्बरी जटा ।

पैत्तिकामयहन्ताऽयं किरातादिगणो मतः ॥ ३२५ ॥

किरातादिगणमाह–किरातं = चिरायता इति, अमृता = गुडूची, कुस्तुम्बुरु = धान्यकम्, चन्दनं = रक्तचन्दनम्, पद्मं = पद्माख इति नीलकमलमित्यपरे शाल्मली = बालशाल्मलीमूलम्, औडुम्बरीजटा ॥ अधःप्रसरणशीला उडुम्बरप्ररोहाः । पैत्तिकामयहन्ता = पित्तरोग-शमनः । अनेन पुटपाके लौहोऽपि पित्तरोगहन्ता भवति। एव मुत्तरत्रापि ज्ञेयम् ॥ ३२५ ॥

चिरायता, गिलोय, नीम, धनियां, शतावर, पटोलपत्र, चन्दन, कमल, सेमर का मूसली, गूलर की जटा। यह किरातादि-गण पित्तरोगों का नाशक है। इससे पुट देने से लोहा पित्तघ्न होता है ॥ ३२५ ॥

अथ शृङ्गवेरादिगणः—

शृङ्गवेरस्य मूलानि निर्गुण्डी कौटजं फलम् ।

करञ्जद्वितयं मूर्वा शोभाञ्जन-शिरीषकौ ॥ ३२६ ॥

वरुणश्चार्कपर्णश्च पाटला कण्टकारिका ।
शृङ्गवेरादिको ह्येष गणः श्लेष्मगदापहः ॥ ३२७॥

श्लेष्मगदहरं शृङ्गवेरादिगणमाह—शृङ्गवेरस्येति । शृङ्गवेर-मूलानि=आर्द्रकम्, निर्गुण्डी=सिम्हालू इति, कौटजं फलम्=इन्द्रजौ इति, करञ्जद्वितयं=वल्लीकरञ्जो वृक्षकरञ्जश्चेति चिर-विल्वप्रकीर्यौ, मूर्वा=कुमारीवद्भवति, शोभाञ्जनकः सौंजना इति, वरुणः=वरना इति विल्ववत्पत्रो यत्फलानि पक्वानि रक्तवर्णानि भवन्ति । अर्कपर्णम्=रविपत्रम्, पाटला=अमोघा, कण्टकारिका=क्षुद्रा, पाटलेत्यत्र पटोलमिति पाठस्तु श्लेष्मघ्नगणे विचारणीयः ॥ ३२६-३२७॥

अदरख, सम्भालू, इन्द्र जौ, वृक्षकरञ्ज और लताकरञ्ज, मूर्वा, सुहांजना, शिरीष, वरना, आक के पत्ते, पाडल, कण्टकारी । यह शृङ्गवेरादिगण कफरोग नाशक है । इसकी पुट देने से लोहा कफ के रोगों को नाश करता है ॥ ३२६-३२७ ॥

अथ गोक्षुरादिगणः—

गोक्षुरेक्षुरकौ व्याघ्री सिंहपुच्छीद्वयं स्थिरा ।
गोक्षुरादिरिति प्रोक्तो वातश्लेष्महरो गणः ॥३२८॥

गोक्षुरादिगणे—इक्षुरकः=तालमखाना इति, व्याघ्री=कण्ट-कारी, सिंहपुच्छीद्वयम्=पृष्टपर्णी माषपर्णी चेति व्याख्यातारः । शालपर्णी पृष्ठपर्णीति र. ज. नि. । स्थिरा=शालपर्णी स्थिरा-शब्दस्य गुडूची शाल्मली वा व्याख्यानन्तु तयोः पर्यायेषु स्थिराशब्दादर्शनात् हेयम् ॥ ३२८ ॥

गोखुरू, तालमखाना, छोटी कटेली, दोनों प्रकार की पृष्टपर्णी दीर्घ पत्र वाली और गोल पत्र वाली, शालपर्णी; यह गोक्षुरादिगण वातश्लेष्महर है। इन से लोहे को पुट दें तो वातश्लेष्मज रोगों का नाश होता है ॥ ३२८ ॥

अथ पटोलादिगणः—

पटोलपत्रकोशीरकासमर्दापराजिताः ।
लोध्रेन्दीवरकल्हार-वाराहीकान्तया सह ।
पटोलादिरिति ज्ञेयः पित्तश्लेष्मगदापहः ॥ ३२९ ॥

पटोलादिगणे—अपराजिता = विष्णुक्रान्ता, इन्दीवरम् = नीलकमलम्, कल्हारम् = रक्तोत्पलम्, वाराही = वाराहीकन्दः (गेठी), कान्ता = प्रियङ्गुः ॥ ३२९ ॥

पटोलपत्र, खस, कसौंदी, कोयल, लोध, नीलोत्पल, कुमुद, वाराहीकन्द, प्रियंगु; यह पटोलादिगण पित्तश्लेष्महर है। इनसे लोहे को पुट दें तो यह पित्तश्लेष्मज रोग दूर करता है ॥ ३२९ ॥

अथ किंशुकादिगणः—

किंशुकः काश्मरी विश्वमग्निमन्थस्त्रिकण्टकः ।
श्योनाकः शालपर्णी च सिंहपुच्छीद्वयं स्थिरा ॥३३०॥
पाटला कण्टकारी च बृहती बिल्व एव च ।
किंशुकादिगणो ह्येष दोषत्रयहरो मतः ॥ ३३१ ॥

किंशुकादिगणे--किंशुकः=पलाशः ढाक इति, काश्मरी = कुम्हार इति, विश्वम = शुण्ठी, अग्निमन्थः = अरणिः, त्रिकण्टकः = गोक्षुरः,

श्योनाकः = अरलू इति, शालपर्णी प्रसिद्धा दशमूलद्रव्यम् । र. ज. नि. तु शालपर्णीत्यत्र सप्तपर्णीति पाठः । सप्तपर्णी--समङ्गा छुईमुई इति, पाटला = पाडल इति, कण्टकारी = क्षुद्रा, वृहती=बड़ी कटेली इति, विल्वं=विल्वत्वक् ॥ ३३०--३३१ ॥

पलाश के फूल, गंभारी, सोंठ, अरणी, गोखुरू, अरलू, शालपर्णी, दोनों प्रकार की पृष्टपर्णी, स्थिरा, पाटला, कटेली, बड़ी कटेली, बेल की छाल, यह किंशुकादिगण त्रिदोषनाशक है । इससे लोहे को पुट दें तो त्रिदोषज व्याधियों का नाश होता है ॥३३०-३३१॥

अथ शतावर्यादिगणः—

शतावरीबलाधात्रीगुडूचीवृद्धदारक-
वानरीभृङ्गराजाख्यविदारीगोक्षुरक्षुरैः ।
वाजिगन्धाकणायुक्तै र्वाजीकर्मसु शस्यते ॥३३२॥

शतावर्यादिगणे--बला = खरेटी इति, धात्री-आमलकी, वानरी = आत्मगुप्ता = कैंच के बीज इति । भृङ्गराजाख्यः=श्वेतपुष्पभृङ्गराजः, विदारी = विदारीकन्दः, क्षुरः = तालमखाना इति, वाजिगन्धा = अश्वगन्धा, कणा = पिप्पली ॥ ३३२ ॥

शतावर, बला, आंवला, गिलोय, विधारा, कौंच, भांगरा, विदारीकन्द, गोखुरू, तालमखाना, असगन्ध, पिप्पली; ये शतावर्यादिगण वाजीकरण में अच्छा है । इससे लोहे को पुट दें तो वह लोहभस्म वाजीकरण होता है ॥ ३३२ ॥

अथ विदार्यादिगणः—

विदारीकन्दपिण्डाह्वभृङ्गराजशतावरी-
क्षीरकञ्चुकभल्लातामृतकाचित्रकैस्तथा ॥ ३३३ ॥
करिकर्णपलाशैश्च मुषलीमधुकैरपि ।
मुण्डिरीकेशराजैश्च पुटो देयो रसायने ॥ ३३४ ॥

विदारिकन्दादिगणे—पिण्डाह्वं=पिण्डतगरम्, क्षीरकञ्चुकः-शिरीषः, अमृतका=गुडूची, मधुको=मधुयष्टिः, मुण्डिरी=घुण्डी इति, केशराजो=द्वितीयभृङ्गराजः ॥ ३३३-३३४ ॥

विदारीकन्द; पिण्डतगर, भांगरा, शतावर, खिरनी, भिलावा, गिलोय, चीतामूल, हस्तिकर्णपलास, मूसली, मुलहठी, मुण्डी, केशराज; इनसे लोहे को पुट दें तो यह रसायन होता है ॥ ३३३-३३४ ॥

सामान्ये च विशेषे च पुटे यद् यत् प्रकीर्तितम् ।
मिलितैरेकशो वा तैर्यथेष्टं पुटयेत् ततः ॥
पुटपाके फलादीनामयसा ग्रहणं समम् ॥ ३३५ ॥

पुटविधाने विशेषमाह सामान्य इति---सामान्ये पुटे-त्रिफलादिपुटे, विशेषे-एरण्डादिपुटे यत् यत् त्रिफलादि, एरण्डादि वा प्रकीर्तितमुक्तं तै मिलितैः=संयुतैः, एकशः, एकैकेन यथालाभमिलितेन वा यथेष्टं यथेच्छं पुटयेत्। पुटपाके फलादीनां=त्रिफलादीनामयसा=लोहेन समं=तुल्यमानं, ग्रहणं कर्तव्यम्। स्वरससत्त्वे स्वरसेनैवायसचूर्णं पङ्कोपमं विधेयम् । क्वाथादिना यथा

पञ्चपललौहस्य पुटपाके कर्तव्ये पञ्चपलद्रव्यस्य क्वाथः करणीय इति भावः ।

शार्ङ्गधरस्य दीपिकायां पातञ्जलोद्धृते लौहकल्पे दोषभेदेन व्याधिभेदेनापि पुटौषधानि दत्तानि म.ख.अ.११.श्लो ४८.॥ ३३५॥

लौहसर्वस्वे प्रयोजनवशात्पुटपाके प्रयोज्या वनस्पतयः ।
वरा शिग्रुपलाशेभकर्णभृङ्गद्रवाम्भसा ।
अत्रोत्तरे पुनर्दद्याद्व्यसन्निफलापुटान् ॥ ५६ ॥
तद्दानाद्रुद्धकोष्ठस्य लोहं स्यादनुलोमनम् ।
स्मृतः पिप्पलितोयेन मन्दाग्नेरग्निवृद्धये ॥
विदारीवारिणा क्लैब्येऽरुचौ जम्बीरवारिणा ।
शिरीषतोयैर्वैवर्ण्ये वाते वाट्यालकाम्भसा ॥
पित्ते पर्पटतोयेन सरिवाद्राम्बुना कफे ।
दशमूलीकषायेण सन्निपातोद्भवे गदे ॥
किराततिक्ततोयेन ज्वरेषु विषमेषु च ।
गुडूचीवारिणा मेहेऽतिसारे कुटजाम्भसा ॥
ब्रह्मयष्ट्यम्भसा श्वासे कासे वासकवारिणा ।
काकोदुम्बरिकातोयै रक्तपित्तप्रशान्तये ।
पाण्डुत्वे माहिषीमूत्रैः कृमौ जन्तुघ्नतण्डुलैः ॥
कुष्ठे विडङ्गभल्लातैः प्लीहि रोहितकाम्भसा ।
सिन्दुबारद्रवैर्मूत्राघाते शूले तुषोदकैः ॥
पामादद्रुविचर्चीषु दद्याद्दद्रुघ्नवारिणा ।
मुशलीवारिणाऽर्शस्सु हृद्रोगेऽर्जुनवारिणा ॥

आमवातप्रशान्त्यर्थमुच्चटामूलजैर्द्रवैः ।
सोमराजी ..................... दकैः ॥
शिरोद्वेदाम्बुनाऽश्मर्यामुदावर्त्ते त्रिवृज्जलैः ।
गुल्मेऽम्लदाडिमाम्भोभिर्ब्राह्मीतोयैः स्वरक्षये ॥ ६५ ॥
वाजिगन्धाजटातोयैः राजयक्ष्मनिवृत्तय-इति ।

पुट देने के लिए सामान्य और विशेष गुणों में जो २ द्रव्य लिखे हैं उन्हें मिलाकर या अकेले यथेष्ट पुट देनी चाहियें । पुटपाक में त्रिफला आदि को लोहे के समभाग लेना चाहिये ।

यदि मिलाकर द्रव्यों से पुट देनी हों तो मिलित द्रव्यों को समभाग मिलाकर लोहे के समपरिमाण लें। यदि एक २ द्रव्य से पुट देनी हो तो वह भी परिमाण में लोहे के समान ही होना चाहिये ॥ ३३५ ॥

अथ पुटपाकप्रकरणमाहः—

हस्तमात्रमिते गर्ते करीषेणार्द्ध पूरिते ।
अथवा तुषकाष्ठाभ्यां पूरितेऽर्धे निधापयेत् ।
लौहमग्नि ततो दत्त्वा तथैवोर्ध्वं प्रपूरयेत् ॥ ३३६ ॥
दिवा वा यदि वा रात्रौ विधिनानेन पाचयेत् ।
चतुर्भिः प्रहरैरेव पुटपाकेन मारयेत् ॥ ३३७ ॥
पुटपाके क्षणादूर्ध्वं स्थितो भवति भस्मसात् ।
अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः ॥ ३३८ ॥

कुण्डस्थो भस्मना च्छन्न आकृष्टव्यः सुशीतलः।
समाकृष्टस्य तप्तस्य गुणहानिः प्रजायते ॥ ३३९ ॥

पुटप्रकारमाह—हस्तेति—हस्तमात्रमिते=हस्तप्रमाणमस्येति प्रमाणे द्वयसच्—इत्यादिना मात्रच् प्रत्ययः। मात्रच् प्रत्ययेनैव परिमाणार्थे सिद्धे मितशब्दः सर्वतो हस्तैकपरिमाणं सूचयति, तेन हस्तमितगम्भीरे तथाऽनाहपरिणाहे च गर्त्ते=अवटे करीषेण=वन्योपलेन जातावेकवचनं तेन करीषैरित्यर्थः। गृहकरीषैः कृत्रिमैरपि पुटने न दोषः, अथवा करीषाभावे तुषकाष्ठाभ्यां=तुषेण काष्ठेन च कोकिलैरपि सर्वैर्मिलितैर्वा ज्ञेयम्। अद्यत्वे तु सौकर्यार्थं विद्युत्तापेनापि पुटं दीयते। अर्धपूरिते लौहं=लौहसम्पुटं निधापयेत्। ततोऽग्निं दत्त्वा तथैव पूर्वोक्तप्रकारेण करीषादिभिरूर्ध्वं=गर्त्तस्य शेषभागं प्रपूरयेत् ॥ ३३६ ॥

दिवेति--चतुर्भिः प्रहरैरिति न कालनियमो भस्मना च्छन्ने गर्त्तमुखे त्रिदिनान्तमपि तिष्ठति वह्निः। एव शब्दः पादपूरणार्थ इति केचित्। वस्तुतस्तु--एव शब्दो नियमार्थस्तेन चतुःप्रहरान्न न्यूनकालं नाधिकमित्यन्ये ॥ ३३७ ॥

पुटनीयं द्रव्यं गर्त्तमध्य एव स्थापनीयं नाधो नोपरि इत्यत आह पुटपाक इति। ऊर्ध्वं गर्त्तमुखे स्थितो लौहादिः क्षणाद्भस्मसाद्भवति, तन्न गुणाय। अधस्ताद्गर्त्ततले अपकृष्टोऽधःस्थित इत्यर्थः, वीर्यतो मन्दो भवति अतो गर्त्तस्य मध्य एव पुटनीयं स्थाप्यम् ॥ ३३८ ॥

पुटात्स्वाङ्गशीतमेव ग्रहीतव्यमित्याह—कुण्डस्थ इति-भस्मनाच्छन्न इति यदा हि अग्निर्निर्धूमतां याति तदा गर्त्तमुखे द्व्यङ्गुलं

सर्वतो गर्त्तं भस्मनाच्छादनीयम् । सुशीतलश्च सम्पुट आकृष्टव्यो=ग्रहीतव्यः । तप्तस्य समाकृष्टस्य गुणहानेः ।

प्रक्रिया चेत्थम्—स्थालीपाकानन्तरं जलेन प्रक्षाल्य लौहं खल्वे मसृणं मर्दयित्वा पुटनौषधस्वरसेन हिमेन क्वाथेन वा चक्रिकानिर्माणयोग्यं विधाय मसृणे काष्ठफलके चक्रिका-निधाय दिनमेकमातपे शोषयित्वा सम्पुटितं गर्तमध्ये निधाय--उपर्य्यपि करीषाणि दत्त्वाऽग्निं प्रज्वाल्य ज्वलिते निर्धूमे चाग्नौ द्व्यङ्गुलं सर्वतो भस्मनाऽऽच्छादयेत् तापरोधार्थम् । स्वाङ्गशीतलं सम्पुटं विभिद्य पुनरपि लौहखल्वे मर्दनपुटनादिकं तावद्विधेयम् यावच्चूर्णीकृतं लघुत्वेन स्थिरे जले हंसवत्तरति । एवं कज्जलनिभं नेत्रे निहितं मनागपि पीडां न करोति । अस्मत्सम्प्रदाये तु-शुष्काश्चक्रिका गोमयान्तः कृत्वा गोलकान्विधाय शोषयित्वा गर्त्ते पुटनम् । इत्थं प्रतिपुटं गोमयरसेन भानुपाकश्च भवति । अत्र च मृदुताङ्गतस्य लोहस्य हानिरपि सम्भवति । प्रथमं कतिचित्पुटेषु न हानिसम्भावना ।। २३९ ।।

एक हाथ लम्बा एक हाथ चौड़ा तथा एक हाथ गहरा गोल गढ़ा खोदकर उसके आधे भाग में जंगली उपले अथवा तुष और लकड़ियां भर दे । उस पर लोहयुक्त शरावसम्पुट रख तब अङ्गारे आदि से आग की योजना कर गढ़े को उपले वा तुष और लकड़ियों से भर दे । इच्छानुसार दिन या रात में इसी विधि से पकाना चाहिये । इस प्रकार १२ घन्टे में पुटपाक करे । पुटपाक में यदि सम्पुट को कुण्डके ऊपर रखें तो जल्दी ही औषध

जल जाती है और नीचे डालें तो आंच कम लगती है। अतएव कुण्डके मध्य में डालने का विधान है। जब उपले जल जांय उस समय चारों तरफ से आंच की रक्षा के लिए राख से ढक देते हैं। फिर स्वांग शीतल निकाल ले। सम्पुट को गरम कुण्ड से निकालने पर गुण नहीं होता॥ ३३५-३३६॥

मतान्तरम्—

शुद्धस्य सूतराजस्य भागो भागद्वयं बलेः।
द्वयोः समं लौहचूर्णं मर्दयेत् कन्यकाद्रवैः॥ ३४०॥
यामद्वयं ततो गोलं स्थापयेत् ताम्रभाजने।
आच्छाद्यै रण्डजैःपत्रैरुष्णो यामद्वयाद्भवेत्॥ ३४१॥
त्रिरात्रं धान्यराशिस्थं तत्ततो मर्दयेद् दृढम्।
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत्॥
तीक्ष्णं मुण्डं कान्तलौहं निरुत्थं जायते मृतम्॥३४२॥

पुटनं विनापि रसयोगेनोत्तमं लौहभस्माह—शुद्धस्येति-सूतराजस्य=सूतस्य भाग=एकोभागः, बले=गन्धस्य भागद्वयं शुद्धस्येत्येव द्वयोः कज्जलीं विधाय द्वयोः समं=भागत्रयम्, लौहचूर्णं=शुद्धं सूक्ष्मरेतितम्। लौहस्थाने सारस्तीक्ष्णं वेति पाठान्तरे। दत्त्वा कन्यकाद्रवैः=कुमारीस्वरसैः, यामद्वयं=दिनार्धं मर्दयेत्। शार्ङ्गधरे तु-ततः कन्याद्रवैर्घर्मे त्रिदिनं परिमर्दयेत् इति त्रिदिनमर्दनमुक्तम्। ततो गोलं विधाय, ऐरण्डजैः पत्रैर्गोलमाच्छाद्य=परितः सम्यगावेष्ट्य-ततः सूत्रेण सम्बध्य ताम्रभाजने=ताम्रसम्पुटे 'स्थापयेत्ताम्रसम्पुटे'।

इति लौहप्रकरणे यो. र. पाठात् । 'ताम्रसम्पुटे धान्यराशौ स्थापये-दिति' शा. ध. गू. टी. च । तदनु--'उष्णो यामद्वयाद्भवेदि' त्युक्तेः, यामद्वयं खरतरघर्मे स्थापन मायातम् । ततस्तदुष्णमेव त्रिरात्र= महोरात्रत्रयम् । कालाध्वनो रत्यन्तसंयोगे द्वितीया । धान्यराशिस्थं 'मध्ये धान्यकुशूलस्य त्रिदिनं स्थापयेद्बुधः' शा. ध. म. ख. १२-२७८ । धान्यराशिश्च तावती ज्ञेया यत्रोष्णताहानिर्न भवेत्परं वृद्धिः स्यात्पुटपाकाय । ततः समादाय दृढं=मसृणं मर्दयेत् । शा. ध.-तु-कुठारछिन्नादिरसै मर्दनं भावना च'धिकाऽभिहिता । ततो वस्त्र-गलितं=पटघृष्टं नीरे=जले हंसवत्तरति । प्रकारेणानेन तीक्ष्णा-दिलौहं मृतं सन्निरुत्थमपुनर्भवं जायते । र.र. स. तु-'स्वर्णादीन्मार-येदेवं चूर्णं कृत्वा तु लौहवत्' ५—१३३ । एवं' सर्वाणि लौहानि स्वर्णादीन्यपिमारयेत् शा. ध. म. ख. ११-५२ च ॥ ३४२ ॥

शुद्ध पारा एक भाग, शुद्ध गन्धक दो भाग और शुद्ध बारीक लोहचूर्ण तीन भाग ले सबको घीकुमारी के रस से दो पहर घोट गोला बना गोले पर एरण्डपत्र लपेट सूत के तागे से बांध गोले को ताम्रसम्पुट में रख दो पहर तेज धूप में गरम कर फिर इसे तीन दिन धान्यों के ढेर में रखे और पश्चात् निकाल दृढ़ता से मर्दन कर कपड़े में छान ले यह लोहे की भस्म जल पर हंस की तरह तैरेगी । इस प्रकार से तीक्ष्ण मुण्ड वा कान्तलौह की निरुत्थ भस्म हो जाती है ॥ ३४०-३४२ ॥

मतान्तरम्—

क्षिपेद्वा द्वादशांशेन दरदं तीक्ष्णचूर्णतः ।

कन्यानीरेण सम्मर्द्य यामयुग्मञ्च सम्पुटेत् ।
एवं सप्तपुटैर्मृत्युं लौहचूर्णमवाप्नुयात् ॥ ३४३ ॥

( इति पुटपाकविधिः )

हिंगुलयोगेनोत्तमं भस्माह--क्षिपेदिति-तीक्ष्णचूर्णतः=लोहचूर्णतः, तीक्ष्णपदं लोहमात्रस्योपलक्षणम् । द्वादशांशेन=एको भागो दरदस्य द्वादशभागा लौहचूर्णस्य, कन्याजलेन यामयुग्मं सम्मर्द्य सम्पुटेत् । सप्तभिः पुटै लौंहं मृत्युमपुनर्भवमवाप्नुयात् ।

**लौहभस्मनः सरलं प्रकारद्वयम्—**

परिप्लुतं दाड़िमपत्रवारा लौहं रजः स्वल्पकटोरिकायाम् ।
म्रियेत वस्त्रावृतमर्कभासा योग्यं पुटैः स्यात्त्रिफलादिकानाम् ॥

लौहचूर्णं पलं खल्वे सोरकस्य पलं तथा ।
अच्छगन्धपलं चापि सर्वमेकत्र मर्दयेत् ॥
कुमार्यद्भिर्दिनं कुर्याद्गोलकं रुबुपत्रकैः ।
संवेष्ट्य च मृदा लिप्त्वा पुटेद् गजपुटे भिषक् ॥
स्वाङ्गशीतंसमुद्धृत्य सिन्दूराभमयोरजः ।
मृतं वारितरं ग्राह्यं सर्वकार्यकरं परम् ॥

आ. वे. प्र. २५८-२६१ ।

लौहमारणस्य सरलं प्रकारद्वयम्-टीकाकृतः—शुद्धं लौहं जम्बूत्वक्क्राथेनाप्लुत्य काचपात्र आतपे स्थापयेदालोडयेच्च प्रत्यहम् । पङ्कोपमे जाते पुटेत् । एवमर्धांश नरसारयुतं जलाप्लुतं लौहे दृषदि स्थापयेदालोडयेच्च पुनः पुनः, काले जलं पुनरपि देयम् । पङ्कोपमे जाते त्रिफलादिना पुटेत् ॥ ३४३ ॥ इति पुटपाकः ।

तीक्ष्णलौहचूर्ण बारह भाग, शुद्ध शिंगरफ़ एक भाग, दोनों को घीकुमारी के रस से दो पहर घोट सम्पुट में रख गजपुट में फूंक दे। इसप्रकार सात वार शिंगरफ़ और घीकुमार में घोट पुट देने से सात पुट में लौहचूर्ण भस्म हो जाता है॥ ३४३॥

अथ लौहस्य निरुत्थीकरणम्—

सर्वमेतन्मृतं लौहं पक्तव्यं मित्रपञ्चकैः।
यद्येवं स्यात् निरुत्थश्च सेव्यं रक्तिचतुष्टयम्॥३४४॥

निरुत्थपदाभिधेयाम्—मृतधातुपरीक्षामाह सर्वमिति-मृतं लौहं मित्रपञ्चकैः समानमानैः गजपुटे पक्तव्यम्। एवं यदि निरुत्थं नाम लौहं पुनर्न सम्भवेत् किन्तु भस्मैव स्यात् तदा मृतं विद्यात् तस्य मात्रा रक्तिचतुष्टयम्। अद्यत्वे तु ½-२. र.॥ ३४४॥

सब लोहे की भस्मों को मित्रपञ्चक से मिला पकाना चाहिये। यदि इस प्रकार से लोहा अपने स्वरूप में न आय तो निरुत्थभस्म समझे। इस लौहभस्म को चार रत्ति तक मात्रा है॥ ३४४॥

अथ मित्रपञ्चकम्—

मधु सर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा।
मित्रपञ्चकमेतत्तु गणितं धातुमेलने॥ ३४५॥

मित्रपञ्चकमाह—मध्विति-सर्पि=गोघृतम्। एतन्मित्रपञ्चकं धातुमेलने=धातूनां परस्परसंयोगकरणे-पुनरुज्जीवने च, भस्मस्था अमृता धातुकणा मित्रपञ्चकयोगेन ध्माता द्रुताः परस्परं मिलन्ति, गणितं=संख्यातम्। सर्वं समानमानं ग्राह्यम्। द्रावकाः

प्राक् (अ. १-१०६) कथिताः तत्र गुग्गुलुस्थाने गुड़ोऽस्ति। क्वचित्-गुड़गुगुलुसौभाग्यलाक्षामधुभिर्मित्रपञ्चकमुक्तम् ॥ ३४५ ॥

शहद, घी, रत्तियां, सुहागा, गूगल; ये पांचो मित्रपञ्चक हैं। ये धातुओं के मिलाने के काम में आते हैं ॥ ३४५ ॥

मतान्तरम्—

गोघृतं गन्धकं लौहं तप्तखल्वे विमर्दयेत् ।
दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ।
इत्येवं सर्वलौहानां कर्त्तव्यं स्यात् निरुत्थितम् ॥३४६।

अपि च—यदि मित्रपञ्चकैः पक्वमनिरुत्थं स्यात्तदा निरुत्थीकरणमाह-गोघृत मिति। सर्वं समानमानं तप्तखल्वे मर्दनानन्तरं कन्याद्रावैरेकं दिनं मर्दयित्वा गजपुटे पचेत् । सर्वलौहानां= स्वर्णादीनामित्येवमुक्तप्रकारेण । लौहप्रकरणे पठितस्यापि सर्वधातुष्वतिदेशः।

अन्यच्च--मध्वाज्यं मृतलौहं च सरूप्यं सम्पुटे क्षिपेत् ।
रुद्ध्वा ध्माते च संग्राह्यं रूप्यं वै पूर्वमानकम् ॥
तदा लौहं मृतं विद्यादन्यथा मारयेत्पुनः ॥आ.वे.प्र.११-२६४॥
गन्धकेनोत्थितं लौहं तुल्यं खल्वे विमर्दयेत् ।
दिनैकं कन्यकाद्रावैरुद्ध्वा गजपुटे पचेत् ॥
इत्येवं सर्वलौहानां कर्तव्येयं निरुत्थितिः ॥
द्विगुणे त्रिफलाक्वाथे तुल्ये पिष्ट्वाऽप्ययोरजः ।
विपचेन्मध्यपाकेन सर्वव्याधिजरापहम् ॥
इत्यमृतीकरणं तत्रैव ॥ ३४६ ॥

गौ का घी, शुद्ध गन्धक, लौहभस्म; सबको तप्तखरल में डाल मर्दन कर अच्छी प्रकार मिलने पर नीचे उतार घीकुमार के रस से दिनभर घोट शुष्क करले और सम्पुट में रख गजपुट में फूंक दे। इसप्रकार से सब लोहों का निरुत्थीकरण हो जाता है ॥३४६॥

रसायने विशेषो यथा—

मर्दयेच्च लौहभस्म गुञ्जामध्वाज्यटङ्कणैः ।
धमेद्वह्नौ पुनर्लौहं तदा योज्यं रसायने ॥ ३४७ ॥

निरुत्थीकृतस्यापि रसायनार्थं पुनः पुटनमाह मर्दयेदिति-गुञ्जादिभि र्लौहसमैः पुनः वह्नौ पुटनं तदनु रसायने योज्यम् ॥ ३४७ ॥

लोहभस्म को गुञ्जा, मधु, घी और सुहागे से मर्दन कर आग में धौंकनी से धौंके। तो फिर इसे रसायनकर्म में प्रयुक्त करे ॥३४७॥

गुणाः—

कृष्णायः शोथशूलार्शक्रिमिपाण्डुत्वशोषनुत् ।
वयस्यं गुरु चक्षुष्यं सर्वमेदोऽनिलापहम् ॥ ३४८ ॥

इत्थं मारितस्य लौहस्य गुणानाह-कृष्णेति-शोषः = क्षयः, वयस्यं = वयसे हितं वयस्यमायुष्यम्, चक्षुष्यं चक्षुर्भ्यां हितम्, सर्व-मेदोऽनिलापहं-तत्तदनुपानैः तत्तद्योगैश्च सर्वेषां मेदोरोगाणां सर्वेषामनिलरोगाणां वातरोगाणामपहं नाशकम् ॥ ३४८ ॥

कृष्णलोहभस्म, शोथ शूल बवासीर क्रिमिरोग, पाण्डुरोग और शोषरोग को नष्ट करता है। आयुवर्धक है, भारी है, आंखों के लिये हितकारी है। सब प्रकार के मेद और वायु को नष्ट करता है ॥ ३४८ ॥

आयुःप्रदाता बलवीर्य्यकर्त्ता रोगापहर्त्ता मदनस्य कर्त्ता।
अयःसमानं नहि किञ्चिदस्ति रसायनं श्रेष्ठतमं नराणाम्॥३४६॥

अन्यसम्वादेन गुणानाह-आयुरिति-आयुर्जीवितं तस्य प्रदाता वर्द्धक इत्यर्थः। मदनस्य=कामस्य। अयःसमानं=अयसा लोहेन समानं=तुल्यं श्रेष्ठतमं=सर्वप्रधानं नराणामिति-प्राणिमात्रस्योपलक्षणम्, रसायनं=जराव्याधिविध्वंसि, हीति=निश्चयेन किञ्चिन्नास्ति रोगविशेषे लौहविशेषप्रयोगस्तु-लो.स.१२-१६तो ज्ञेयः।

प्रयुक्तं लौहं पक्वामाशययोर्विपच्य तत्कलाङ्करैः सात्म्यीकृतं रसेन सह यकृत्प्लीह्नोः कफग्रन्थीनां च बलमाधाय पुना रक्ताणून सबलीकृत्य वर्धयति रक्तं पोषयति सकलं शरीरं, क्षुत्करोति, पाण्डुकामलादिकारणं यकृत्प्लीहरोगञ्चापहन्ति। ततश्च हृदययकृत्प्लीहवृक्कादिविकृतिजं शोथमप्यपाकरोति, किं बहुना-कृशं स्थूलं वा स्वावस्थामानयति त्रिकटुत्रिफलादियोगेन मलं मूत्रं च स्वमाने स्थापयति शोधयति च। मात्रा ½ २. र.।

त्रिफलामधुना च सर्वरोगेषु युज्यते त्रिफलामात्रा च यया कोष्ठशुद्धिर्भवेत्। तदनु मुस्तकचर्वणं विधेयं लौहसर्वदोषहरत्वात्।

बद्धकोष्ठे च—तप्तदुग्धानुपानं प्रायः सारयति बद्धकोष्ठस्य।
अनुपीतमम्बु यद्वा कोमलशस्यस्य नारिकेलस्य।
यस्य न तथापि सरति सयवक्षारं जलं पिबेत्कोष्णम्।
कोष्णं त्रिफलाक्वाथं क्षारसनाथं ततोऽप्यधिकम्॥

र. इ. चि. अ. ८. श्लो. १६१-१६२।

अत्र लौहसर्वस्वात्—

अथौषधात् षष्टिगुणं च दुग्धं धारोष्णमर्धोदकसाधितं वा ॥
पिबेदनुष्णं त्वथ सात्म्यतो वा क्षीरोक्तमात्रं स्वरसं गुडूच्याः ॥
फलत्रिकेण क्वथितं जलं वा क्षौद्रेण वा गोजलमेव सिद्धम् ॥
तथा यथारोगहरप्रयोगनिष्क्वाथकल्काम्बु निजद्रवान् वा ॥१४०॥
रास्नाम्बु वाते कफजे कणाम्बु द्राक्षाम्बु पित्ते सितयानुपेयम् ॥
धात्रीजलं शर्करयाम्लपित्ते पित्तानिलेऽम्भो लघुपञ्चमूल्याः ॥
या पञ्चमूली महती प्रसिद्धा तया शृतं वारि कफे सवाते ॥
गदे त्रिदोषे कणया सनाथः काथोऽनुपेयो दशमूलसिद्धः ॥
चिरोषितं जर्जरितस्य तोयं किरातातिक्तस्य कणान्वितस्य ॥
ज्वरेऽनुपेयं प्रबलेऽतिसारे कृताञ्जलिः स्वाङ्गसमुद्भवाम्बु ॥
रक्तातिसारे मधुनाऽनुपेयः स्वाङ्गद्रवो हिज्जलपल्लवानाम् ॥
श्रीवृक्षमाकन्दकजास्थिसारो मधुप्लुतश्छर्द्यतिसारके च ॥
शोथातिसारे च तथा ग्रहण्यां शुण्ठीरजो वा दशमूलतोयम् ॥
सामे तथा शुण्ठ्यमृताम्बु कोष्णं पुनर्नवाम्भोऽनुपिबेच्च शोथे ॥
कृमौ च जन्तुघ्नपलाशबीजकल्कोद्भवं वारि मधुप्रगाढम् ॥
क्लैव्ये विदारीस्वरसं सिताढ्यं निजाम्बु दुर्नामनि तालमूल्याः ॥
श्वासेऽम्बु कोष्णं समविश्वभार्ग्यं वासाम्बुकासे मधुनाऽनुपेयम् ॥
पित्ते सरक्ते मधुशर्कराढ्यं सुशीतलं फल्गुफलोद्भवाम्बु ॥
मूत्रग्रहेऽम्भस्तृणपञ्चमूल्या गुडूचिकाम्भः समधु प्रमेहे ॥
सुधायवक्षारयुतं कटूष्णमम्भोऽनुपेयं जठरामयेषु ॥
जम्बीरजं वारि रुचिप्रणाशे मन्दानले चित्रकसिद्धमम्बु ॥

शोषेऽश्वगन्धादशमूलिकाभ्यां सिद्धं पयः शर्करया सनाथम् ॥
शूलेऽम्बु लोहप्रभवे विपक्वं सबृन्तबोधिद्रुमसप्तपत्रैः ॥
सशर्करं भर्जितमुद्गतोयं छर्द्यामये लाजरजोमधुभ्याम् ॥
स्वप्नाङ्गनासङ्गमजातधातुच्युतौ द्रवस्तालफलस्य पेयः ॥
पयोऽथवा शर्करया सनाथं वरोविदारीद्रवसाधितं च ॥
इत्थं किलान्येष्वपि चामयेषु क्रियाक्रमज्ञानविशेषतज्ज्ञः ॥
यथा यथा रोगहरं गदार्तेऽनुपानमेवं स्वयमेव युञ्ज्यात् ॥
अतः परं रसतरङ्गिणीतोऽपि लोहानुपानानि ज्ञेयानि ॥

लोहसेवनानन्तरं कर्तव्यमाहारविहारादिः-

अथानुपानं प्रसमीक्ष्य कालरोगादिकान् सद्भिषजा प्रयुक्तम् ॥
पीत्वैव मुस्तां किल चर्वयित्वा पिबेत्तु कल्कं द्रवमेव तासाम् ॥
ततः समाचम्य लवङ्गपूग कर्पूरताम्बूलयुगं च जग्ध्वा ॥
आस्तीर्णशय्यातलसन्निविष्टो भजेत कामं ननुवामपार्श्वम् ॥
ताम्बूलमात्रान्नथ भूरि खादेन्मलानुलोमार्थमतन्द्रितोऽसौ ॥
मलाप्रवृत्तौ च पिबेत् कदू (दु) ष्णं तोयं यवक्षाररजोनुकीर्णम् ॥
एवं द्वितीये दिवसेऽपि गुञ्जद्वयान्वितं दिव्यरसायनं तत् ॥
जग्ध्वा ततोऽन्येद्युरिदं द्विगुञ्जा प्रवृद्धमेवानुभजेद्विधिज्ञः ॥
एवं दिनैकान्तरितस्य वृद्धिः कार्योऽथ गुञ्जाद्वितयेन तावत् ॥
यावच्च ता विंशतिरक्तिकाः स्युस्तदर्धमासान्नहि वृद्धिरिष्टा ॥
भजन्नितीदं शृततोयपायी जीर्णौषधो वह्निबलं विदित्वा ॥
भजेत् शाल्योदनमाज्यसिद्धं सव्यञ्जनं क्षीरघृतप्रधानम् ॥
सद्व्यञ्जनार्थं मुनयः समूचिरे मांसेषु शस्तांश्च मृगान् विहङ्गान् ॥

ग्रामोद्भवान् जांगलदेशसम्भवान्
छागैणकान् तित्तिरिलावकादीन् ।।
मत्स्येषु भूरीकवलाङ्गमद्गुरान्
सकृष्णमत्स्यान् सकलांश्च रोहितान् ॥
शाकेषु वार्ताकपटोलवास्तुकानभीरुवेत्राङ्कुरकासमर्दकान् ॥
पाके रसोऽम्लः किल दाडिमानां सुपक्वधात्रीफलजश्च शस्तः ॥
हिंगूषणं सैन्धवविश्वजीरधान्यं हरिद्राऽप्यथ वेसवारे ॥
फलेषु राजादननालिकेरदाड़िम्बशृङ्गाटकतालजम्भाः ॥
द्राक्षाप्रियालान् बकुलान् सुपक्वान् मिष्टांस्तु खर्जूरकतिन्दुकांश्च ॥
विवर्जयेत् क्रोधमनोभितापहुताशशीतातपवातसेवाम् ॥
चिन्तां निशाजागरमह्नि निद्रां वाग्विस्तरं वेगविधारणं च ॥
यामादवागूर्ध्वमपि त्रियामात् सम्भोजनं भोजनपर्ययं च ॥
उद्वर्तनस्नानविमर्दनानि स्त्रियं भयं दुःशयनासनानि ॥
इत्येवमुक्तक्रियया दिने दिने रसायनं सर्वरसायनोत्तमम् ॥
त्रिसप्तकं यावदतन्द्रितोऽथवा भजेत्ततस्तद्द्विगुणं चतुर्गुणम् ॥
लिह्याद्विडङ्गस्य रजोऽत्र किट्टप्रशान्तयेऽगस्त्यरसार्धमन्तरा ॥
एतत्क्रियातो द्विगुणोत्तरक्रिया समा प्रधानक्रिययैव कीर्त्यते ॥

विधिसेवित लौहगुणाः ।

इति वरपरिपाटी सेवितं हन्ति शूल-
ज्वरजठरगदार्शोरक्तपित्तातिसारान् ॥
श्वसनकसनमेहं कुष्ठपाण्डुत्वयक्ष्म-
श्वयथुवमथुगुल्मान् संग्रहण्यामयं च ॥

भजति यदि सदोर्ध्वं सप्तकादेकविंश-
दिदममृतसमानं ब्रह्मचर्यं विनाऽपि ।
वलिपलितविहीनश्चन्द्रताराकजीवो,
कनकरुचिरकान्तिर्नागवीर्यस्ततःस्यात् ॥ १६६ ॥

इति शुद्धायसविधिः ॥ ३४६ ॥

लोहा आयु देने वाला, बल-वीर्य कारक, रोग--नाशक और कामोत्तेजक है। लोह की भस्म के समान अन्य कोई रसायन मनुष्यों के लिये उत्तम नहीं है ॥ ३४६ ॥

लौहसेवने वर्जनीयानि—

कूष्माण्डं तिलतैलञ्च रसोनं राजिकां तथा ।
मद्यमम्लरसञ्चैव त्यजेत् लौहस्य सेवकः ॥३५०॥

लौहसेवने वर्ज्यानाह—कूष्माण्डमिति-राजिका लघ्वी ज्ञेया, मद्यं=सुरादि, अम्लरसं=काञ्जिकादि, रसोनमत्र माषान्नमिति रसं चैवेत्यत्र मसूरांश्चेति पाठान्तरम् ।

लौहस्य सम्यक् परिपाके च-काले मलप्रवृत्तिर्लाघवमुदरे विशुद्धिरुद्गारे।
अङ्गेषु नावसादो मनःप्रसादोऽस्य परिपाके ॥

लौहदोषे च—कृमिरिपुसहितं लीढं सहितं स्वरसेन वङ्गसेनस्य ।
क्षपयत्यचिरान्नियतं लौहाजीर्णोद्भवं शूलम् ॥
आरग्वधस्य मज्जाभी रेचनं किट्टशान्तये ।
भवेद्यद्यतिसारश्च पीत्वा दुग्धं तु तं जयेत् ॥
आ. वे. प्र. ११-२२०-२२१।

लौहस्य विशेषयोगाश्च—नवायस, त्र्यूषणादि, लौहपर्पटी, पुटपक्व-

विषमज्वरान्तकलौह, बृहत्सर्वज्वरहरलौहादयः ॥ ३५० ॥

पेठा, तिल का तेल, लशुन, राई, मद्य, खटाई; इन सब को लौहभस्म का सेवन करने वाला छोड़ दे ॥ ३५० ॥

अथ वज्रपाण्ड्यादिगुणाः—

सामान्याद् द्विगुणं क्रौञ्चं कालिङ्गोऽष्टगुणस्ततः ।
कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ ३५१ ॥
वज्राच्छतगुणं पाण्डि निरङ्गं दशभिर्गुणैः ।
ततः कोटिसहस्रैर्वा कान्तलोहं महागुणम् ॥ ३५२ ॥
( इति लौहमारणम् ) ।

लौहानामपि परस्परं गुणवैशेष्यमाह सामान्यादिति—क्रौञ्च, कालिङ्ग (कलि), भद्र, वज्र, पाण्डि, निरङ्ग कान्ताः लौहविशेषाः । लक्षणान्येषां खनिजपरीक्षायां दत्तानि ।

कान्तलौहस्य सर्वापेक्षया प्राशस्त्यम् कोटिसहस्रैरपरिगणितैरित्यर्थः ॥ ३५१-३५२ ॥

सामान्य लोहे से दुगुना क्रौञ्च लोह, क्रौञ्च से आठ गुना कालिङ्ग लौह, कालिंग से सौ गुणा भद्रलौह, भद्रलोह से हज़ार गुणा वज्रलौह, वज्रलोह से सौ गुणा पाण्डिलौह, पाण्डिलौह से दस गुणा निरङ्गलौह तथा निरङ्गलौह से भी हज़ारों करोड़ गुणा कान्तलौह उत्तम है ॥ ५१-३५२॥

विशेषतश्च---सम्यगौषधकल्पानां लौहकल्पः प्रशस्यते ।

मृतानि लौहानि रसीभवन्ति ।
निघ्नन्ति युक्तानि महाभयांश्च ॥
अभ्यासयोगाद् दृढदेहसिद्धिम् ।
कुर्वन्ति रुग्जन्मजराविनाशम् ॥ र. र. स. ५-१३६ ।

लौहविषये विशेषात्तु-लौहसर्वस्वम् । र. प्र. सु. ४-५७ । आ. वे. प्र. ११-१६४ । र. का. धे. । भा. र. शा. प्रकरणम् २५ । र. र. स. ५-६६ । चक्रदत्तस्य रसायनम् । र. इ. चि. ८-१७३ । र. इ. चू. १४-७५ । र. त. २० । र. अ. ७-१०७ । शा. ध. म. ख. गू. टी. ११-५२ । एभ्योज्ञेयः ।

अथ मण्डूरशोधनादि:—

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात्सर्वत्र मण्डूरं[1] रोगशान्त्यै प्रयोजयेत् ॥ ३५३ ॥

लौहानन्तरं तन्मलगुणानाह—ये गुणाः-इति-"ध्मायमानस्य लौहस्य मलं मण्डूरमुच्यते" लौहगुणान्मण्डूरेऽतिदिशति—मुण्ड-इति--लौहसाधारणस्योपलक्षणम् "यल्लौहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम्" ॥ ३५३ ॥

जो गुण मरे हुए मुण्डलौह में हैं वे ही गुण मुण्ड के किट्ट में हैं। अतएव सर्वत्र रोगशान्ति के लिये मण्डूर का प्रयोग करे ॥ ३५३ ॥

शतोर्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम् ।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ ३५४ ॥

ग्राह्यमण्डूरमाह--शतेति—मण्डूरं मित्रपञ्चकैः सह ध्मातं पुनर्लौहभावं नापद्यते । न चापि चुम्बकेनाकृष्यते, नान्येनो

१. रासायनिकसूत्रं तु $Fe_2O_3$ ।

पायेन मण्डूरं लोहभावमापादयितुं शक्यते। शतोर्ध्वम्=शतवर्षादपि-पुराणं किट्टं=लोहमलमुत्तमं ज्ञेयम्। षष्टिवर्षहीनं तु विषोपमं=विषसदृशं तन्मारणाय न ग्राह्यम् ॥ ३५४ ॥

सौ वर्ष से पुराना मण्डूर उत्तम होता है, अस्सी वर्ष का मण्डूर मध्यम तथा साठ वर्ष का मण्डूर अधम होता है। इससे कम वर्ष का मण्डूर विष के समान है ॥ ३५४ ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥

मण्डूरस्य शोधनं प्रयोगञ्चाह—दग्ध्वेति--अक्षकाष्ठै=बिभीतककाष्ठैरायसं=लोहसम्बन्धि, मलं=किट्टम्, दग्ध्वा=अङ्गारसमानं कृत्वा, अक्षपात्रस्थगोमूत्रेऽष्टवारं निर्वापितम्-"तप्तस्याप्सु विनिक्षेपो निर्वापः स्नपनञ्च तत्" र. र. स. ८-५१.। शुद्धं भवेत्। यत्र च बिभीतककाष्ठाभावः तत्र गोमूत्रयुतवराकषाये निर्वापयेत्, अङ्गारेषु च अक्षफलत्वक्प्रक्षेपः कार्यः। ततस्तद्विचूर्ण्य लौहखल्वे लौहदण्डेन मसृणीकृत्य मधुना लीढ़ मास्वादितं प्रातर्निरन्नोदरे दिरक्तिमात्रया धारोष्णदुग्धानुपानेनेति शेषः। शा.ध. तु-अष्टवारनिर्वापणानन्तरं द्विगुणत्रिफलाक्वाथेन वह्नौ भर्जनमभिहितम्। कुम्भाह्वयं पाण्डुगदम्=कुम्भकामलां पाण्डुरोगं चाऽचिरेण=स्वल्पकालेनैव निहन्ति। सर्वत्र यकृत्प्लीहरोगेषु रक्ताल्पतायाञ्चास्य प्रयोगो बालयकृद्रोगे च विशेषेण भवति। प्रसिद्धयोगाश्च-हंसमण्डूर-पुनर्नवामण्डूरादयः। प्रायोऽस्य शोधनानन्तरमेव मधुघृतत्रिफलादिना मर्षणतरं कृत्वा प्रयोगो भवति न पुटनमिति वृद्धव्यवहारः।

पुटने तु—त्रिफलाकुमारीस्नुगर्कदुग्धेषु पुटेत्त्रिधा । र. सार। इत्यधिकस्याधिकं फलम्। वंश रोत्पन्नरसेन दद्यात्पुटानि मण्डूररसे शतञ्चेत् । लौहस्य भस्माप्यधरीकरोति, इति तत्रैव ॥३५५॥

मण्डूर को बहेड़े की लकड़ी की आग पर लाल करके गोमूत्र में आठ वार बुझावे। उसे चूर्ण करके मधु के साथ मिलाकर चाटे तो कुम्भकामला और पाण्डुरोग शीघ्र नष्ट होता है ॥३५५॥

किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शताधिकम् ।
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते गुणम् ॥३५६॥

किट्टापेक्षया मुण्डादीनां विशेषमाह— किट्टेति-शताधिकं=शतगुणाऽधिकफलदम् । मण्डूरोत्पत्तिक्रमे क्रमे-लौहापेक्षया मण्डूरे प्राणवायोराधिक्यं जायते, मानभा॰ तुलनायां मण्डूरस्य मूलापेक्षया वर्द्धितं भवति ॥ ३५६ ॥

मण्डूरकी अपेक्षा दश गुणा अधिक मुण्डलौह-भस्म, मुण्ड से सौ गुणा तीक्ष्णलौह की भस्म, तथा फौलाद से लाख गुणा अधिक कान्तलौह की भस्म खाने से गुण करती है ॥ ३५६ ॥

अथ सर्वधातुमारणविधिः—

नागैः सुवर्णं रजतञ्च ताप्यैर्गन्धेन ताम्रं शिलया च नागम् ।
तालेन वङ्गं त्रिविधञ्च लौहं नारीपयो हन्ति च हिंगुलेन ॥३५७॥

( इति स्वर्णादिशोधनमारणविधिः)

परिशेषे सर्वेषां धातूनां पूर्वोक्तमपि संक्षिप्तं मारणमाह— नागैरिति-नागैः शीशकैर्युतं नारीपयः सुवर्णं हन्ति, एवं नारीपयसा

सर्वत्रैवाऽनुयोगः, ताप्यैः=स्वर्णमाक्षिकेण शिलया=मनःशिलया, तालेन=हरितालेन त्रिविधं च लौहं मुण्डतीक्ष्णकान्तभेदेन, हिङ्गुल-योगस्तु लौह एव भवति। स्तन्येन लौहमारणं पूर्वानुक्तमपि र. र.स.-हिंगुलस्य पलान्पञ्च नारीस्तन्येन ५-१११. इत्यभिप्रायेणोक्तम्॥३५७॥

( इति स्वर्णादिधातुशोधनमारणम् )

स्वर्ण की भस्म सीसे से, चांदी की भस्म स्वर्णमाक्षिक से, ताम्रभस्म गन्धक से, नागभस्म मनसिल से, और वङ्गभस्म हड़ताल सें, मुण्ड, तीक्ष्ण, कान्त को हिंगुल और स्त्री के दूध से मारे ॥३५७॥

अथ मणिमुक्तादिशोधनमारणम्—

स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च।
मणिमुक्ताप्रवालानां यामैके शोधनं भवेत् ॥ ३५८ ॥

मणिमुक्तादिशोधनमाह—स्वेदयेदिति—दोलिकायन्त्रे=दोला एव दोलिका, स्वार्थे कः। ततः प्रत्ययस्थादिति कात्पूर्वाकारस्येत्त्वम्। दोलिकायन्त्रं=दोलायन्त्रम् (१२७ श्लो. अ.१) जयन्त्या जैंत इति भाषा, यामैके=प्रहरमात्रे स्वेदनात् मण्यादीनां शोधनं भवेत् ॥ ३५८ ॥

मणि, मोती, मूंगा आदि रत्नों को जयन्ती के पत्तों के रस में दोलायन्त्र द्वारा एक पहर स्वेदन करना चाहिये। इस प्रकार वे शुद्ध हो जाते हैं ॥ ३५८ ॥

मुक्ताफलानि शुद्धानि खल्ले पिष्ट्वा पुटेल्लघु।
एवं भस्मत्वमाप्नोति वज्रकं काञ्जियोगतः ॥३५६॥

मुक्तावज्रयोर्मारणमाह—मुक्तेति-मुक्तोत्पत्तिस्तु-पारसीकसागरे रामेश्वरसमीपस्थे ( मीनार की खाड़ी ) च सागरे नातिगम्भीरे

जले शुक्तिस्था भवति । शुक्त्युदरस्थजीवत्वचो हि निस्सरति निर्यासवद्रसः । दैवात् तत्र प्राप्ताः कौशलेन प्रवेशिता वा सूक्ष्मशुक्तिकणास्तेन निर्यासेनावृताः कालेन मौक्तिका भवन्ति, अतः कृत्रिमाकृत्रिमयोर्विशेषं न कोपि वक्तुं शक्नोति।

शुक्तिः शङ्खो गजक्रोडः फणिर्मत्स्यश्च दर्दुरः।
वेणुश्चाष्टौ समाख्याताः सुज्ञैर्मौक्तिकयोनयः॥

इति शुक्त्यतिरिक्ता अपि सप्त मौक्तिकयोनयः। काकचण्डीश्वरकल्पतन्त्रस्य मण्डूककल्पे—धातुः कोऽपि भवेदस्य मस्तके रत्नसन्निभः। ३। इत्युक्तम्।

लक्षणं च—ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत्।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम्॥

त्याज्यं च—रूक्षाङ्गं निर्जलं श्यावं ताम्राभं लवणोपमम्।
अर्धशुभ्रं च विकटं ग्रंथिलं मौक्तिकं त्यजेत्। र. र. स. ४-१३।
मुक्ताफलानि=मोती इति ख्यातानि । लघु पुटेत्--अष्टसंख्यकवनोपलैरित्यर्थः।

गुणाश्च—मुक्ताफलं लघु हिमं मधुरं च कान्ति-
दृष्ट्यग्निपुष्टिकरणं विषहारि भेदि।
वीर्यप्रदं जलनिधे र्जनिता च शुक्ति-
र्दीप्ता च पक्ति रुजमाशु हरेदवश्यम्॥
कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यनुत्।
पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम्।
वारुणीयन्त्रानःसृततरुणीकेतकीपुष्पजलेन दिनं मर्दिता

मुक्तापिष्टिर्भवति । यत्र सायं चतुर्हस्तपददाहयुतोऽल्पो ज्वरः तत्रानया ज्वरह्रासो मूत्रप्रसादश्च भवति । मुक्तायोगादपि चये मृगाङ्क-योगानां विशेषोपकारिता । मुक्ताविषये विशेषस्तु-र. इ. चू. १३-६ । आ. वे. प्र. १३-५० । र. प. ११७ । इत्यादिभ्यो ज्ञेयः ।

एवमिति—वज्रकं=हीरकम् । काञ्जिकयोगतः=वज्रं चूर्णयित्वा काञ्जिकेन पिष्ट्वा पुटेत् ॥ ३५९ ॥

शुद्ध मोतियों को खरल में पीसकर लघुपुट में फूंके, भस्म हो जाती है। इसी प्रकार हीरे को कांजी के योग से भस्म करे ॥३५९॥

मतान्तरम्—

कुमार्य्या तण्डुलीयेन स्तन्येन च निषेचयेत् ।
प्रत्येकं स सप्तवारांश्च तप्ततप्तानि कृत्स्नशः ॥३६०॥
मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः ।
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥ ३६१ ॥

प्रकारान्तरेणाह—कुमार्य्येति-मौक्तिकादीनि तप्ततप्तानि= पुनः पुनस्तप्तानि, कुमार्य्या=घृतकुमार्य्या तण्डुलीयेन मारिषस्वरसेन स्तन्येन च सप्तवारं निषेचयेत् । अशेषतो रत्नानि=सर्वरत्नानि क्षणाल्पेनैव समकालमेव विविधवर्णानि=अनेकवर्णानि । स्तन्ये-नेत्यत्र स्तुल्येनेति गतानुगतिकन्यायेन प्रचलितः पाठः । र. इ. चि, र. क. धे. अनयोः स्पष्टमेव स्तन्येन चेति पाठः ॥३६०-३६१॥

मोती, मूंगा तथा सब रत्नों को आग में गरम कर घीकुवार के रस, चौलाई के रस तथा स्त्री के दूध से पृथक् सात वार

बुझावें । इससे मोती मूंगा तथा विविध वर्ण के पञ्च रत्न क्षण में विविध वर्ण हो भस्म होते हैं इसमें सन्देह नहीं ॥ ३६०-३६१ ॥

प्रवालमारणम्—

स्त्रीदुग्धेन प्रवालञ्च भावयित्वा तु खल्लके ।
स्थापयेद्धण्डिकामध्ये शरावेण निरोधयेत् ।
चुल्ल्यामग्निप्रतापेन म्रियते प्रहरद्वये ॥ ३६२ ॥

स्त्रीदुग्धेनेति—अस्य शुद्धः पाठ एकपादश्च नासादितः । प्रवालञ्चेति—मृतस्य सागरीयजन्तु[१] विशेषस्य सुधासवर्णास्थि-एव प्रवालं नाम । तच्च-श्वेत, कृष्ण, मृत्तिकामलिन-रक्तभेदाच्चतुर्विधम् । अत्र—आगाररञ्जनक्रान्तं वक्रं सूक्ष्मं सकोटरम् ।
रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत् ॥ आ. वे. प्र. ।१३-८७।
तेषु प्रायो भूमध्यसागरोद्भवं रक्तं पवित्रं रत्नेषु परिगण्यते ।
यथा बालार्ककिरणारक्ता सागरसलिलोद्भवा लता याऽस्ति ।
न त्यजति निजरुचिं निकषे घृष्टाऽपि सा स्मृता जात्या[२]॥
आ. वे. प्र. । १३. ८८ ।

पक्वबिम्बीफलच्छायं वृत्तायतमवक्रकम् ।
स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम् । र.इ.चू.१२.११.।
गुणाश्च— प्रवालं मधुरं साम्लं कफपित्तादिदोषनुत् ।
वीर्यकान्तिकरं स्त्रीणां धृते मङ्गलदायकम् ॥ आ.वे.प्र.१३-८६ ॥

---

१. ANTHAZOANPOLYPS.

२. शशासृक्सिन्दूरपलाशपुष्पसदृशं क्रमेणोत्तममध्यमाधमं ज्ञेयम् । पारसीक समुद्रसङ्कटे ( इरान की खाड़ी ) कृष्ण प्रवालं भवति ।

अपि च—क्षयपित्ताक्षकासघ्नं दीपनं पाचनं लघु।
विषभूतादिशमनं विद्रुमं नेत्ररोगनुत्॥ र.इ.चू. १२-१३॥
शुद्धं प्रवालं मसृणं चूर्णीकृत्य वारुणीयन्त्रनिःसृततरुणीपुष्प-लेनैकविंशतिवारभावितं प्रतिरात्रं च चन्द्रकिरणैराप्लुतं चन्द्रपुटीप्रवालं प्रवालपिष्टिर्वा नाम पित्तरोगेषु प्रशस्यते। द्वित्रा कुमारीरसेन पुटितं प्रवालभस्म कासे क्षये मधुमेहे च क्रमेण मधुना तण्डुलधावनेन बिल्वपत्ररसेन युज्यते। जीर्णज्वरे च गुडूचीरसमधुना। कण्डू-स्फोटविचर्चिकादिषु पक्वकदलीफलेन पुष्टिकृद्रक्तप्रसादनमर्शःसु च हितम्। मा. १-२.ट.॥ ३६२॥

मूंगे को खरल में स्त्री के दूध की भावना दे चक्रिका बना शुष्क होने पर हांडी में रखे। हांड़ी के मुख को शराव द्वारा बन्द करके इस सम्पुट को तीव्र आग पर रखकर पकावे। दो पहर में मूंगा भस्म हो जाता है॥ ३६२॥

कुलत्थस्य पलशतं वारिद्रोणेन पाचयेत्।
तस्मिन् पादावशेषे च क्वाथेऽष्टौ मणयः शिलाः॥३६३
आतपे त्रिदिनं शोष्याः, क्वाथसिक्ताः पुनः पुनः।
शुध्यन्ते सर्वरत्नानि मणयश्च न संशयः॥ ३६४॥

(इति मुक्तादिशोधनमारणम्)

सर्वरत्नानामेकरीत्या सरलशोधनमाह-कुलत्थस्येति-कुलत्थः= शिम्बीधान्यविशेषः कुलथी इत्याख्यः। पलशतं=सपादषट्प्रस्थं, वारिद्रोणेन-'द्विगुणं तद्द्रवार्द्रयोरिति' द्वात्रिंशत्प्रस्थजलेन, पाद-शेषेऽष्टप्रस्थशेषे, अष्टौ मणयः र. र. स. ४. २-४। तु.।

वैक्रान्तः सूर्यकान्तश्च हीरकं मौक्तिकं मणिः ।
चन्द्रकान्तस्तथा चैव राजावर्त्तश्च सप्तमः ॥
गरुडोद्गारकश्चैव ज्ञातव्या मणयस्त्वमी ।
पुष्परागं गोमेदश्च पद्मरागं प्रवालकम् ॥
वैदूर्यं च तथा नील मेतेऽपि मणयो मताः ।
पद्मरागेन्द्रनीलाख्यौ तथा मरकतोत्तमः ॥
पुष्परागः सवज्राख्यः पञ्चरत्नवराः स्मृताः ।
मुक्ताफलं हीरकं वैडूर्यं पद्मरागकम्[1] ।
पुष्परागं[2] गोमेदं[3] नीलं[4] गारुत्मतं[5] तथा ॥
प्रवालयुक्तान्येतानि[6] महारत्नानि वै नव ।

नवरत्नान्येव महारत्नानि । क्वचिन्नवरत्नेषु लाजावर्त्तो दृश्यते तत्र वैडूर्य्यन्नास्ति ।

वैक्रान्तः सूर्य्यकान्तश्च चन्द्रकान्तस्तथैव च ।
राजावर्तो लालसंज्ञः पेरोजाख्यस्तथाऽपरः ॥
मुक्ताशुक्तिस्तथा शङ्खकर्पूराश्माऽथ काचजाः ।
नीलपीतादिमणयोऽप्यन्ये विषहरा हि ये ॥
वह्न्यादिस्तम्भका ये च ते सर्वे हि परीक्षकैः ।
उपरत्नेषु गणिता मणयो लोकविश्रुताः ॥

---

१. RUBY-OXIDE OF ALUMINIUM. २ TOPAZ.
३. AGATE. ४. SAPPFIRE. ५. EMARALD.
६. CORAL. ७. वैशेषिकदर्शने अ. ५. आ. १. सू. १५. प्रोक्तः तृणकान्तः कहरवा औद्भिदविशेष परत्नेषु ज्ञेयः ।

मुक्ताफलं=मुक्ता । हीरकं=वज्रम् उत्पत्तिश्चास्य-खनिस्त्वष्टधा । द्वे तत्र युगे युगे प्रभवतस्तत्रादिमे कौशलः । कालिङ्गस्तदनन्तरे निर्गदितो वङ्गस्तथा मालवः । सौराष्ट्रो मणिपुण्ड्रकस्त्वथ कलौ सोपारवज्राकरौ । आ. वे. प्र. बृहत्संहितायान्तु-हिमालयस्य परिसरे ताम्रवर्णं वज्रं भवति । कृष्णा-गोदावर्योर्मध्यप्रदेशे (गोलकुण्डा) सौराष्ट्रादिषु खनिवर्णनमस्ति । वैडूर्यं=विडूर देशोद्भवं=विदुरमणिः । पद्मरागक=पद्मरागं=माणिक्यम् । पुष्परागं= पुष्पदृषद् पुखराज इति । गोमेदः=स्वनामख्यातः पीतरक्तवर्णः । नीलं=हरिनीलम्, इन्द्रनील=नीलरत्नेत्याख्यम् । गारुत्मत=मरकतम् । गरुड़ोद्गारः=पन्ना इति । अत्र विशेषस्तु--आ. वे. प्र. टो ज्ञेयः । शिला=रत्नानि, न मनःशिला न वा शिलाजतु । शिलाशब्दो हि मनःशिलायां, शिलाजतुनि 'अधस्ताद्दारुणि शिला" इति द्वारस्तम्भाधस्थकाष्ठे-"ग्रावोपलाश्मानः शिला दृषदिति"-पाषाणे । अत्र तु रत्नानां पाषाणसामान्याद्रत्नप्रकरणा 'च्छुद्ध्यन्ते सर्व-रत्नानीति-अत्रैव युग्मकोत्तरार्धे रत्नानीतिपाठात्-मनःशिलाशोध-नस्य पूर्वमुक्तत्वान्मणयः शिलेति मणिशब्दसाहचर्याच्छिला इति बहुवचनान्ताच्च । यद्यपि—'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" ति-अमरात्-मणिरत्नयोः पर्य्यायत्वम् । तथाप्यत्रैव-शुद्ध्यन्ते सर्वरत्नानि मणयश्च न संशयः, इति मणिरत्नयोः पृथगुपादानात्--अष्टौ मणया नवरत्नानि इति संख्या भेदात्-मणिशब्देन शिलेतरा (पाषाणाः) ज्ञेयाः । श्री. हरिदत्त शास्त्रिणस्तु-शिला इति बहुवचनान्तात् । कोलपाषाण (पत्थर

बेर-हजरलयहूद ) नागपाषाण ( जहरमोहरा ) अकीक ( स्फटिक भेदः ) सङ्गसरेमाही । अश्मसारः (यशब) अश्मसारमयं भाण्डमिति महाभारते राजसूययज्ञप्रकरणे । इत्यादयो ग्राह्या इति वदन्ति । इदञ्च ज्ञेयम्—मुक्तादिष्वविशुद्धेषु न दोष स्याच्च शास्त्रतः । तथाऽपि गुणवृद्धिः स्या च्छोधनेन विशेषतः ॥ र. इ. चि. ७-६६ । शेषं सुगमम् ॥ ३६३-३६४ ॥

६ सेर कुलथी २ द्रोण जल में पकावे । चौथाई बचने पर क्वाथ को उतार ले । इस क्वाथ में आठों मणि और शिलाओं को डालकर धूप में तीन दिन भावना दे । इस क्वाथ द्वारा बार २ सींचने से सब रत्न और मणि शुद्ध हो जाती हैं । इसमें संशय नहीं ॥ ३६३-३६४ ॥

## अथ विषशुद्धिः ।

कृत्वा चणकसंस्थानं गोमूत्रैर्भावयेत् त्र्यहम् ।
समटङ्कणसम्पिष्टं मृतमित्युच्यते विषम् ॥ ३६५ ॥

क्रमप्राप्तं विषशोधनमाह- कृत्वेति—तत्र–वत्सनाभविषं[1] श्वेत-कृष्णभेदेन द्विविधमपि विपणिषु लभ्यते । स्थावरजङ्गमभेदाश्च

---

1. The Hindu Physicians use some varieties as cardiac stimulants after prolonged boiling in Cow's urine. By this process the active alkaloids are said to lose their depressant action on the heart and become stimulants instead. By R. N. Chopra.

प्रायश्चिकित्सायामनुपयोगित्वाद् ग्रन्थगौरवभिया च न लिख्यन्ते तन्त्रान्तरेभ्यो जिज्ञासुभिरूह्यानि ।

ये दुर्गुणा विषेऽशुद्धे ते स्यु र्हीनाविशोधिते ।
तस्माद्विषं प्रयोगेषु शोधितं योजयेद्भिषक् ॥
उद्धरेत्फलपाके तु नवं स्निग्धं घनं गुरु ।
अव्याहतं विषहरैर्वातादिभिरशोषितम् ॥

आ. वे. प्र. १४-४५-४६ ।

विषं=वत्सनाभापरनामकं शृङ्गिकविषम्, मीठातेलिया इति । तस्यैव रसादिषु व्यवहारात्, तच्च चणकसंस्थानं=चणकवत् स्थूलं खण्डयित्वा तनुवस्त्रपोटल्यां कृत्वा प्रात र्गोमूत्रे स्थापयेत् । द्वितीयदिने प्रातः पूर्वं गोमूत्रमपाकृत्य पुनर्नूतनं गोमूत्रं देयम् । एवं=त्र्यहं=त्रिदिनं भावयेत्, ततस्तीव्रातपे शोषयित्वा समटङ्कण-सम्पिष्टं--विषं=समानभागटङ्कणेन चूर्णीकृतं मृतमित्युच्यते । तथा च—तुल्येन टङ्कणेनैव द्विगुणेनोषणेन च ।

विषं संयोजितं शुद्धं मृतं भवति सर्वथा ॥ आ वे.प्र.१४-५८ ।

रक्षणं च-रक्तसर्षपतैलेन लिप्ते वाससि धारयेत् ।

विषं शुद्धं प्रयत्नेन नान्यत्र गुणहानितः ॥ र.इ. चि. ७-२३ ।

तीव्रातपाभावे—विषभागांश्चणकवत्स्थूलान्कृत्वा तु स्वेदयेत् ।
गोदुग्धे घटिकाः पञ्च शुद्धिमायाति तद्विषम् ॥
न प्रोक्तं शोधनं यस्य विषस्योपविषस्य वा ।
गोदुग्धे शोधनं तस्य कर्त्तव्यं शुद्धिकारकम् ॥
खण्डीकृत्य विषं वस्त्रपरिबद्धन्तु दोलया ।

अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात् ॥
आ. वे. प्र. १४-५४।

गोमूत्रशोधनाद्विषस्य हृत्सादको दोषोऽपगच्छति, गोदुग्धेन स्वेदनात् हृद्बलाधानकरो गुणश्चतुःकृत्वो वर्धते ।

गुणाश्च—विषं रसायनं बल्यं वातश्लेष्मविकारनुत् ।
कटुतिक्तकषायं च मदकारि सुखप्रदम् ॥
व्यवायि शीतनुद्ग्राहि कुष्ठवातास्रनाशनम् ।
अग्निमान्द्यं श्वासकासं प्लीहोदरभगन्दरान् ।
गुल्मपाण्डुव्रणार्शांसि नाशयेद्विधिसेवितम् ॥
आ. वे. प्र. १४. ५१-५२।

अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ।
प्रत्यहं विषकन्दस्य त्रियवं यवमेव वा ॥
शुद्धस्य राजिकावृद्ध्या वर्षं भुक्त्वा जयेद् गदान् ।
र. र. स. २६-११७।

मात्रा च सर्षपमाना । बाले वृद्धे च न देयम् । घातिनी मात्रा ३० र. । मृतिकालः ७-१० घटिकानन्तरम् ।

दातव्यं सर्वरोगेषु घृताशिनि हिताशिनि ।
क्षीराशिनि प्रयोक्तव्यं रसायनरते नरे ॥ र. इ. चि. ७-३५।

अतियोगे च पित्तान्तं वमनं कुर्यादामान्तं रेचनं चरेत् ।
र. र. स. २६-१२३।

तावद्द्यादजादुग्धं यावद्भ्रान्तिर्न जायते ।
अजादुग्धं यदा कोष्ठे स्थिरीभवति देहिनः ॥
विषवेगं तदोत्तीर्णं जानीयात्कुशलो भिषक् ।

विषहृद्योगाश्च--विषं हन्याद्रसः पीतो रजनीमेघनादयोः ।
सर्पाक्षी टङ्कणं वापि घृतेन विषहृत्परम् ॥
पुत्रजीवकमज्जा वा पीता निम्बूकवारिणा ।
विषवेगं निहन्त्येव वृष्टिर्दावानलं यथा ॥
र. इ. चि. ७-४२-४४ ।

विषे पथ्यालि–घृतं क्षीरं सितां क्षौद्रं गोधूमांस्तण्डुलान्यवान् ।
मरिचं सैन्धवं द्राक्षां मधुरं पानकं हितम ॥
ब्रह्मचर्यं हिमं देशं हिमं कालं हिमं जलम् ।
विषस्य सेवको मर्त्यो भजेदतिविचक्षणः ॥
आ. वे. प्र. १४-७५-७६ ।

विषविषये विशेषस्तु—र. र. आ. विषाधिकारः । अत्रश्व-शृगालदंष्ट्रचिकित्साप्यस्ति । र.र. स. २९ अत्र विषविषये बहूक्तम् । र. इ. चि. ७ । आ. वे. प्र. १४ । र. त. २४ । तो ज्ञेयः ॥ ३६५॥

विष को चने के समान खण्ड २ करके गोमूत्र से तीन दिन भावना दे, इस प्रकार विष शुद्ध हो जाता है । विष में समान भाग सुहागा डाल पीस ले तो विष मर जाता है ॥ ३६५ ॥

अथवा त्रैफले क्वाथे विषं शुध्यति पाचितम् ।
दोलायां त्रिफलाक्वाथे छागीक्षीरे च पाचितम् ॥३६६॥
गोमूत्रपूर्णपात्रे च दोलायन्त्रे विषं पचेत् ।
दशतोलकमानेन चादौ वैद्यो दिवानिशम् ॥ ३६७ ॥

मतान्तरम्—

विषभागांश्चणकवत् स्थूलान् कृत्वा तु भाजने ।

तत्र। गोमूत्रकं दत्त्वा प्रत्यहं नित्यनूतनम् ॥ ३६८ ॥
शोषयेत्त्रिदिनादूर्ध्वं धृत्वा तीव्रातपे ततः।
प्रयोगेषु प्रयुञ्जीत भागमानेन तद्विषम् ॥ ३६९ ॥
(इति विषशुद्धिः)

अथवेति–विषं चणकस्थूलं खण्डयित्वा पोटल्यां कृत्वा दोलायां त्रिफलाक्वाथे–अहोरात्रं पचेत् । त्रिदिनमित्यपरे। एवं त्रिफलाक्वाथे छागीक्षीरे च । तथा गोमूत्रपूर्णपात्रे १० तोलकं विषं दिवानिशं पचेदिति विषशोधनस्य प्रकारत्रयम् । अत्र पचिः स्वेदनार्थे ज्ञेयो दोलायामिति लिङ्गात्, ग्रन्थान्तरे स्वेदन-निर्देशाच्च। विषभागानिति–स्पष्टम्।

विषप्रयोगाश्च—मृत्युञ्जय, हिंगुलेश्वर, आनन्दभैरव, सञ्जीविन्यादयः ॥ ३६६-३६९ ॥

इति विषाधिकारः।

अथवा त्रिफला के क्वाथ में दोलायन्त्र से विष को स्वेदन करे तो वह शुद्ध होता है। अथवा क्रमशः त्रिफलाक्वाथ और बकरी के दूध में पकावे तो विष शुद्ध हो जाता है ॥ ३६६ ॥

एक हांडी में गोमूत्र भर उसमें दस तोला विष को दोलायन्त्र से दिन रात स्वेदन करे तो वह शुद्ध हो जाता है ॥ ३६७ ॥

एक मृत्पात्र में गोमूत्र में चने के समान विष के खण्ड कर डाल दे। प्रतिदिन पुराना गोमूत्र फेंक कर नया डालता जाय तीन दिन के पश्चात् तीव्र धूप में रख विष को सुखा ले। इस प्रकार से शुद्ध विष को औषधयोगों में उक्त मान में प्रयुक्त करे॥ ३६८—३६९ ॥

अथोपविषमाह—

अर्कसेहुण्डधुस्तूरलाङ्गलीकरवीरकाः ।

गुञ्जाऽहिफेनावित्येताः सप्तोपविषजातयः ॥ ३७० ॥

रसस्य सुखकरत्वादुपविषाण्याह--अर्केति-अर्कः=आंक इति, सेहुण्डः=स्नुही, धुस्तूरः=धतूरा इति, लाङ्गली=कलिहारी इति । आर्द्रकसदृशक्षुपः कन्दश्च, करवीरः=कनेर इति । सप्तेति-कुपीलु-भल्लातकविजयादीनामुपलक्षणम् । उपविषा=गौणविषाः, जाति-शब्दः सामान्यवाची । खसतिलफलस्य दुग्धवन्निर्यासमहिफेन-विषमेव सूतोपकारकत्वात्तूपविषेषु परिगणनम् ।

शोधनप्रकारश्च--अहिफेनं शृङ्गवेररसैर्भाव्यं त्रिः सप्तधा ।

शुद्ध्यत्युक्तेषु योगेषु योजयेत्तद्विधानतः ॥ यो.र.त. ।

गुणाश्च तत एव ज्ञेयाः । विशेषगुणास्तु-औषधिसंग्रहे (मराठी भाषा) ज्ञेयाः । भङ्गागुणाश्च, आनन्दकन्दे ऽपि. उ. १५-२६७तो ज्ञेयाः ।

अन्यच्च--अहिफेनं जलेनालोड्य वस्त्रपूतं समदुग्धं मन्दा-ग्निना लेहीभूतमातपे शोषयेत् । मात्रा $\frac{1}{8}$-$\frac{1}{2}$ र. । घातिनी मात्रा २-र. । मृतिकालः २०-३० घटिकामध्ये । सद्यो रक्तरोधकं वेदनाहरं मदकरं निद्राकरं च । प्रयोगाश्च--कर्पूरादिवटी-अभयनृसिंहरसाऽहि-फेनासवादयः । अस्य कुपीलोः सोमलधत्तूरयोश्च गुणाः—र. त. औषधिसंग्रहाच्च ज्ञेयाः । विशेषज्ञानन्तु-व्यवहारायुर्वेदग्रन्थेभ्यः सावधानतया विशेषेणाभ्यसनीयम् । तत्राऽहिफेनविषाशितरोगि-दर्शनसमकालमेव प्रस्थमितोष्णजले तोलकं लवणं, १० रक्तिकं यशदभस्म वा तुत्थकं २ गुञ्जं वा--आकण्ठं पाययेत् पुनः पुनर्वाम-

येत् । अर्कदुग्धभावितलवणं वा दुग्धेन, रक्तिकं ताम्रखण्डं वा जले घृष्टं वमनाय प्रशस्तम् । सति च सुयोगे नलिकया पुनः पुनरामाशयप्रक्षालनं यावत्प्रक्षालनजले-अहिफेनलेशो गन्धो वा निर्गच्छति । PERMAGNATE OF POTASH परमांगनेट औफ पोटाश-इदं विशेषेणाहिफेनागदं नाम ANTIDOTE प्रस्थमिते जले १० रक्तिकं विलीनं कृत्वा पाययेदाकण्ठ पुनः पुनर्यावद्विवर्णमायाति तज्जलं सवर्णतां गते च न पाययेत् । न कदाचिदपि निद्रितो भवेद्विषपायी ॥ ३७० ॥

आक, सेहुण्ड, धतूरा, कलिहारी, कनेर, रत्ति तथा अफीम; ये सात उपविष की जातियां हैं ॥ ३७० ॥

तच्छुद्धिः—

धुस्तूरस्य च यद्बीजमन्यच्चोपविषं च यत् ।
तच्छोध्यं दोलिकायन्त्रे क्षीरपूर्णेथ पात्रके ॥ ३७१ ॥

( इत्युपविषशुद्धिः )

उपविषाणां शोधनमाह-धुस्तूरस्येति—उपविषमर्कादि, क्षीरपूर्णे-गोदुग्धपूर्णे, पात्रके=पात्र एव पात्रके स्वार्थे पादपूरणार्थे वा कः । हण्डिकायां गोदुग्धं दत्त्वा तेन दोलायां स्वेदयेदित्यर्थः ॥ ३७१ ॥

( इत्युपविषशुद्धिः )

धतूरे के बीज और अन्य उपविष शुद्ध करने हों तो उन्हें दूध से भरे हुए पात्र में दोलायन्त्र द्वारा एक प्रहर स्वेदन कर शुद्ध करे ॥ ३७१ ॥

अथ जयपालशुद्धिः--

निस्तुषं जयपालश्च द्विधा कृत्वा विचक्षणः ।
एतद्बीजस्य मध्यन्तु पत्रवत् परिवर्जयेत् ॥ ३७२ ॥
अष्टमांशेन चूर्णेन टङ्कणस्य च मेलयेत् ।
केशयन्त्रे च तद्भाव्यं पाच्यं दुग्धेन सम्प्लुतम् ।
त्रिरात्रं शुद्धिमायाति जैपालममृतोपमम् ॥ ३७३ ॥

निस्तुषमिति-जयपालशोधनम्—जयपालबीजम्, निस्तुषं=बाह्यकठिनत्वग्रहितम् । ततो द्विधाकृत्वा=द्विदलं विधाय, विचक्षणः=पण्डितो द्विदलविधाने बीजं खण्डितं यथा न स्यादिति विचक्षणपदोपादानम् । बीजस्य मध्यं=द्विदललग्नं पत्रवत् भावि अंकुर मूलमिति यावत् । जयपालजिह्वेति यन्नाम तत् परिवर्जयेत्=निराकुर्यात्, ततश्चूर्णयित्वा अष्टमांशेन जयपालचूर्णापेक्षयेत्यर्थ, टङ्कणस्य चूर्णेन मेलयेत् । तदनु केशयन्त्रे—धान्यपूरितसुस्थाल्यां सुमुखायां ( स्यां ) मुखोपरि । सुदुग्धैर्नारिकेलस्य खर्परे विसंमर्दयेत् । केशो दुग्धे प्लुतो यस्मात् केशयन्त्रं तथा स्मृतम ॥ 'वै. श. सि. वे. चन्द्रिका' त उद्धृतम् । तद्भाव्यम्, भावनीयं=ततो दुग्धेन सम्प्लुतं=सम्यग्युतं त्रिरात्रं पाच्यं=स्वेदनीयम् । सरलप्रकारश्च-जयपालस्य वहिस्त्वचमपाकृत्य जलेन दुग्धेन मूत्रेण वा स्वेदयित्वा ततो विदार्य रसनां पृथक्कृत्य तक्रेण निम्बुकाम्लेन वा मर्दयित्वा नूतने खर्परे प्रलिम्पेत् पुनः पुनर्यावद्विगतस्नेहं रजःसन्निभं भवेदेवं कुर्यात् ॥ ३७२-३७३ ॥

जमालगोटे के बीजों का छिलका उतार कर, एक २ बीज के

दो भाग कर उसके बीच की पतली जीभ निकाल फेंक दे। फिर बीजों का आठवां भाग सुहागे का चूर्ण मिला कर केशयन्त्र में रख दूध से भरे पात्र में स्वेदन करे। इसी प्रकार तीन दिन स्वेदन करने से जमालगोटा शुद्ध हो जाता है और अमृत के समान गुणदायक होता है॥ ३७२—३७३॥

अथ स्नुहीक्षीरशुद्धिः—

चिञ्चापत्ररसे कर्षे वस्त्रपूते पलद्वयम्।
स्नुहीक्षीरं रौद्रयन्त्रे भावयेद् यत्नतः सुधीः।
द्रवे शुष्के समुत्तार्य सर्वयोगेषु योजयेत्॥ ३७४॥

स्नुहीक्षीरशुद्धौ-चिञ्चापत्ररस इति—चिञ्चा=इमली इति तत्पत्ररसं कर्षे=कर्षमाने, वस्त्रेण पूते च पलद्वयं स्नुहीक्षीरं दत्त्वा रौद्रयन्त्रे=आतपे भावयेत् द्रवे शुष्के च योजयेत्। यो. र. आ. तु. अर्कसेहुण्डयोर्दुग्धं तत्स्वयं शुद्ध मुच्यते। र। उपविषप्रकरणम्।३७४।

स्नुही का दूध दो पल ले। उसमें इमली के पत्तों के रस को वस्त्र से छान कर एक कर्ष भर मिला धूप में सुखावे। इस प्रकार थोहर के दूधकी शुद्धि होती है। इसे सब योगोंमें डाले॥ ३७४॥

अथ जलौकाशोधनम्—

चिरन्तनीं जलौकान्तु ताम्रपात्रेषु रक्षयेत्।
चतुर्माषं निशाचूर्णं जलाष्टकपले क्षिपेत्॥ ३७५॥
तस्मिन् क्षिपेत् जलौकां तां स्वयं लालां परित्यजेत्।
त्यक्तलाला जलौका च सा योज्या रक्तमोक्षणे॥३७६॥

जलौकाशोधने-चिरन्तनीमिति-जलमोकोऽस्या जलौका। रक्तपाः, एताश्च गृहपालिता अपि नगरे भवन्ति। चिरन्तनीं=पूर्वं व्यवहृतत्वादशङ्कनीयामित्यर्थः। चतुर्माषमिति-अष्टपलजले माषकचतुष्टयं निशाचूर्णं=हरिद्राचूर्णमपरताम्रपात्रे दत्वा पूर्वताम्रपात्ररक्षितां जलौकां हरिद्राचूर्णयुतजले क्षिपेत्। तत्र स्थिता सा हरिद्रा गन्धेन लालां परित्यजेत्। लालाय चास्या रक्ततनूकरी शक्तिरस्ति त्यक्तलाला च सा जलौका नृपाढ्यबाल भीरु-नारी-सुकुमारादीनां रक्तमोक्षणे योज्या। एवं श्वसनके, कांस्यक्रोडे, हृदावरककलाप्रदाहे, यकृच्छूले, नेत्राभिष्यन्दे, कण्ठशालूके, मस्तिष्कावरणप्रदाहे च गलपार्श्वदेशे द्वित्राः प्रयोज्याः। आर्द्रवस्त्रेण गृहीत्वा च रोगस्थानं ग्राहयेत्। अगृह्णन्त्यै च क्षीरबिन्दुं शोणितबिन्दुं शर्करां वा दद्यात्। शस्त्रपदानि वा कुर्वीत॥ ३७५-३७६॥

पुरानी जलौका को तांबे के पात्र में चार माशा हल्दी का चूर्ण और आठ पल जल डाल उसमें डाल दे। जोंक स्वयं अपनी लार जल में छोड़ देगी पश्चात् उसको शुद्ध समझ उसे खून निकालने के काम में प्रयुक्त करे॥ ३७५-३७६॥

रोमपृष्ठा च कपिला रक्तरेखा च दुर्बला।
वर्जनीया विशेषेण भिषजा कीर्त्तिमिच्छता॥३७७॥

वर्जनीयाजलौकाश्चाह—रोमपृष्ठा इति रोमपृष्ठा=पृष्ठदेशे रोमराजियुता, कपिला=कपिलवर्णा, रक्तरेखा=रक्तराजियुता, दुर्बला=बलहीना, विशेषेण वर्जनीया। सुश्रुते तु-द्वादशजलौका उक्ताः, तासां षट् कृष्णाद्या सविषाः, कपिलाद्या निर्विषाः,

अत्र-विशेष स्तु सुश्रुतादेव ज्ञेयः । (सु. सू. अ. १३.) कपिला अत्र मूले वर्जनीयासु परिगणिता । सुश्रुते तु मनः शिला रञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णाकपिला निर्विषासु ॥ ३७७ ॥

जिस जोंक की पीठ पर रोम हों, कपिल रंग की हो, लाल रेखा वाली हो, दुर्बल हो–उसे कीर्ति चाहने वाला वैद्य विशेष कर प्रयोग न करे।

जलौका प्रयोग के लिये सुश्रुतसंहिता सूत्रस्थान अध्याय १३ देखें ॥ ३७७ ॥

अथ वृद्धदारकबीजशोधनम्—

बीजमादौ समादाय रौद्रयन्त्रे विशोषयेत् ।
ईषत्सैन्धवयुक्तेन द्रवेण यत्नतः सुधीः ।
अपामार्गस्य वा तोयैर्वार्द्धक्यबीजशोधनम् ॥३७८॥

मतान्तरम्—

वृद्धदारकबीजन्तु पक्वं दोलाकृतं पचेत् ।
दुग्धपूर्णेषु पात्रेषु ततः शुध्यति निश्चितम् ॥ ३७९ ॥

(इति वृद्धदारकबीजशोधनम्)

वार्धक्यबीजम्=वृद्धदारकबीजम् विधारा इति, सैन्धवयुत-जलेनेषदाप्रोञ्छ्य अपामार्गस्वरसेन वा । ततो रौद्रयन्त्र=आतपे शोषयेत् । एवं पक्वं=फलपाकान्ते गृहीतं दोलायां गोदुग्धेन वृद्धदारबीजं स्वेदयेत् । इति वृद्धदारबीजानां त्रिःप्रकारेण शुद्धिः । पक्वमिति सर्वत्र योज्यम् ॥ ३७८-३७९ ॥

विधारे के बीजों का शोधन—बीजों को लेकर एक पात्र में डाल थोड़े से सेन्धानमक युक्त द्रव से भिगो यत्नपूर्वक धूप में सुखा डाले। इस प्रकार वे शुद्ध हो जाते हैं।

अथवा विधारे के बीजों को एक पात्र में डाल उसमें थोड़ा सेन्धानमक युक्त अपामार्गरस डाल कर धूप में सुखा लें ॥ ३७८ ॥

दूधभरे पात्र में विधारे के बीजों को दोलायन्त्र में स्वेदन करें तो निश्चित शुद्ध होजाते हैं ॥ ३७९ ॥

अथ नानाबीजशोधनम्—

अपामार्गकषायेण निम्बबीजं विशोधयेत्।
मूलक्वाथैः कुमार्य्याश्च जैपालबीजशोधनम् ॥३८०॥

संक्षेपेण सर्वविधबीजशोधनमाह-अपामार्गेति—निम्बबीजमपामार्गस्य=मयूरकस्य चिटचिटा इति। कषायेण=क्वाथेन-निम्बबीजान्यासिच्य शोषयेत्। निम्बबीजशुद्धिः स्यात्। निम्बेत्यत्र-निम्बिति पाठान्तरम्।

कुमार्य्या=घृतकुमार्य्या मूलक्वाथैरेव न तु पत्रस्वरसैः। जयपाल बीजानि सिक्त्वा ततो रसनादिनिरसनं निस्नेहीकरणं यावत् पूर्वोक्तप्रकारेण कुर्यादिति शुद्धिर्भवेत् ॥ ३८० ॥

अपामार्ग के क्वाथ से नीमके बीजों को भावित कर शुद्ध करे। घीकुमार को जड़ के क्वाथ से जमालगोटे के बीजों का शोधन करे ॥ ३८० ॥

इन्द्रवारुणिकाक्वाथैः राजवृक्षस्य बीजकम्।
समूलोत्तरवारुण्या धुस्तूरबीजशोधनम् ॥ ३८१ ॥

राजवृक्षस्य=आरग्वधस्य-अमलतास इति, बीजकं=बीजम्, इन्द्रवारुणिका=इन्द्रायन इति-क्वाथेनासिच्यातपे शोषणमेवं धुस्तूरबीजंसमूलोत्तरवारुण्या=उत्तरणीतिख्यातलतायाः क्वाथेनासिच्य शोषणम् ॥ ३८१ ॥

इन्द्रायण के क्वाथ से अमलतास के बीजों को भावित कर शुद्ध किया जाता है समूल उत्तरणी के क्वाथ से धतूरे के बीजों का शोधन होता है ॥ ३८१ ॥

शिग्रु कार्पासबीजानि अपामार्गस्य बीजकम् ।
घर्मेण शोधनं तेषां न दद्यात् सैन्धवं ततः ॥ ३८२ ॥

शिग्रुकार्पासापामार्गबीजानां घर्मेण शोधन=मातपे शोषणम् । अत्र न सैन्धवं दद्यादित्युक्त्या पूर्वोक्तक्वाथेषु सैन्धवमपि देयं भवति ॥ ३८२ ॥

सहिजन, कपास और अपामार्ग के बीज धूप में सुखाने से शुद्ध हो जाते हैं, इनमें सेन्धानमक न डाले ॥ ३८२ ॥

तिक्तकोषातकी दन्ती पटोली चेन्द्रवारुणी ।
कटुतुम्बी देवदाली काकतुण्डी च शुध्यति ।
धात्रीफलरसेनैव महाकालस्य शोधनम् ॥ ३८३ ॥

एवं तिक्तकोषातकी=कडुवी तोरई इति ख्याता, तिक्ता कटुकीति व्याख्यानन्तु विचारणीयम् । दन्ती=दन्तीमूलं जैपालबीजशोधनस्य पूर्वोक्तेः । पटोली=पटोलः, देवदाली=कडुवीबिन्दालइति, काकतुण्डी=काकतुण्डवत्फला न कव्वा ठूंठी इति ख्याता, शुद्ध्यत्यातपे शोषणादिति ज्ञेयम् ॥ ३८३ ॥

कुटकी, कडुवी तुरई, जमालगोटे की जड़, पटोलपत्र, इन्द्रायन की जड़, कडुवी तुम्बी, कडुवी बिन्दाल, काकतुण्डो ये धूपमें सुखानेसे शुद्ध होते हैं, महाकालका शोधन आंवले के रस से होता है ॥३८३॥

करञ्जयुग्मयोर्बीजं भृङ्गराजेन शोधयेत् ।
गुञ्जादिसर्वबीजानां नरमूत्रैः पटु विना ।
नारिकेलाम्बुना शोध्यं बिल्वभल्लातकोद्भवम् ॥३८४॥

महाकालस्य=काकमर्दस्य-लालइन्द्रायनइतिख्यातस्य धात्रीफलरसेन=आमलकीरसेनस्वेदनम् ।करञ्जयुग्मयो=र्लताकरञ्ज (कण्टकी लताभवति) वृक्षकरञ्जयोर्बीजं भृङ्गराजरसेन बहिः कठिनत्वचमपाकृत्य विभावयेच्छोषयेच्च ।

तन्त्रान्तरेऽत्र प्रकरणे बीजानां तैलपातनमुक्तं न चात्र तत्प्रयोजनं प्रतिभाति । गुञ्जादिबीजानां पटु लवणं विना=विहाय नरमूत्रै भावनाच्छुद्धिः । भल्लातकोद्भवं बीजं=भल्लातकबीजं नारिकेलाम्बुना=नारिकेलफलान्तर्जलेन विभावनाच्छुध्यति । बिल्व-मत्र बीजमिति क्वचित्पाठः ॥ ३८४ ॥

दोनों करंजों के बीजको भांगरे के रस से शुद्ध करे। रत्ति आदि सब बीजों को मनुष्य के मूत्र में बिना नमक मिलाये ही भावित कर शुद्ध करे। बिल्वबीज और भिलावे के बीज को नारियल के जल से शुद्ध करे ॥ ३८४ ॥

गुडूचीत्रिफलाक्वाथे क्षीरे चैव विशेषतः ।
पक्त्वा च खण्डशः शुद्धं गृह्णीयात् मृदु गुग्गुलम् ।३८५

इति विषोपविषादिशोधनम् ।

गुग्गुलु शोधनमाह-गुडूचीति—गुग्गुलुं विपणित आनीय मृत्तिकापाषाणादिकंततः पृथक् कृत्वा खण्डशो विधाय च गुग्गुलुतुल्य गुडूचीत्रिफलानामष्टगुणे तोये पक्वं चतुर्थांशावशिष्टं क्वाथमादाय विपचेत् काष्ठखण्डेनालोडयन्वस्त्रेणगालयेच्च तत्पुनः गुड़पाकवद्विपाच्य संरक्षेत्। विशेषत इति गुग्गुलुं क्षीरे दुग्धे च विपाच्य पूर्ववद्गालये च्छोषयेच्च। विषमुष्टि शुद्धिः--किञ्चिदाज्येन सम्भृष्टो विषमुष्टिर्विशुद्ध्यति। आ. वे. प्र. १४-१०७। घातिनी मात्रा १५. र.। मृतकालः--अर्धघटिकातो १० घटिकां यावत्॥ ३८५॥

अत्र जङ्गमविषे—सर्पविषम्।

विषेषु जङ्गमाख्येषु ग्राह्यं नागोद्भवं विषम्।
शस्तं बलवतो यूनःकृष्णसर्पाद्विषं नवम्॥
एतच्चैवागदश्रेष्ठं त्रिदोषक्षपणं क्रमात्।
दीपनं कुरुते सद्यो वाड़वाग्निसमं हि तत्॥
सन्निपातप्रतीकार प्रभावप्रभुरुच्यते।
यथाविधि प्रयुक्तं तद्विषमप्यमृतायते॥
मृतसञ्जीवनं तद्धि विसूचीषु ज्वरेषु च।
शोधञ्चन-नागोद्भवं यथाप्राप्तं विषं गोमूत्र संयुतम्॥
आतपे त्रिदिनं शुष्कं निहितं वीर्यधृग्भवेत्॥

अन्यच्च—सर्षपतैलसंप्लुतं सर्पविषं विशुध्यति। इति रसजलनिधौ तृतीयखण्डे।

श्री घनानन्द पन्तेन चिद्धनानन्द चेतसा।
यद्धनानन्दतो लब्धं घनानन्दे तदर्पितम्॥

इति रसेन्द्रसार संग्रहस्याऽऽनन्दो टीकायां विषोपविषादि-शोधनाधिकारः।

❀ प्रथमोध्यायः समाप्तः ❀

गुग्गुलु को खण्ड २ करके गिलोय त्रिफला के क्वाथ में अथवा विशेषतः दूध में पका शुद्ध करें।

इनमें पकाने के पश्चात् द्रव को वस्त्र से छान लिया जाता है। गुग्गुलु, क्वाथ वा दूध में घुल जाता है। वस्त्र से वह छाना जाता है। ऊपर के फोक को फैंक देना चाहिये। वस्त्र से छानने के पश्चात् उसे स्थिर रक्खें। गुग्गुलुनीचे बैठ जायगा। उसे मन्द आंच पर वा धूप में सुखाले ॥ ३८५ ॥

---

च. चि. अ. ३-६० मण्डलैर्जातरूपस्य तस्या एव पयः शृतम् अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम्। इदं सुवर्णप्रकरणे टीकायां १५० श्लोकानन्तरं ज्ञेयम्।

कान्तजे तु स्थिते तोये तैलबिन्दुर्न सर्पति।
खुरलोहे क्षिपेदुष्णं तोयं भवति शीतलम्।
न च तापं समायाति तीव्रसूर्यकरातपात्।
गो. र. सं २-१५५।

मुण्ड न्तु वर्त्तुलं भूमौ पर्वतेषु च जायते।
गजवल्ल्यादि तीक्ष्णं स्यात्कान्तं चुम्बकसम्भवम्।

अन्यच्च— मुण्डात्कटाहपात्रादिर्जायते।
कासीस मलकलकाक्तं लौहेऽङ्गं दृश्यते स्फुटम्।
तीक्ष्णलोहं तदुद्दिष्टं मारणायोत्तमं विदुः।
····तीक्ष्णलोहतः खड्गादिशस्त्रभेदाः स्युः।
क्ष्माभृच्छिखराकाराण्यङ्गान्यम्लेन मर्दिते।
लोहे स्युर्यत्र सूक्ष्माणि तत्सारमभिधीयते।
। आ. वे. प्र. ११-२००-२०४।

इदं खनिजपरीक्षायां-कान्तलौहलक्षणे—इत्यतः प्राक् ज्ञेयम्।

इति रसेन्द्रसारसंग्रहे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः

## अथ विरेकाधिकारः ।

क्षीराब्धेरुत्थितं देवं पीतवस्त्रं चतुर्भुजम् ।
वन्दे धन्वन्तरिं भक्त्या नानागदनिषूदनम् ॥१॥

शुद्धकोष्ठानां विशेषतया न भवन्ति रोगाः । यदुक्तम्—

स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम् । च.सि. १-१५
बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं बलमग्निदीप्तिम् ।
चिराच्च पाकं वयसः करोति, विरेचनं सम्यगुपास्यमानम् । सु.चि. ३३-२६

अतश्चिकित्सायां प्रधानसाधनं विरेचनप्रकरणं

प्रथमं निबध्नन् 'मङ्गलमध्यानि शास्त्राणि प्रथन्ते' इति महाभाष्योक्तेरायुर्वेदप्रवर्त्तकप्रधानत्वेन श्रीविष्णोरवतारत्वाच्च ग्रन्थनये धन्वन्तरिनमस्कारात्मकं मङ्गलं निबध्नाति क्षीराब्धेरिति। क्षीराब्धेः=क्षीरसमुद्रात्तज्जलस्य क्षीरवच्छुक्लत्वादिति भावः । उत्तरे हिमवत्पार्श्वे क्षीरोदो नाम सागरः इति कलशपूजनप्रकरणोद्धृतं दशकर्मपद्धतौ पुराणवचनम् । क्षीराब्धिः ( WHITE SEA ) उत्थितं=प्रादुर्भूतं समुद्रमन्थन इत्यर्थः । देवं=दीव्यतीति देवस्तं पीतवस्त्रं=पीताम्बरं, चतुर्भुजं=चतुर्बाहुम् । नानागदनिषूदनं=नाना अनेके सर्वविधा इत्यर्थः ( नञ्स्नञ् नानाञौ न सह ५-२-२७ ) ये गदा=रोगास्तेषां निषूदनं निपूर्वात्षूद=क्षरणे, इत्यतो ल्युटि

निषूदनमिति भवति, निषूदनं=नाशकरं धन्वन्तरिं भक्त्या "पूज्येष्वनुरागो भक्तिः" वन्दे=नमस्करोमि ॥ १ ॥

क्षीरसमुद्र से प्रकट हुए, चतुर्भुजरूप, पीले वस्त्र धारी महाराज धन्वन्तरि जी का मैं भक्तिपूर्वक प्रणाम करता हूँ जो नाना रोगों के नाश करने वाले हैं ॥ १ ॥

प्रायशो वपुषः शुद्धिं कृत्वा देयं तदौषधम् ।
अतः पूर्वं चिकित्सायां रेचकौषधमुच्यते ॥२॥

अन्नमलादियुतोदरे दत्तमप्यौषधमन्नाद्यावृतत्वान्न गुणाय सम्पद्यतेऽतश्चिकित्साऽरम्भतः प्रथमं विरेचनं देयमित्याह—प्रायश इति-यतः प्रायशो=बहुधा वपुषः=शरीरस्य शुद्धिं=यथासम्भवं विरेचनादिभिरिति भावः । कृत्वा=विधाय तदौषधमिति तच्छब्देन चिकित्स्यमानरोगग्रहणं तस्यौषधम्, औषधेरजातौ ५-४-३७ इत्यण । तेन-रस, घृत, गुड़, तैलादिकमौषधशब्दवाच्यम् । देयं= प्रयोज्यम् । अतो हेतोः, चिकित्सायां पूर्वं रेचकौषधं रेचकं च तदौषधमिति रेचकौषधं जयपालैरण्डतैलादि, उच्यते ॥ २ ॥

शरीर की शुद्धि करके ही प्रायः उस२ रोग की नाशक औषध दी जाती है, इस लिये चिकित्सा-प्रकरण में सबसे प्रथम रेचक अर्थात् दस्त लाने वाली औषध लिखते हैं ॥ २ ॥

अथ इच्छाभेदी रसः—

तुल्यं टङ्कणपारदं समरिचं तुल्यांशकं गन्धकम्
विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत् ।

गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम् ॥३॥

इच्छया शीतलजलानुपानेन रेचयति, उष्णजलानुपानेन च रुणद्धीति-इच्छाभेदी-तमेवाह-तुल्यमिति-टङ्कणपारदमरिचगन्धकानां प्रत्येकमेकोभागः । तत्रैकभागापेक्षयाविश्वा=शुण्ठी द्विगुणा, जयपालबीजचूर्णं शुद्धमेकभागापेक्षया नवगुणम् । मात्रा १ गुञ्जा । प्रातर्हिमजलेन ॥ ३ ॥

शुद्ध सुहागा, शुद्ध पारा, मरिच का चूर्ण, शुद्ध आंवलासार गन्धक, प्रत्येक द्रव्य का एक एक भाग ले । सैंठ का (कपड़े में से छना) चूर्ण दो भाग तथा शुद्ध जमालगोटे के बीजों का चूर्ण नौ भाग ले । सबसे प्रथम पारे गन्धक की कज्जली बनावे । फिर अन्य द्रव्य उसमें मिला घोटकर जल से एक एक रत्ति की गोली बनाले और शीशी में रखे । इसे इच्छाभेदी रस कहते हैं ॥ ३ ॥

दस्त लेने की विधि यह है जब दवा सेवन से दस्त आने आरम्भ हों तो एक दस्त आने के बाद दो तीन घूँट ठण्डा जल पीलें । इसी प्रकार दस्त आने के बाद ठण्डा जल पीते जाएं । जब दस्त बन्द करने हों तो थोड़ा सा गर्म जल पीलें, बन्द हो जाने के बाद पथ्य सेवन करें । दस्त लेने से एक दिन पूर्व घी मिली खिचड़ी खा कोष्ठ स्निग्ध कर लेना चाहिए । बिना स्निग्ध कोष्ठ किए भी अत्यावश्यक हो तो दवा दे देनी चाहिए । मात्रा—आधी रत्ती है ॥ ३ ॥

मतान्तरम्—

जैपालाष्टौ द्विको गन्धस्त्रिशुण्ठी मरिचं द्विकम् ।
एकः सूतः टङ्कणैको गुञ्जामात्रा वटी कृता ॥ ४ ॥
शूलव्याधिप्रभृतयः कुष्ठैकादश पित्तजाः ।
भगन्दरादिहृद्रोगाः सर्वे नश्यन्ति भक्षणात् ॥ ५ ॥

प्रकारान्तरेणाह—जैपालेति- जैपालाष्टौ=जैपालस्याष्टौ भागाः, द्विको गन्धो=गन्धकस्य द्वौ भागौ, त्रिशुण्ठी=शुण्ठ्यास्त्रयो भागाः। कुष्ठैकादश पित्तजाः=एकादशक्षुद्रकुष्ठानि पित्तजाः=पित्तजाश्च रोगा इत्यर्थः ॥ ४-५ ॥

शुद्ध जमालगोटा ८ भाग, शुद्ध गन्धक दो भाग, सोंठ चूर्ण ३ भाग मरिच चूर्ण दो भाग, शुद्ध पारा एक भाग तथा भुना सुहागा एकभाग। पारा गन्धक की कज्जली में शेष द्रव्यों को मिला जल से पीस एक रत्ति की गोली बनावे। इसको भी उसी प्रकार शीतल जल से खाने से विरेचन होता है। जब दस्त बन्द करने हों तो गरम जल पीवे। इस से शूल आदि पेट के रोग, ग्यारह प्रकार के कुष्ठरोग, पित्त के रोग, भगन्दर आदि तथा हृदय के सब रोग नाश होते हैं। मात्रा १ रत्ती ॥ ४-५ ॥

अथ गदमुरारिः इच्छाभेदी—

रसबलिगगनार्कं शुद्धतालं विषञ्च
त्रिकटुत्रिफलमेतत् टङ्कणं भृङ्गमेभिः।
सममिह जयपालोद्भूतचूर्णं विमर्द्य

द्विनिशमनिशमेतद् भृङ्गराजोत्थवारा ॥ ६ ॥
भवति गदमुरारिः स्वेच्छया भेदकोऽयं
हरति सकलरोगान् सन्निपातानशेषान् ।
इह हि भवति पथ्यं मत्स्यमांसादि सर्वं
घृतविलुलितमस्मिन् भोजनं भूरि देयम् ॥ ७ ॥

गदमुरारिमाह— रसेति-रसः=पारदः, बलिर्गन्धस्तयोः प्रथमं मसृणां कज्जलीं विधाय ततो गगनमभ्रं, अर्कस्ताम्रं शुद्धतालं शुद्ध-विषं च त्रिकटु त्रिफला टङ्कणानि, भृङ्गं=दारुसिता (दालचीनीति) एभिश्चतुर्दशद्रव्यैः, इह जयपालोद्भूतचूर्णं समं चतुर्दशभागमित्यर्थः । द्विनिशं दिनद्वयं भृङ्गराजरसेन विमर्द्य गुञ्जामात्रा वटी कार्या । अयं गदमुरारि नाम इच्छाभेदी विरेचने जाते पथ्यमत्र भूरिमत्स्यादि घृतविलुलितं=घृताप्लुतं देयम् ॥ ६-७ ॥

शुद्ध पारा, शुद्ध गन्धक, अभ्रकभस्म, ताम्रभस्म, शुद्ध हड़ताल, शुद्ध वत्सनाभ विष, सोंठ का चूर्ण, कालीमिर्च का चूर्ण, पिप्पली का चूर्ण, हरड़ का चूर्ण, बहेड़े का चूर्ण, आंवले का चूर्ण, भुना सुहागा, दारचीनी का चूर्ण; सब द्रव्यों को एक एक तोला लें । शुद्ध जमालगोटे का चूर्ण चौदह तोला लें । कज्जली में शेष द्रव्यों को मिला भांगरे के स्वरस में दो दिन तक लगातार खरल करें । फिर आधी आधी रत्ति की गोली बना सुखाकर शीशी में रख लें । यह गदमुरारि रस पूर्ववत् शीतल जल से इच्छानुसार दस्त लाता है । सब रोग तथा सब सन्निपातों को दूर करता है । विरेचन होने के पीछे मत्स्य मांस आदि सब

पथ्य है। प्रभूत घी से युक्त भोजन इसमें विशेषतः देना चाहिये ॥ ६—७ ॥

अथ रुक्मिशो रसः—

अभयाचूर्णमादाय नूतनैर्जयपालकैः।
पञ्चमांशेन मिलितैः स्नुहीदुग्धेन मर्दिताः ॥८॥
गुडिकास्तस्य कर्त्तव्या वर्त्तुलाश्चणकप्रभाः।
पीतैका हन्ति चातङ्कं रेचनैस्तु रसैः सह ॥ ९ ॥
रुक्मिशो न च दाहः स्यान्न च मूर्च्छा भ्रमः क्लमः।
वेगतः सारयेदेषा विशेषादामनाशिनी ॥ १० ॥
निरूहेण तथा नैव तथा बिन्दुघृतेन च।
त्रिवृता न तथा रेच्या यथा स्याद् गुडिकोत्तमा ॥११॥
अतिशुद्धं भवेद् देहमतिप्रबलमुत्तमम्।
अतिरूपमतिप्रौढमत्यायुष्करमुत्तमम् ॥ १२ ॥
विष्टम्भे गुडिका देया चोदरे दारुणामये।
अधोदेशेषु सर्वेषु गुदेषु च महौषधिः।
दीयते क्षीयते सामः कामकायविवर्द्धनः ॥ १३ ॥

रुक्मिशरसमाह-अभयेति—अभया=हरीतकी तस्याश्चूर्णस्य पञ्चमांशेन यथा-हरीतकी चूर्णस्य पञ्च भागा एको भागः शुद्धजयपाल चूर्णस्य, स्नुहीदुग्धेन मर्दयित्वा चणकमाना वटी कार्या। अयं रुक्मिशो रसः। चणकप्रभा-इत्यनन्तरम्-'एकैकस्यास्य टङ्कस्य रेचनैश्च-

रसैस्तथा" इत्यर्धश्लोकः प्रक्षिप्तोऽनन्वितश्च प्रतिभाति, केषुचित्पुस्तकेषु च नास्त्येव ॥ ८-१३ ॥

बड़ी हरड़ का चूर्ण पांच भाग, नया शुद्ध जमालगोटा एक भाग, दोनों को मिला थोहर के दूध में घोट चने के समान गोली बना ले। एक गोली को विरेचक रसों के साथ सेवन करने से रोग नष्ट होते हैं। इस रुक्मिशरस के सेवन से न तो दाह होता है, न मूर्च्छा, न भ्रम, न क्लम। दस्त वेग से होता है। यह विशेषतः आम को नष्ट करती है। निरूहबस्ति, विन्दुघृत, निसोत इनके प्रयोग से भी ऐसा विरेचन नहीं होता जैसे इससे होता है। इससे देह अति-शुद्ध अति-प्रबल और उत्तम रूपवान् शक्तिसम्पन्न हो जाता है। यह उत्तम आयु-वर्धक है। यह महौषध कब्ज, उदर रोग, अफारा आदि दारुण रोगों में तथा नीचे के भाग के सब रोगों में एवं भगन्दर बवासीर आदि गुदा के रोगों में दी जाती है। इससे आमदोष क्षय को प्राप्त होता है। यह कामदेव तथा देह की वृद्धि करता है ॥ ८-१३ ॥

अथ इच्छाभेदी गुडिका----

पारदं गन्धकं कुर्य्यात् सौभाग्यं पिप्पली समम्।
समानि जयपालानि क्रियन्ते रेचनाय च।
शीतेन रेचयेत् सम्यगुष्णेनैव प्रशाम्यति ॥ १४ ॥

पारदमिति—सौभाग्यं=टङ्कणक्षारः, पिप्पलीसममिति पारदादयः सर्वे समभागा इत्यर्थः। समानि जयपालानि भागचतुष्टयमित्यर्थः। शीतेन शीतलजलपानेन, शीतोपचारेण चेत्यर्थः ॥ १४ ॥

शुद्ध पारा, शुद्ध गन्धक, भुना सुहागा, पिप्पली का चूर्ण सब सम भाग लें। कज्जली में शेष द्रव्यों को घोट सबके समान शुद्ध जमालगोटे का चूर्ण डाल घोट लें। इस रसको एक रत्ति ले कुछ खांड मिलाकर शीतल जल से दें तो अच्छा रेचन होता है। जब दस्त बन्द करने हों तो गरम जल पी लें ॥ १४ ॥

अन्यश्चेच्छाभेदी रसः---

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कणम्।
जैपालास्त्रिगुणाः प्रोक्ताः सर्वमेकत्र चूर्णयेत् ॥१५॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत्।
यावन्तश्चुलुकाः शीतास्तावद्वारान् विरेचयेत् ॥
तक्रौदनं खादितव्यमिच्छाभेदी यथेच्छया ॥ १६ ॥

प्रकारान्तरेण इच्छाभेदीमाह—शुण्ठीति--त्रिगुणा एकभागापेक्षयेत्यर्थः। जैपालो द्विगुण इति सम्मतः पाठः। द्वैगुण्य-मेकभागापेक्षया, अतएव द्विगुञ्जमात्रया यावन्तश्चुलुका इति फलश्रुतिरपि सङ्गच्छते ॥ १५-१६ ॥

शुद्ध पारा, शुद्ध गन्धक, सोंठ चूर्ण, मिरच चूर्ण, भुना सुहागा एक २ भाग लें और शुद्ध जमालगोटे का चूर्ण तीन भाग लें। कज्जली में शेष द्रव्यों को मिला पीस दो रत्ती की गोली बना लें। इस इच्छाभेदी रस को दो रत्ती ले कुछ मिश्री मिला कर देवे। ऊपर से जितने घूंट जल पीयेगा उतनी वार विरेचन होगा। पथ्य में छाछ और चावल खाना चाहिए ॥ १५-१६ ॥

अथ पुष्परेचनी गुडिका—

देवदाली स्वर्णपुष्पं गुडेन गुडिका कृता ।
गुदमध्ये प्रदातव्या पातयेच्च महागदम् ॥ १७ ॥
अधश्च साममायाति पुनः सा दीयते गुदे ।
प्रक्षाल्य वारिणा चैषा वारं वारं प्रयच्छति ॥१८॥
अनेन क्रमयोगेन मलःसामो विरिच्यते ।
जायते सकलं देहं शुद्धवर्णं निरामयम् ॥ १९ ॥

पुष्परेचनीगुडिकामाह--देवदालीति-देवदाली=जीमूतः कड़वी विन्दाल इति ख्याता, स्वर्णपुष्पमारग्वधपुष्पं तद्बीजमज्जेत्यन्ये । गुडेन=सर्वचूर्णाद्विगुणेन । मा. माषमिता वयोऽनुमाना वा । इयं फलवर्त्तिवदुपयोज्या भवति ॥ १७--१९ ॥

बन्दाल डोडा, अमलतास के फूल एक २ भाग गुड़ दो भाग सब को कूट पीस गोली बनावें । यह गोली गुदा में रखने से विरेचन करके महारोग वा अर्श को दूर करती है । दस्त होने के साथ ही आम के समेत गोली भी बाहर आ जाती है । इसे जल से धो फिर गुदा में रखें । इस प्रकार बार बार रखने से मल और दस्त द्वारा आमयुक्त मल बाहर निकल जाता है और देह शुद्ध-वर्ण और नीरोग हो जाता है ॥ १७-१९ ॥

अथ सर्वाङ्गसुन्दरो रसः—

शुद्धसूतश्च गन्धश्च विषश्च जयपालकम् ।
कटुत्रयश्च त्रिफला टङ्कणश्च समांशकम् ॥ २० ॥

अस्य मात्रा प्रयोक्तव्या गुञ्जात्रयसमा ततः।
सर्वेषु ज्वररोगेषु सामवाते विशेषतः॥ २१ ॥
नाशयेत् श्वासकासञ्च अग्निमान्द्यं विशेषतः।
ब्रह्मणा निर्मितः पूर्वं रसः सर्व्वाङ्गसुन्दरः॥ २२ ॥

शुद्धसूतमिति-सर्वाङ्गसुन्दरे तालयोगेकृते भृङ्गराजरसभावनया 'घोड़ाचोली' रसो भवति, तस्य च फलपाठः—एतन्निजानुपानेन समस्तगदखण्डनमिति ॥ २०-२१-२२ ॥

शुद्ध पारा, शुद्ध गन्धक, शुद्ध विष, शुद्ध जमालगोटा, सोंठ चूर्ण, मिरच चूर्ण, पिप्पली चूर्ण, हरड़ चूर्ण, बहेड़ा चूर्ण, आंवला चूर्ण, भुना सुहागा, सबको सम भाग ले। प्रथम विष और जमाल-गोटे का चूर्ण डाल जल से खूब घोटे। पश्चात् कज्जली टङ्कण और शेष चूर्ण देकर अच्छी प्रकार घोट तीन रत्ती गोली बना लें। इसके प्रयोग से सर्व ज्वर विशेष कर आमवातयुक्त ज्वर नाश होते हैं। श्वास कास विशेषकर अग्निमांद्य को भी यह नष्ट करता है। यह रस ब्रह्मा ने पूर्व बनाया था। इसका नाम सर्वाङ्ग-सुन्दर रस है॥ २०-२२॥

निषिद्धविरेचकानाह—

बालवृद्धकृशक्षीण-पीनसार्त्तभयार्दिताः।
रूक्षशोषतृषायुक्ता गर्भिणी च नवज्वरी॥ २३ ॥
अधो गच्छति यस्यासृक् सूतिकाऽऽतङ्कपीडिताः।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम्॥ २४ ॥

नवज्वरे च ये योगाः भेदका परिकीर्त्तिताः ।
ते तथैव प्रयोक्तव्याः वीक्ष्य देहबलादिकम् ॥ २५ ॥

हैमन्तिकं दोषचयं वसन्ते प्रवाहयन् ग्रैष्मिकमभ्रकाले ।
घनात्यये वार्षिकमाशुसम्यक् प्राप्नोति रोगानृतुजान्न जातु ॥

च. शा. अ. २ श्लो ४३ ।

इति वचनात् तत्तद्रोगेषु विरेचनोपदेशाच्च विरेकानर्हानाह बालेति—बालो=द्विवार्षिकः, क्वापि दशवर्षमभिव्याप्य बाल्यमभिधीयते । कृशः=प्रकृतिकृशः, क्षीणो=रोगादिनाक्षीणधातुः, पीनसार्तो=नासारोगपीडितः, भयार्दितो=व्याकुलः, रूक्षो=ऽस्निग्धो रूक्षप्रकृतिश्च, शोषो=राजयक्ष्मा, 'तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी' इतिशास्त्रोपदेशात्, तृषार्तस्य=पिपासितस्य, अन्येषां च बलाबलमिति--जीर्णज्वरी गरव्याप्तादयो ये शास्त्रे विरेच्याः, उपदिष्टाः--ते बलवन्तो विरेच्याः, दुर्बलाः=तत्साध्येषु विकारेषु मृदुविरेचनैरेरण्डतैलादिना फलशाकादिना वा विरेचनीयाः ॥ २३-२४ ॥

नवज्वर इति—भेदकाः=रेचकाः, तथैव=बालवृद्धक्षतक्षीणादिषु देहबलादिकं=शरीरसामर्थ्यादिकं वीक्ष्य प्रयोक्तव्याः ॥ २५ ॥

॥ इत्यानन्दी टीकायां विरेकाधिकारः ॥

बालक, बूढ़े, पतले, क्षीण, पीनस रोगी, डरपोक, रूखे, यक्ष्मी, प्यासे, गर्भिणी स्त्री, नये ज्वर वाले, जिसके गुदा योनि आदि नीचे के भाग से खून निकले, सूतिका रोग वाली स्त्री, इनको विरेचन न दे अन्यों को बलाबल देखकर दे । नव ज्वर

में जो विरेचन योग कहे हैं उन्हें उक्त प्रकार से ही शरीर और दोष वा मल आदि को देख कर यथायोग्य मात्रा में प्रयोग करना चाहिए ॥ २३-२५ ॥

[ इति विरेकाधिकारः ]

# अथ ज्वरचिकित्सा ।

नवज्वरांकुशः—

क्रमेण वृद्धान् रसगन्धहिङ्गुलान्
नैकुम्भबीजान्यथ दन्तिवारिणा ।
पिष्ट्वाऽस्य गुञ्जाऽभिनवज्वरापहा
जलेन चार्द्रा सितया प्रयोजिता ॥१॥

प्रायः सर्वेषु रोगेषु ज्वरस्य प्रधानोपद्रवत्वात् इह खलु ज्वर एवादौ विकाराणामुपदिश्यते तत्प्रथमत्वाच्छरीराणाम् । तथा-नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्स्या यथायमिति । सर्व-रोगाधिपतिर्ज्वरोनानातिर्यग्योनिषुबहुविधैःशब्दैरभिधीयते ।च.नि अ.१

एवं—देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली ।
ज्वरः प्रधानं रोगाणामुक्तो भगवता पुरा । च. चि. अ. ३.२. ।

इत्युक्तेश्च प्रथमं ज्वरचिकित्सामाह-तत्रापि प्रायः सर्वं ज्वरेषु मलबन्धस्यभावित्वान्मलशुद्धिकरं ज्वरहरञ्च नवज्वरांकुशमाह क्रमेणेतिरसगन्धहिंगुलान्=रसः पारदः, गन्धो=गन्धकः, हिंगुलः प्रसिद्धः, स. च. रूमी शोभनो भवति । एते शुद्धा ग्राह्याः ।

जैकुम्भबीजानि=दन्तिबीजानि, एतान्यपि शुद्धानि देयानि। क्रमेण वृद्धानिति-रसापेक्षया गन्धस्य भागद्वयम्। हिङ्गुलस्य भागत्रयम् दन्तिबीजानां भागचतुष्टयमिति ज्ञेयम्। दन्तिवारिणा= दन्तिमूलक्वाथेन, स च क्वाथः-भाव्यद्रव्यसमं काथ्यं काथ्यादष्ठगुणं जलमत्र समस्तस्य भाव्यद्रव्यस्य दशभागा भवन्ति, अतः दन्तीमूलस्यापि दशभागाः क्वाथार्थं ग्राह्याः--तेन।

> द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत्।
> तावन्मानं द्रवं देयं भिषग्भिर्भावनाविधौ॥

'सप्ताहं भावनाविधि' रिति नियमात्क्रमेण सप्त भावना देया।

अत्र प्रधानतो दन्तीबीजान्येव ज्वरघ्नानि, अतः पित्तज्वरेऽस्य प्रयोगं न प्रशंसन्ति वृद्धाः। नवज्वर एवास्य प्रयोगो भवति नवज्वरायमाणे विषमे वा। आर्द्रा=अतिविषा-अगुरुचेति राजनिघण्टु-वर्णानुक्रमसूची, आर्द्रकम्। आर्द्रकपर्यायेषु आर्द्रा-शब्दादर्शनात्। अत्र ज्वरप्रकरणे आर्द्राशब्देनातिविषैव ग्राह्या तस्या एव ज्वरघ्नत्वात्। "अतिविषा शुक्लकन्दा···आर्द्रा श्वेता विरूपा चेति" रा. नि.। केवलापि अतिविषा पञ्च षड् रक्तिमात्रया प्रत्यहं त्रिश्चतुर्वा प्रयुक्ता द्वित्रैर्दिनैर्विषमं नाशयति। जयपालयोगे-ऽनुपानं त्वस्या ग्राहित्वाज्जयपालस्य रेचकगुणह्रासाय। जलेन चेति चकारः समुच्चयार्थस्तेन आर्द्रायाः पञ्च रक्तिका सिता यथोपयुक्ता, जलेन=शीतलजलेन। गुञ्जा=१ रक्तिका। प्रयोजिता= दत्ता सती, अभिनवज्वरापहा=अभिनवं तरुणं ज्वरमपहन्ति। जलेनेत्यादौ-दलेन चाहः [सितया प्रयोजिता इति र. का. धे, नौ पाठः॥१॥

शुद्ध पारा एक भाग, गन्धक दो भाग, शुद्ध शिगरफ तीन भाग, शुद्ध जैपाल चार भाग । कज्जली में शिगरफ मिला घोटें। पश्चात् जैपाल बीज चूर्ण मिला दन्तीमूल के क्वाथ से पीस एक रत्ती प्रमाण की गोली बनावे । प्रयोग के समय एक गोली को पीस अतीस का चूर्ण और खांड मिला जल के साथ दें । कई गोली को खांड के शरबत के साथ भी दे देते हैं। इस गोली को दिन भर में एक बार ही दें । इससे शीघ्र नया ज्वर दूर हो जाता है ॥ १ ॥

हिंगुलेश्वरो रसः—

तुल्यांशं मर्दयेत् खल्ले पिप्पलीं हिङ्गुलं विषम् ।
द्विगुञ्जा मधुना देया वातज्वरनिवृत्तये ॥ २ ॥

हिंगुलेश्वरे-तुल्याशं समानम् । पिप्पलीमिति=पिप्पली तण्डुलचूर्णग्रहणम् । हिंगुलं पित्तज्वरशान्त्यर्थं निम्बपत्ररसशोधित-मन्यत्र जम्बीररस शोधितं ज्ञेयम् । विषं गोमूत्रशोधितं जलेन प्रक्षालितं शुष्कं ग्राह्यम् ।

विषं क्षोदयित्वा ततो जलेन मसृणं मर्दयेत् । एवं हिंगुलमपि, द्विगुञ्जमाना वटी विधेया । अत्र गुञ्जार्धमिति पाठो युक्तो व्यव-हारश्चास्यैव । मधुना ज्वरागमनात्प्राक् त्रिः प्रयोज्यः, वात (कम्प) ज्वरे पलमितदधिजलेन विशिष्टमुपकरोति । वमनहृल्लासादिषु गुडूचीसत्वहरीतकीचूर्णान्यतरानुपानेन । ज्वरातिसारेऽतिविषानु-पानेन, सन्ततसततयोरस्य प्रयोगे ज्वरविच्छेदो भवति, तुलसीपत्र-स्वरसानुपानेन, कफप्रधानज्वरे रससिन्दूरयोगोऽपि कार्यः । सति कासे त्वगास्क्षीरीचूर्णमधुना, सज्वरकासे कर्पूरमधुना, मलबन्धे, आर्द्रक-

रसमधुना, आमवातज्वरे पर्णपत्ररसमधुना । बालवृद्धगर्भिणी-हृद्रोगिभ्यो न देयः । सर्वविधविषमे निगुण्डीशेफाली-अन्यतर-पत्ररसशर्करानुपानेन । इदञ्च बोध्यम् ।

अनुपानै रसा योज्या देशकालानुसारिभिः ।
दोषघ्नैर्मधुना वाऽपि केवलेन जलेन वा ॥ ( कस्यचित् )
मात्रा वृद्धिः कार्या तुल्यायामुपकृतौ क्रमाद्विदुषा ।
मात्राह्रासः कार्यो वैगुण्ये त्यागसमये च ॥ र. इ. चि. ८-४ ।

अभ्यर्हितः सरलश्चायं योगः । अस्मिन्नेव योगे हिंगुलु भागद्वयं दत्त्वा जम्बीररसेन मर्दयित्वा मृतसञ्जीविनीति नामकरणं ज्वरा-तिसारे ( १-२ ) कृतम् । अत्र विषं प्रधानं ज्वरघ्नम् तदनु पिप्पली हिंगुलुस्तु योगवाही । विषयोगानां प्रयोगे तापः प्रायः संख्यामेकां ह्रसति ॥ २ ॥

पिप्पली का चूर्ण, शुद्ध शिंगरफ, शुद्ध विष, तीनों को सम-भाग ले जल से घोट दो रत्ती की गोली बना वातज्वर में शहद के साथ देने से ज्वर निवृत्त होता है ॥ २ ॥

ज्वरधूमकेतु रसः—

भवेत् समं सूतसमुद्रफेनहिङ्गुलगन्धं परिमर्द्य यत्नात् ।
नवज्वरे वल्लमितं त्रिघस्रमाद्राम्बुनाऽयं ज्वरधूमकेतुः ॥३॥

ज्वरधूमकेतौ—समुद्रफेनः=समुद्रझाग इति तच्छोधनप्रकारश्च— 'समुद्रफेनः सम्पिष्टो निम्बुतोयेन शुध्यति' अशुद्धस्तु अङ्गभङ्गादिकं करोति । द्रव्यचतुष्टयं यत्नात्त्रिघस्रं आर्द्राम्बुना=अतिविषा क्वाथेन परिमर्द्य वल्लमितं=द्विगुञ्जमद्यात्, अद् भक्षणे । त्रिघस्रं

त्रिदिनम्, अयं ज्वरधूमकेतुः स्यात्। अत्र आर्द्रासमुद्रफेनौ ज्वरघ्नौ। सामकफे वातकफज्वरे च प्रचरति। अद्यात्, यत्नात्, अत्र क्रमेण-भवेत्, याममिति पाठान्तरे॥ ३॥

शुद्ध पारा, शुद्ध समुद्रफेन, शुद्ध शिगरफ, शुद्ध गन्धक, प्रत्येक द्रव्य समभाग ले। कज्जली में शेष द्रव्यों को मिला जल से तीन दिन तक घोटकर दो रत्ती प्रमाण गोली बनावे। यह ज्वरधूमकेतु रस कहाता है। नवज्वर में इसका प्रयोग कराना चाहिए॥ ३॥

मृत्युञ्जयो रसः--

अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्तिवर्द्धनः।
यशःप्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः॥ ४॥
विषस्यैकस्तथा भागो मरिचं पिप्पलीकणाः।
गन्धकस्य तथा भागो भागः स्यात् टङ्कणस्य च॥५॥
सर्वत्र समभागः स्यात् हिङ्गुलन्तु द्विभागिकम्।
चूर्णयेत् खल्लमध्ये तु मुद्गमानां वटीं चरेत्॥ ६॥
जम्बीरस्य रसेनात्र कार्य्यं हिङ्गुलशोधनम्।
रसश्चेत्समभागः स्यात् हिंगुलं नेष्यते तदा॥७॥
गोमूत्रशोधितश्चात्र विषं सौरविशोधितम्।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः॥ ८॥
मृत्युर्विनिर्जितो यस्मात्तेन मृत्युञ्जयो रसः।
मधुना लेहनं प्रोक्तं सर्वज्वरनिवृत्तये॥ ९॥

दध्युदकानुपानेन वातज्वरनिबर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥ १० ॥
जम्बीरद्रवयोगेन अजीर्णज्वरनाशनः ।
अजाजीगुडसंयुक्तो विषमज्वरनाशनः ॥ ११ ॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णा वटीचतुष्टयम् ॥ १२ ॥
स्त्रीबालवृद्धक्षीणेषु चार्द्धमात्रा प्रकीर्त्तिता ।
अतिवृद्धे च क्षीणे च शिशौ चाल्पवयस्यपि ॥ १३ ॥
तुर्य्यमात्रा प्रदातव्या व्यवस्थासारनिश्चिता ।
नवज्वरे महाघोरे यामैकात् नाशयेद् ध्रुवम् ॥१४॥
मध्यज्वरे तथा जीर्णे त्रिरात्रात् नाशयेद् ध्रुवम् ॥
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञकम् ॥१५॥

सुप्रथितं ज्वरे योगवरं मृत्युञ्जयरसमाह—अव्यक्त इति-न व्यज्यते स्म नञ्विपूर्वकः 'अञ्जूव्यक्तादौ' रौधादिक स्तस्मात्कर्मणि क्ते "यस्य विभाषेति" इडभावे कुत्वे चर्त्वे च अव्यक्तः । अव्यक्तः शङ्करे विष्णौ……अस्फुटे त्वभिधेयवदिति विश्वः । रसपक्षे यावद् गुणस्याभिव्यक्तिर्न भवति तावदव्यक्तत्वम् । सिद्धिद इति सिद्धिं रोगनिराकरणरूपां ददातीति सिद्धिदः कार्यसिद्धिदश्च । शुद्धः उभयत्रापि, एकार्थः । रोगघ्नो=रोगशान्तिकरः पार्थिवपूजादिभिः तुष्टः शिवो रोगनाशको भवति । कीर्तिवर्धनयशःप्रदशब्दौ,

उभयत्र स्पष्टार्थौ । शिवो रोगनिवर्तकत्वेन कल्याणकरत्वेन च । मृत्युं=मरणं जयतीति मृत्युञ्जयो रसः शिवश्च । मृत्युञ्जयः कृत्तिवासा ( अमरः ) साक्षात् शिवः स्मृतः ॥ ४ ॥

विषस्येत्यादि—पिप्पलीकणाः=पिप्पलीतण्डुलानि । सर्वत्र समभागः=सर्वे समानमानाः, मुद्गमानां=मध्यमप्रमाणशुष्क मुद्गधान्यप्रमाणाम्, सौरविशोधितमातप शुष्कम् ! सर्वज्वर-निवृत्तये, अनिश्चितकारण सर्वविधज्वरशान्तये दध्युदकमत्र पल-मानम् । अजाजी=कृष्णजीरकं तन्मात्रा माषमिता, गुडस्तु एक-वर्षपुराणो द्विगुणो ग्राह्यः । महाघोरे-दत्तः सन् यामैकात् तं, नाशयेत् । एवं मध्यज्वरेऽपि ज्ञेयम् । यकृति प्लीह्नि विवृद्धे पुराण-विषमे निर्गुण्डी-आर्द्रकरसेन प्रत्यहं त्रिः प्रयुक्तो नातिचिराय चमत्करोति[1] । वातपित्तज्वरे मधुना, पित्तप्रधाने अरतिदाह-पिपासादिषु शर्करामधुरेण धान्यकपटोलनिम्बूकरसाद्यन्यतमानुपानेन हिमोपलशीतीकृतेन, शिरोगौरवे वेदनायां मलबन्धे च पर्णपत्रार्द्रक-रसेन, अतिसारे च जीरकमधुना प्रयोज्यः ।

अनुपदं पञ्चवक्त्ररसोऽ ( ६१ श्लो. ) पि नामभेदेन दत्तः तत्र धत्तूररसस्य भावना विशेषा ॥ ५-१५ ॥

मृत्युञ्जय रस अव्यक्त, सिद्धिदाता, शुद्ध रोगनाशक, कीर्त्तिवर्धक, यशःप्रद तथा साक्षात् कल्याणदाता है । शिव भी अव्यक्त, आठ सिद्धियों का देने वाला, शुद्ध, भवरोगनाशक, कीर्त्तिवर्द्धक तथा यश देने वाला है ।

शुद्ध विष, मिरच चूर्ण, पिपली चूर्ण, शुद्ध गन्धक, सुना

१. ज्वरस्य पुनरावर्त्तनमपि निरुणद्धि ।

सुहागा; एक २ भाग, शुद्ध हिंगुल दो भाग लें। सबको खरल में जल से पीस मूंग के दाने के समान गोली बना लें।

इस मृत्युञ्जय रस में हिङ्गुल को जम्बीरी नीबू के रस से शुद्ध करके डाले, यदि हिङ्गुल के स्थान में शुद्ध पारा डालना चाहें तो गन्धक के समभाग ही अर्थात् एक भाग शुद्ध पारा डालें और पारा गन्धक की कज्जली करलें। वत्सनाभ विष को गोमूत्र में शुद्धकर और धूप में सुखाकर डालें।

यह रस मृत्युरूप ज्वर को हरता है इस कारण इसे मृत्युञ्जय रस कहते हैं। अथवा इससे मृत्यु अर्थात् ज्वरादि रोगों से होने वाली अकाल मृत्यु जीती गई है इसलिए इसे मृत्युञ्जय रस कहते हैं।

इसे शहद में मिला चाटने से सब प्रकार के ज्वर निवृत्त होते हैं। दही के जल के अनुपान से दें तो वातज्वर निवृत्त होता है। अदरक के रस के साथ पीने से दारुण सन्निपात दूर होता है। जम्बीरी नीबू के रस से अजीर्णज्वर नाश होता है। काला जीरा चूर्ण और पुराने गुड़ के साथ देने से विषमज्वर नष्ट होता है।

ज्वर का वेग तेज हो, ज्वर महाघोर हो, पुरुष भी जवान हो तो इस रस की पूर्णमात्रा दे सकते हैं। पूर्ण मात्रा चार गोली की है। स्त्री, बालक, वृद्ध, क्षीण इनको दिन भर में आधी मात्रा एक वार में मूंग से आधी गोली दे सकते हैं। अतिवृद्ध अतिक्षीण तथा छोटे बालकों को भी चौथाई मात्रा दिन भर में दी जा सकती है परन्तु एक वार में एक मूंग की चौथाई मात्रा

देनी चाहिए। महाघोर नवीन ज्वर का वेग इसके सेवन से एक पहर भर में निश्चित कम हो जाता है। मध्यम ज्वर में और जीर्ण ज्वर में इसे दें तो तीन दिन में ज्वर नाश होता है। सन्निपात और अजीर्णज्वर को एक सप्ताह में नाश करता है ॥४-१५॥

जयावटी—

विषं त्रिकटुकं मुस्तं हरिद्रां निम्बपत्रकम्।
विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम्॥
चणकाभा वटी कार्या स्यात् जया योगवाहिका॥१६॥

जयावट्याम्--चणकाभा=रक्तिद्वयमिता, योगवाहिका=अनुपानभेदेन विविधगुणकरी, तथा हि-वातज्वरे-मधुना आर्द्रकरस मधुना वा, पित्तज्वरे दाहादिषु कारवल्लीधान्यक पर्पटाद्यन्यतम रसेन मधुमधुरेण, निरामज्वरे पुरातनज्वरे च गुडूचीरसेन, यकृत्प्लीहवृद्धौ पिप्पलीचूर्णमधुना, ज्वरातिसारे शुण्ठीजलेन, चिप्पे (नखरोगे) जलेन प्रलेपो त्वरितं फलति। केचनाऽत्र जयन्तीमूलचूर्णं मूलेऽनुक्तमपि सर्वसमानमानं ददते॥ १६॥

शुद्ध विष, सोंठ चूर्ण, मरिच चूर्ण, पिप्पली चूर्ण, मोथा चूर्ण, हल्दी चूर्ण, नीम के पत्तों का चूर्ण, वायविडंग का चूर्ण; एक २ भाग ले। सबको बकरी के मूत्र में घोट चने के समान गोली बनावें। यह जयावटी योगवाही है जिस अनुपान से दें वैसा ही गुण करती है। यह रस पैत्तिक एवं रक्तपित्त से उत्पन्न होने वाले ज्वरों में अतीव प्रशस्त है॥ १६॥

जयन्तीवटिका—

विषं पाठाऽश्वगन्धा च वचा तालीशपत्रकम् ।
मरिचं पिप्पली निम्बमजामूत्रेण तुल्यकम् ॥
वटिका पूर्ववत् कार्य्या जयन्ती योगवाहिका ॥१७॥

जयन्तीवट्याम्—पाठा एतन्नाम्नैव प्रसिद्धा लताम्बष्ठाख्या, अश्वगन्धा प्रसिद्धं वणिग्द्रव्यम्, असगन्ध इति ॥ १७ ॥

शुद्ध विष, पाठा चूर्ण, असगन्ध चूर्ण, बच का चूर्ण, तालीशपत्र का चूर्ण, मिरच चूर्ण, पिप्पली चूर्ण, नीम के पत्तों का चूर्ण, एक २ भाग लें सब को मिला बकरी के मूत्र में पीस कर चने के समान गोली बनालें । यह जयन्ती वटी भी योगवाही है । अर्थात् सब रोगों को भिन्न २ अनुपानों से दूर करती है ॥ १७ ॥

जयाजयन्ती-वटीप्रयोगविधिः ।

जयन्ती वा जया वाऽथ क्षीरैः पित्तज्वरापहा
मुद्गामलकयूषेण पथ्यं देयं घृतं विना ॥ १८ ॥
जयन्ती वा जया वाऽथ सक्षौद्रमरिचान्विता ।
सन्निपातज्वरं हन्ति रसश्चानन्दभैरवः ॥ १९ ॥
जयन्ती वा जया वाऽथ विषमज्वरनुद् घृतैः ।
सर्वज्वरं मधुव्योषैः गवां मूत्रेण शीतकम् ॥ २० ॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा ।
जयन्ती वा जया वाऽथ माक्षिकेण च कासजित् ॥२१॥

जयन्ती वा जया क्षीरैः पाण्डुशोथविनाशिनी ॥२२॥
जयन्ती वा जया वाऽथ तण्डुलोदकपानतः ।
अश्मरीं हन्ति नो चित्रं मूत्रकृच्छ्रन्तु दारुणम् ॥२३॥
जयन्तीं वा जयां वाऽथ गोमूत्रेण युतां पिबेत् ।
हन्त्याशु काकणं कुष्ठं सुलेपेन च तद् द्रुतम् ॥२४॥
द्विनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाययेत् ।
जयन्ती वा जया वाऽथ मेहं हन्ति सुराह्वयम् ॥२५॥
जयन्ती वा जया वाऽथ मधुना मेहजिद्भवेत् ।
लोध्रमुस्ताऽभयातुल्यं कट्फलञ्च जलैः सह ॥
क्वाथयित्वा पिबेच्चानु मधुना सर्वमेहजित् ॥ २६ ॥
जयन्तीं वा जयां वाऽथ गुडैः काष्णजलैः पिबेत् ।
त्रिदोषोत्थं हरेद् गुल्मं रसश्चानन्दभैरवः ॥ २७ ॥
जयन्ती वा जया हन्ति शुण्ठ्या सर्वं भगन्दरम् ।
जयन्ती वा जया वाऽथ तक्रेण ग्रहणीप्रणुत् ॥२८॥
जयन्ती वा जया वाऽथ रसश्चानन्दभैरवः ।
रक्तपित्ते त्रिदोषोत्थे शीततोयेन पाययेत् ॥ २९ ॥
जयन्ती वा जया वाऽथ भृङ्गद्रावैर्निशान्ध्यनुत् ।
जयन्तीं वा जयां वाऽथ घृष्ट्वा स्तन्येन चाञ्जयेत् ।
स्रावणं सर्वदोषोत्थं मांसवृद्धिञ्च नाशयेत् ॥ ३० ॥

प्रयोगविधौ क्षीरैः—धारोष्णगोदुग्धैः कृष्णदुग्धेन वा प्रत्यहं त्रिः प्रयोगे झटिति ज्वरहानिर्भवति । रसश्चानन्दभैरव इति-अतिसारे (३-४ श्लो०) एतेन विषयुक्तानां सर्वेषां रसाना मत्रोक्तानुपानान्यतिदिश्यन्ते । घृतैः=गव्यघृतैः । शीतकं = शीतपूर्वकज्वरम् । चन्दनस्य= रक्तचन्दनस्य तोलकद्वयरक्तचन्दनस्य क्वाथेन प्रातः सायं जयावटीयोगो- रक्तपित्तज्वरे भवति । माक्षिकेण = मधुना । पाण्डुशोथविनाशिनी= पाण्डौ शोथे च क्षीरैः=केवलक्षीरपथ्येन नान्यत्पथ्यमत्र देयम् । अश्मरीं=यकृद्वृक्कगवीनीवस्त्यन्तर्गताम् । काकणकुष्ठे च बहिरन्तः प्रयोगः । लोध्रमुस्तेति-चत्वारि द्रव्याणि समानानि । भृङ्गद्रावैः=कृष्णभृङ्गराजरसैः । तन्मानञ्च तोलकद्वयं द्विस्त्रिर्वा प्रत्यहम् । एतेन यकृद्दोषनिवृत्त्या निशान्ध्यमपगच्छति । मांसवृद्धि= नेत्रमांसवृद्धिम् । रसयोगसागरे तु अत्र गन्धकयोगोऽधिकतयादत्तः अत्र प्रोक्तानुपानानि अन्ययोगेष्वपि यथायथं योज्यानि ॥१८-३०॥

जयावटी या जयन्ती वटी दोनों में से किसी एक को भी दूध के साथ दें तो पित्तज्वर नाश होता है। इसके साथ ही मूंग और आंवले का रस बना कर बिना घी डाले पथ्य देना चाहिये।

जया वा जयन्ती आनन्दभैरव को शहद और काली मिरच के चूर्ण के साथ मिलाकर दें तो सन्निपात दूर होता है। जया और जयन्ति को घी के साथ दें तो विषमज्वर दूर होता है। सोंठ, मिरच, पिप्पली के चूर्ण तथा शहद से मिला कर दें तो सब ज्वर दूर होते हैं। गो के मूत्र के साथ दें तो शीतज्वर शान्त होता है।

लालचन्दन के क्वाथ से दें तो रक्तपित्त ज्वर दूर होता है। शहद से दें तो खांसी नष्ट होती है। इन्हें दूध के साथ दें तो पाण्डु एवं शोथरोग नाश होते हैं। यदि कच्चे चावलों को ६ गुने जल में भिगो कर उस जल से दें तो पथरी तथा भयङ्कर मूत्रकृच्छ्र निःसंशय नाश होते हैं। गोमूत्र से रोगी पीवे तो काकण, कुष्ठ दूर होता है। इसी जया वा जयन्ती को यदि गोमूत्र से घिस कर लेप भी करें तो कुष्ठ और भी शीघ्र अच्छा होता है। केतकी की जड़ दो निष्क लें और उसे जल से पीस उस के साथ इस गोली को खिलावें तो सुरामेह को दूर करती है। इस गोली को मधु के साथ खावें तो प्रमेह को दूर करती है। इसी जया वा जयन्ती को खाकर अनुपान रूप में लोध, मोथा, कायफल और हरड़ इन चारों को समभाग ले क्वाथ बना के शीतल होने पर शहद मिला कर पावें तो सब प्रमेह नाश होते हैं आनन्दभैरव रस जया वा जयन्ती को पुराने गुड़ तथा गुनगुने जल से पीवे तो त्रिदोषजनित गुल्म नष्ट होता है। इसी गोली को सोंठ से खावें तो सब प्रकार का भगन्दर दूर होता है। इसे तक्र के साथ पीवें तो ग्रहणी-रोग नाश होता है। आनन्द भैरव रस जया वा जयन्ती को शीतल जल से दें तो त्रिदोषज रक्तपित्त में लाभ होता है। जया वा जयन्ती को भांगरे के रस से अञ्जन करें तो रतौंधा रोग दूर होता है। इसी गोली को स्त्री के दूध से घिस कर आंखों में डालें या अञ्जन करें तो आंखों से पानी जाने का रोग तथ सर्वदोषज मांसवृद्धि रोग आराम होता है॥ १८-३०॥

भस्मेश्वरयोगः—

भस्म षोडशनिष्कं स्यादारण्योपलकोद्भवम् ।
निष्कत्रयञ्च मरिचं विषनिष्कञ्च चूर्णयेत् ॥ ३१ ॥
अयं भस्मेश्वरो नाम सन्निपातनिकृन्तनः ।
पञ्चगुञ्जामितं खादेदार्द्रकस्य रसेन तु ॥ ३२ ॥

भस्मेश्वर योगे—आरण्योपलभस्ममृत्तिकादिहीनं ज्ञेयम्, विषञ्च जलेनार्द्रीकृत्य मसृणतरं मर्दयित्वा मेलनीयम् । पञ्चगुञ्जामितमिति व्यवहारस्तु सामत्रिदोषज्वरे द्विरक्ति मात्रया भवति-एवं पञ्चबिन्दु धत्तूररसानुपानेन शीतस्वेदहरणे योज्यः ॥ ३१-३२ ॥

जंगली उपलों की राख सोलह निष्क मिरच चूर्ण तीन निष्क, शुद्ध विष एक निष्क तीनों को जलसे घोट पांच रत्ति की गोली बना ले । अदरक के रस के साथ देने से यह सन्निपात ज्वर के वेग को कम करता है । इसका नाम भस्मेश्वर योग है ॥३१-३२ ॥

स्वच्छन्दभैरवरसः—

ताम्रभस्म विषं हेम्नः शतधा भावितं रसैः ।
गुञ्जार्द्धं सन्निपातादि-नवज्वरहरं परम् ॥ ३३ ॥
आर्द्राम्बुशर्करासिन्धुयुतः स्वच्छन्दभैरवः ।
इक्षुद्राक्षासितैर्वारु दधि पथ्यं रुचौ ददेत् ॥ ३४ ॥

स्वच्छन्दभैरवे—ताम्रभस्म वारितरं ज्ञेयम्, विषं शृङ्गिकं मूल विषम्, द्वयं समानम्, हेम्नः सति सम्भवे कृष्णधुस्तूरस्य । शतधा= शतवारम् । संख्याया विधार्थे धा ५।३।४३. इति क्रियाप्रकारार्थे धा

प्रत्ययः। रसैः पञ्चाङ्गरसैः। यत्र ज्वरे प्रबलवातलक्षणानि प्रलापादीनि प्रधानानि भवन्ति तत्र परमुत्कृष्टम्। एवं नाडी-क्षीणतायां स्वेदसन्ततौ च प्रशस्तम्। रुचौ जातायां इक्षुद्राक्षासिता ऐर्वारु=फूट इति दधि च पथ्यं देयं नान्यत्॥ ३३-३४॥

ताम्रभस्म, शुद्धविष; दोनों को समभाग ले पीसें। फिर धतूरे के रस से सौ बार भावित कर आधी रत्ति की गोली बनाकर रखें। यह सन्निपात आदि तथा नये ज्वर के वेग को कम करती है। अतीस शक्कर और सेंधा नमक से मिला कर स्वच्छन्दभैरव रस को देना चाहिये। रुचि हो तो रोगी को गन्ने का रस, किशमिश, मिश्री ककड़ी तथा दही आदि पथ्य देवें मात्रा ½ सर्षप ॥ ३३-३४॥

ज्वरमुरारिरसः—

हिंगुलश्च विषं व्योषं टङ्कणं नागराभये।
जयपालसमायुक्तं सद्यो ज्वरविनाशनम्॥३५॥

ज्वरमुरारिरसे—व्योषं=त्रिकटु त्रिभागम्, अभया=हरीतकी, जयपालसमायुक्तम्=शुद्धजयपालबीजचूर्णयुतम्। "भागेऽनुक्ते समं ग्राह्यमिति सर्वे समानाः। कश्चित्तु जयपाल समा इति पृथक् छेदं कृत्वा जयपालस्य अष्टभागं ददाति। मलबन्धे वातपित्त-ज्वरे रक्तिमात्रया अस्य प्रयोगो विधेयः। यत्रातिसारस्वेददाहतन्द्रा-प्रलापादयस्तत्र बालवृद्धगर्भिणीनाञ्च नायं योज्यो रेचकत्वाद् विषयोगाच्च॥ ३५॥

शुद्ध हिंगुल, शुद्ध विष, सोंठ चूर्ण, मिर्चचूर्ण, पिप्पली चूर्ण, भुना

सुहागा, सोंठ चूर्ण, हरड़ चूर्ण, प्रत्येक १ भाग, शुद्ध जमालगोटा सबके समान। इन्हें मर्दन कर जल से १ रत्ति प्रमाण की गोली बनावे। इसके यथाविधि प्रयोग से विरेचन होकर ज्वर शीघ्र उतर जाता है ॥ ३५ ॥

नवज्वरेभांकुशः—

सगन्धटङ्कं रसतालकञ्च विमर्दितं भावय मीनपित्तैः ।
दिनत्रयं वल्लमितं प्रदद्यात् वृन्ताकतक्रौदनमेव पथ्यम् ।
नवज्वरेभांकुशनामधेयः क्षणेन घर्मोद्गममातनोति ।३६॥

नवज्वरेभांकुशे – टङ्कं=भृष्टटङ्कणचूर्णम्, अत्र तालकं पृथगेव मसृणं मर्दयित्वा तत्र कज्जलीं टङ्कणं च दत्त्वा पुनर्मर्दयेत्। तदनु दिनद्वयं त्रयं वा मीनपित्तै=रोहितमत्स्यपित्तै र्भावयेत्। भावनाविधिश्च आर्द्रतां यावद् बोध्यः, मात्रा द्विरक्तिमिता। विषमज्वरागमनात्प्राक्त्रिः प्रदेया। संप्राप्तेऽपि ज्वरे घर्मोद्भावनेन ज्वरह्रासाय। सन्निपातज्वरे चास्य प्रयोगो न कार्यः। विषमातिरिक्तेषु सन्दिग्धनिदानज्वरेषु विशेषतः कफप्रधाने ज्वरे प्रयोगो भवति। अत्र मीनपित्तं तालकं च विशेषतो ज्वरघ्नम्। पथ्यमत्र वृन्ताकं= बैंगन इति भाषा, तक्रमोदनं पुराणतण्डुलकृतं भृष्टतण्डुलकृतं लघुभवति। अत्र जलसेकावगाहोऽपि ये रसा इत्यादिना (१६८ श्लो.) विहितः।

रसजनितविदाहे शीततोयाभिषेको
मलयजघनसारालेपनं मन्दवातः।
तरुणदधिसिताढ्यं नारिकेलीफलाम्भो,

मधुरशिशिरपानं शीतमन्यच्च शस्तम् ॥

र.इ.चि. मणिटीका ६.७२ ।

अत्र रसेत्यत्र ज्वर इति पाठः प्रतिभाति। रसप्रयोगे विदाहस्य कुत्राप्यदर्शनात्, तीव्रज्वरे च विदाहो भवति इति सर्वजनविदितम् ॥ ३६ ॥

शुद्ध गन्धक, शुद्ध पारा, भुना सुहागा, शुद्ध हड़ताल, प्रत्येक द्रव्य समभाग लें। कज्जली में अन्य द्रव्य मिला कर पीसें। पश्चात् तीन दिन तक रोहू मछली के पित्त से इसको भावित करें। फिर इसकी दो रत्ति की गोली बना लें। इसके प्रयोग से शीघ्र ही पसीना आ जाता है। इसमें पथ्य बैंगन और तक्र तथा चावल देने चाहियें। इसका नाम नवज्वरेभांकुश है। मात्रा-१ रत्ति. ॥ ३६ ॥

त्रैलोक्यडुम्बररसः—

सूतार्कगन्धचपलाजयपालतिक्ता
पथ्या त्रिवृच्च विषतिन्दुकजं समांशम्।
सम्मर्द्य वज्रिपयसा मधुना द्विगुञ्जः
त्रैलोक्यडम्बररसोऽभिनवज्वरघ्नः ॥ ३७ ॥

विश्वतापहरणापरनाम्नि त्रैलोक्य ड(डु)म्बररसे—अर्कस्ताम्र-भस्म, चपला=पिप्पली, तिक्ता=कटुकी, पथ्या=हरीतकी, विषतिन्दुकजं= शुद्धकुपीलुबीजचूर्णम्। कुपीलुशोधनप्रकारश्च-गव्यघृते भर्जनात् प्रहरमात्रं गव्यदुग्धेन पाकाद्वा कुपीलुः शुद्ध्यति। वज्रिपयसा= स्नुही दुग्धेन, ग्रन्थान्तरे—"धूर्त्ताम्बुना सकलवासरमेष सूतः"

इति धत्तूररसभावनास्ति, न च स्नुहीपयसा। अन्यत्र स्नुहीदुग्धार्द्रक रसयोः क्रमेण भावना दत्ता। अत्र कणार्कविषतिन्दुक दन्तिबीजतिक्ता विशेषतो ज्वरघ्नाः। यत्र कोष्ठशुद्धिर्न भवति तत्रास्य विशेषतः प्रयोगः। एवंविधे रोगान्तदौर्बल्येऽपि भोजनानन्तरं बलाधान-बुभुक्षामलशुद्ध्यर्थं भवति प्रयोगः। धत्तूरार्द्रकरसभावितश्च वातव्याधिष्वप्युपकरोति। त्रैलोक्ये डम्बरो झटिति रोगहरणादिना आश्चर्यफलं ददातीति त्रैलोक्यडम्बरः॥ ३७॥

शुद्ध पारा, शुद्ध गन्धक, ताम्रभस्म, पिप्पली चूर्ण, शुद्ध जमालगोटा, कुटकी चूर्ण, हरड़ चूर्ण, निसोत चूर्ण तथा शुद्ध कुचले का चूर्ण प्रत्येक द्रव्य समभाग ले। कज्जली में अन्य द्रव्यों का चूर्ण मिला सेहुण्ड के दूध में घोटकर दो रत्ति गोली बनावें। इसे शहद से मिला कर देवें तो नये ज्वर के वेग को कम करता है। इसका नाम त्रैलोक्यडम्बर रस है ॥ ३७॥

प्रतापमार्त्तण्डरसः—

विषहिंगुलजैपाल-टङ्कणं क्रमवर्द्धितम्।
रसः प्रतापमार्त्तण्डः सद्योज्वरविनाशनः॥ ३८॥

प्रतापमार्त्तण्ड रसे—विषं टङ्कणजैपालं हिंगुलं क्रमवर्द्धितमिति हिङ्गुलस्थाने टङ्कणम् टङ्कणस्थाने हिङ्गुलमिति पाठो दृश्यते। मम तु मूलपाठ एवोचितः प्रतिभाति। जम्बीरफलजद्रावैर्मर्दयेद्यामयुग्मकम्। मरिचप्रमाणवटिकाश्छायाशुष्कास्तु कारयेत्। श्लोकमध्ये इत्यधिकः पाठः। सद्योज्वरविनाशनइत्यत्रसर्वज्वर-

निवारण इति पाठान्तरम् । प्रलापदाहस्वेदादौ नायं योज्यः, मलबन्धे च दीयते ॥ ३८ ॥

शुद्ध विष एक भाग, शुद्ध हिंगुल दो भाग, शुद्ध जमालगोटा तीन भाग, भुना सुहागा चार भाग। सब को मिला पीस कर रखें। इसकी एक रत्ति की मात्रा देने से ज्वर तुरन्त कम हो जाता है। इसका नाम प्रतापमार्त्तण्ड है ॥ ३८ ॥

तरुणज्वरारिरसः—

जैपालगन्धं विषपारदश्च तुल्यं कुमारीस्वरसेन पिष्टम् ।
अस्य द्विगुञ्जा हि सितोदकेन ख्यातो रसोऽयं तरुणज्वरारिः ३९
दातव्य एषोऽहनि पञ्चमे वा षष्ठेऽथवा सप्तम एव वाऽपि ।
जाते विरेके विजितो ज्वरः स्यात् पटोलमुद्गाम्बुनिषेवणेन॥४०॥

तरुणज्वरारिरसे—कुमारीस्वरसेन=घृतकुमारीपत्ररसेन । वातज्वरे वा वातपैत्तिकज्वरे सतिमलबन्धे ऽस्य प्रयोगा ज्ज्वरो ह्रसति विरेचनेन । स्वेदतन्द्राप्रलापादिषु नायं योज्यः । मात्रा १.र.।३९-४०॥

शुद्ध पारा, शुद्ध गन्धक, शुद्ध विष तथा शुद्ध जमालगोटा समभाग ले। पारा गन्धक की कज्जली बना घीकुमार के रस में पीस दो रत्ति की गोली बना। मिश्री के शर्बत के साथ देने से ज्वर नाश होता है। इसका नाम तरुण-ज्वरारि रस है। यह रस ज्वर चढ़ने के दिन से पांचवें छटे अथवा सातवें दिन देना चाहिये। इससे विरेचन होकर ज्वर उतर जाता है। पथ्य में पटोल तथा मूंग का रस देना चाहिये ॥ ३९-४० ॥

गदमुरारिः—

रसबलिशिललौहव्योषताम्राणि तुल्या-
न्यथ सदरदनागाभ्याञ्च भागः प्रदिष्टः ।
भवति गदमुरारिश्चास्य गुञ्जाद्वयं वै
क्षपयति दिवसेन प्रौढमामज्वराख्यम् ॥ ४१ ॥

गदमुरारि रसे—शिलेति=मनः शिला दरदनागयोरपि प्रत्येकमेको भागः। दरदो हिंगुलुः, नागं शीसकम् । र.यो. सागरे तु-सदरदनागाभ्यामत्र 'न्यथ रसदलभागो वत्सनाभः प्रदिष्टः, इति पाठोस्ति । व्यौषस्थाने व्यौमेति पाठः, गुञ्जाद्वयं वै, अत्र गुञ्जार्द्र-वारेति पाठान्तरम् । सामकफज्वरे सति वह्निमान्द्ये विशेषतः प्रयुज्यते । मात्रा १ र. ॥ ४१ ॥

शुद्ध पारा, शुद्ध गन्धक, शुद्ध मनसिल, लौहभस्म, सोंठचूर्ण, मिरच चूर्ण, पिपली चूर्ण, ताम्रभस्म, शुद्ध हिंगुल, सीसकभस्म । समभागले । जल से दो रत्ती समान गोली बनाले । इसके देने से दिन भर में ही तीव्र आमज्वर कम हो जाता है । इसका नाम गदमुरारि रस है ॥ ४१ ॥

विद्याधररसः—

रसो गन्धस्ताम्रं त्रिकटुकटुकी टङ्कणवरा-
त्रिवृद्दन्ती हेम द्यु मणि विषमेतत्समभिदम् ।
समस्तैस्तुल्यं स्याद्विमलजयपालोद्भवरजः
ततः स्नुक्क्षीरेण प्रचुरमृदितं दन्तिसलिलैः ॥४२॥

द्विगुञ्जाऽस्य प्रौढं जयति वटिका साममतुलं
ज्वरं पाण्डुं गुल्मं ग्रहणिगुदकीलोद्भवरुजः ।
मरुच्छूलाजीर्णं प्रबलमथ सामं क्रिमिगदं ।
विबद्धं प्लीहानं यकृतमपि विद्याधररसः ॥ ४३ ॥

विद्याधररसे--वरा=त्रिफला, दन्ती=दंतीमूलत्वक् चूर्णम्, हेम=कृष्णधत्तूरबीजानि, द्युमणिः=छायाशुष्काऽर्कमूलत्वक्चूर्णम्, इदं सर्वं समानम् । समस्तै रसादिभिः सर्वैः तुल्यं=समानम्, विमल-जयपालोद्भवरजः विमलं शुद्धं जयपाल बीजचूर्णम् । एतत्सर्व-मादाय खल्वे कृत्वा स्नुक्क्षीरेण=स्नुहीदुग्धेन, प्रचुरमृदितं=त्रिर्भावितमित्यर्थः, दन्तिसलिलैः=दन्तिमूलत्वक्क्वाथेन, प्रचुर मृदितमिति पदमत्रापि योज्यम् । गुदकीलो=अर्शः, विबद्धं=विशेषेण बद्धमूलम् । मात्रा १. गुञ्जा ऽपि भवति ॥४२-४३॥

शुद्ध पारा, शुद्ध गन्धक, ताम्रभस्म, सोंठचूर्ण, मिरचचूर्ण पिप्पली चूर्ण, कुटकी चूर्ण, भुना सुहागा, हरड़ चूर्ण, बहेड़ा चूर्ण, आंवला चूर्ण निसोत चूर्ण दन्तीमूल चूर्ण, शुद्ध धतूरे के बीजों का चूर्ण, आक की जड़ की छाल का चूर्ण, शुद्ध विष; समभाग लें। इसमें सब मिलित द्रव्यों के समभाग शुद्ध जमालगोटे का चूर्ण डालकर थोहर के दूध से दृढ़ता से मर्दन करें। फिर दन्तीमूल के क्वाथ से घोट कर दो रत्ती की गोली बनावें। इसकी एक गोली देने से तेज़ सामज्वर का वेग कम हो जाता है, पाण्डु गुल्म शान्त होते हैं, ग्रहणीरोग तथा बवासीर के मस्सों की पीड़ा

छूटती है। वायु शूल, अजीर्ण, आम, क्रिमिरोग, कब्ज तथा बढ़ी हुई तिल्ली वा जिगर को भी यह विद्याधर रस ठीक करता है ॥ ४२--४३ ॥

अमृतमञ्जरी—

हिंगुलं मरिचं टङ्कं पिप्पली विषमेव च।
जातीकोषं समं सर्वं जम्बीराद्भिर्विमर्दितम् ॥ ४४ ॥
गुञ्जाद्वयं त्रयं वापि देयञ्च सान्निपातिके।
कासश्वासौ जयत्याशु सर्वज्वरविनाशिनी ॥ ४५ ॥

अमृतमञ्जर्याम्—जातीकोषं = जावित्रीति, सर्वं समानमादाय जम्बीरस्वरसेन भावनात्रयम्। प्राय इयं ज्वरातिसारे प्रचरति, आर्द्रकरसेन। कासश्वासयोर्बिभीतकत्वगनुपानेन। र. यो. सागरे तु—
मर्दितमित्यनन्तरम्—

रक्तिमानं वटीं कुर्यादार्द्रकद्रवसंयुताम्।
वटीद्वयं त्रयं खादेत्सन्निपातं सुदारुणम् ॥
अग्निमान्द्यमजीर्णं च सामवातं सुदारुणम्।
उष्णतोयानुपानेन सर्वान् व्याधीन्नियच्छति ॥
कासं पञ्चविधं श्वासं सर्वाङ्गग्रहमेव च।
जीर्णज्वरं क्षयं चैव हन्यादमृतमञ्जरी ॥

इति पाठो दृश्यते ॥ ४४-४५ ॥

शुद्ध हिंगुल, मरिच चूर्ण, भुना सुहागा, पिप्पली चूर्ण, शुद्ध विष, जावित्री चूर्ण; समभाग लेकर जम्बीरी नीबू के रस से पीस दो या तीन रत्ती की गोली बना। इसकी एक गोली सन्निपातज्वर

में देनी चाहिये। इससे खांसी और श्वास को शीघ्र लाभ होता है तथा सर्व ज्वरों का नाश होता है ॥ ४४-४५ ॥

महाज्वराङ्कुशः—

सूतं गन्धं विषं तुल्यं धूर्त्तबीजं त्रिभिः समम्।
चतुर्णां द्विगुणं व्योषचूर्णं गुञ्जाद्वयं हितम् ॥४६॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम्।
महाज्वरांकुशो नाम ज्वराष्टकनिसूदनः ॥ ४७ ॥
ऐकाहिकं द्व्याहिकं वा त्र्याहिकञ्च चतुर्थकम्।
विषमञ्च त्रिदोषोत्थं हन्ति सर्वं न संशयः ॥ ४८ ॥

महाज्वरांकुशे-व्योषं मिलितानां चतुर्णां द्विगुणं द्वादश-भागमिति यावत्। अयं सर्वविधविषमज्वरे सामे निरामे वा सिद्धयोगत्वेन प्रचरति। शरीरवेदनायां शिरोगौरवे कासे कफज्वरे वातश्लेष्मज्वरे शेफाली, निर्गुण्डीआर्द्रकरसमधुना यथालाभमिलितैर्वा देयः। जम्बीरस्य च मज्जाभिरितिजम्बीरमज्जा-नुपानेन धत्तूरविषं नापकरोति। मज्जाशब्दस्य स्वरस इति व्याख्यानन्तु कपोलकल्पनामात्रम्। योगरत्नाकरे त्वत्र स्वर्ण-क्षीरीभावना विहिता। शार्ङ्गधरे-स्वर्णक्षीरीमूलचूर्णयोगो न च त्रिकटुयोगो दृष्टः। भ्रमाद्युपद्रवेषु, अस्य प्रयोगो निषिद्धः ॥४६-४८॥

शुद्ध पारा एक तोला, शुद्ध गन्धक एक तोला, शुद्ध विष एक तोला, शुद्ध धतूरे के बीज तीन तोले, सोंठ चूर्ण चार तोला, मिरच चूर्ण चार तोला, पिप्पली चूर्ण चार तोला ले। कज्जली

मिला पीस रखलें। इस महाज्वराङ्कुश रस की दो रत्ति की मात्रा जम्बीरी नीबू की मींग से अथवा अदरक के रस से दें। तो यह आठों प्रकार के ज्वर नाश करता है। इससे ऐकाहिक, द्व्याहिक, त्र्याहिक, चातुर्थक, विषमज्वर तथा त्रिदोषज ज्वर नाश होता है, इस में संशय नहीं ॥ ४६-४८ ॥

ज्वरकेशरिका—

शुद्धसूतं विषं व्योषं गन्धं त्रैफलमेव च।
जयपालं समं कुर्य्याद् भृङ्गतोयेन मर्दयेत् ॥ ४९ ॥
वटिकां गुञ्जमात्रान्तु कुर्याद् वैद्यः प्रयत्नतः।
प्रमाणे सर्षपाकारा बालानाञ्च प्रशस्यते ॥ ५० ॥
नारिकेलाम्बुना वाऽपि सर्वज्वरविनाशिनी।
नारिकेलजलं शस्तं त्रिकर्षं पाययेदनु ॥ ५१ ॥
सितया च समं पीता पित्तज्वरविनाशिनी।
मरिचेन च पीता सा सन्निपातज्वरं जयेत् ॥ ५२ ॥
पिप्पलीजीरकाभ्यान्तु दाहज्वरविनाशिनी।
विषमज्वरभूतोत्थं-ज्वरं प्लीहानमेव च ॥ ५३ ॥
अग्निमान्द्यमजीर्णञ्च श्वयथुञ्च सुदारुणम्।
शूलाजीर्णं तथा गुल्मं कुष्ठाष्टादश पित्तजान्।
ज्वरकेशरिका ख्याता तरुणज्वरनाशिनी ॥ ५४ ॥

